श्री विद्याभवन संस्कृत ग्रन्थमाला ४९



॥ श्रीः ॥

# …कृतसाहित्येतिहासः

आचार्यः श्रीरामचन्द्रमिश्रः



चौखम्बा विद्याभवन, वाराणसी-१

ओ३म्

॥ श्रीः ॥



विद्याभवन संस्कृत ग्रन्थमाला

४९

(12)

॥ श्रीः ॥

# संस्कृतसाहित्येतिहासः

लेखकः

आचार्यः श्रीरामचन्द्रमिश्रः

[ प्राध्यापकः, धर्मसमाज-संस्कृत-कालेजः, मुजफ्फरपुरम् ]






चौखम्बा विद्याभवन, वाराणसी-२२१००१

THE

VIDYABHAWAN SANSKRIT GRANTHAMALA

49



# SAṂSKṚTASĀHITYETIHĀSA

( The History of Sanskrit Literature. )

BY

Acharya Ramachandra Mishra

( Professor, Dharmasamaja Sanskrit College, Muzaffarpur. )





THE

CHOWKHAMBA VIDYABHAWAN

VARANASI-1

1976

पूज्य पितृदेव !

इष्टं त्वया यदहमध्ययनं विदध्यां
दृष्टः परन्तु फलितो न निजोऽभिलाषः ।
तस्मादिमां कृतिमहं करपल्लवे ते
भक्त्या नतेन शिरसाऽद्य समर्पयामि ॥

प्रणतो रामचन्द्रः ।



# प्रस्तावना

अथायमुपक्रम्यते प्रकाशयितुं संस्कृतभाषासन्दृब्धः संस्कृतसाहित्येतिहासः। यद्यपि इतिहासविषयकाः संस्कृतग्रन्थाः सन्ति तथापि मयाऽस्य ग्रन्थस्यावश्यकतामनुभूयैव ग्रन्थोऽयं लिखित ।

मया ये संस्कृतसाहित्येतिहासग्रन्थाः संस्कृते लिखिता दृष्टास्ते त्रयः, तत्रैकोऽतिसंक्षिप्तः सूचीपत्रप्रतिमो नाममात्रनिर्देशपरः, अपरो नितान्तपाश्चात्त्यदृष्टिकोणाश्रयेण सम्पादितो ग्रन्थपरिचयहीनश्च, तृतीयस्तु स्तुतिपरकः साहित्यसंग्रहपदाभिलप्यताधिकारी चावर्त्तत। किञ्च त्रयाणामप्येषां ग्रन्थानां लेखनकाले तत्तल्लेखकैः संस्कृतविद्यालयमहाविद्यालयेषु अधीयानानां छत्राणां कठिनता न ध्याने रक्षिता, भाषायाः सरलतायां न प्रयतितम्। अतोऽनुपपत्तीरिमा दृष्ट्वा मयाऽयं ग्रन्थो लिखितः।

भाषान्तरेषु ये संस्कृतेतिहासग्रन्थाः सन्ति तेऽपि संस्कृतच्छात्राणामावश्यकतां न पूरयन्ति, यतः संस्कृतच्छात्राः इतिहासविषयकप्रश्नानामुत्तराणि संस्कृते दित्सन्ति; पठन्ति चेतिहासमन्यस्यां भाषायाम्। परीक्षाकाले ते स्वीयान् भावान् यथावत् संस्कृते न प्रकाशयितुं क्षमन्ते। अपि चान्यभाषायां लिखितेषु संस्कृतसाहित्येतिहासपुस्तकेषु विचारा अतिविस्तृतया शैल्या प्रकटीकृताः, न च शक्नुवन्ति साधारणच्छात्रा विस्तृततयोक्तानर्थान् स्वयं सङ्क्षेप्तुम्, अतोऽपि ते कष्टमनुभवन्ति।

एतत्सर्वं मनसि निधाय मयायं ग्रन्थः प्रस्तुतः। अत्र ग्रन्थे सर्वेऽपि विषयाः संक्षिप्य प्रकटीकृताः। यथासम्भवं वर्गीकृत्यैव तर्का उपस्थापिताः। ग्रन्थानां परिचयायापि स्थानं दत्तम्। परीक्षायामुत्तरलेखे छात्रा यथा सौविध्यमनुभवेयुस्तदर्थं चेष्टितम्।

संस्कृतसाहित्येतिहासस्य लेखने यत् काठिन्यं मयाऽनुभूतं तस्य चर्चाऽत्र न नितान्ता अप्रासङ्गिकी स्यादिति साऽत्र प्रक्रम्यते।

प्रथमं काठिन्यमिदं यत् परे इतिहासलेखकाः पाश्चात्त्यलेखकानां विचारानन्धभावेनानुसरन्ति। यदिताननुसरामि तदाऽन्धस्येवान्धलग्नस्य विनिपातः पदे पदे इत्यनुसारं निपतामि। अथ तान् विरुन्धे तदा स्वग्रन्थेऽप्रामाण्यसन्देहमामन्त्रयामि। सेयमुभयतः पाशारज्जुः। अत्र विषये मया स्वविचारः साक्षी पृष्टस्तत्सम्मतिश्चादृता।

द्वितीयं काठिन्यमिदं यदितिहासलेखकस्य कृते यावन्ति पुस्तकानि अपेक्ष्यन्ते तावन्ति क्वचिदेकत्र न लब्धुं शक्यानि। भ्रान्त्वा तत्सङ्कलनमपि मादृशेन दासतापाशबद्धेन जनेन न सुकरम्, अतस्तदंशे स्मृतिरेव प्रमाणीकृता।

सर्वतः प्रधानं काठिन्यमिदं यत् संस्कृतसाहित्ये तिथिक्रमो नोपलभ्यते। तत्र कारणानि—

१. अन्यशाखासु प्राप्तप्रकर्षमपि संस्कृतसाहित्यमितिहासे नितान्तदुर्बलम्। येऽप्यङ्गुलि-गणनीया इतिहासप्रबन्धाः सन्ति तेऽपि कल्पनाबहुला एव।

२. इतिहासशब्दस्य योऽर्थः साम्प्रतिकयुगे गृह्यते प्राक्तनभारतीयपण्डितैः सोऽर्थो न गृहीतः। विश्रुतानां सर्वेषामेव पुरुषाणामितिहासं ते न प्रणयन्ति, केवलं सभ्यता-संस्कृत्योः संवर्धने कृतसाहायकानामेव चरितं तैरग्रथ्यत।

३. कर्मसिद्धान्तः, ईश्वरेच्छाविश्वासः, मन्त्रतन्त्रप्रवृत्तिः, वैज्ञानिकबुद्धेरनुदयश्च मिलित्वा संस्कृत इतिहासप्रसारं प्रतिबद्धवन्तः।

४. १२०० खीष्टाब्दपर्यन्तं भारतीयराजनीतिकघटनानां तादृशः कोऽपि क्रमो नाजायत, येन विश्वं प्रभावितं स्यादतोऽपीतिहासो मन्दप्रवृत्तिकोऽभूत्।

५. भारतीयानां हृदयेषु पूर्वं राष्ट्रियत्वभावना नासीत्। ते हि भारतीया देशस्य कृते बहु नाशोचन्, राष्ट्रियत्वभावना तु तेषु विदेशीयानामाक्रमणैरुत्पादिता। अतोऽपि ते इतिहासं नासृजन्।

६. राज्ञामितिहासेषु साधारणलोकस्य प्रीतिर्नासीत्, अतः कवय इतिहासं विहाय पुराणस्य वृत्तमुपजीवितवन्तः।

७. प्राचीनवाङ्मयस्य बहवो ग्रन्थाः प्रकाशं नायाताः। क्वचन गृहकोणे सीदत्सु तेषु वर्त्तमानोऽपीतिहासोऽवर्त्तमान इव।

८. कर्तृनामानि येषु ग्रन्थेषूपलभ्यन्तेऽपि तत्रापि परिचयविषये औदासीन्यमेव। बहुत्र स्थलेषु तु नाम्नः स्थाने वंश एव निर्दिश्यते, कात्यायन इत्यादि यथा।

एवं स्थितौ तिथिक्रमनिर्धारणं परिचयप्रदानं च शिलालिप्यादिस्वल्पप्रमाणाधारकं परोक्षमेव विश्वसितुं बाध्यते मादृशो लोकः।

अपि च साहित्येतिहासो न केवलं साहित्यकारजीवनकथामात्रं विषयीकरोति, तत्र तदीयकृतिमूल्यनिर्धारणादि प्रधानतयाऽपेक्ष्यते, तत्कार्यं च गभीरमध्ययनमपेक्षते। अस्यां स्थितौ प्रायः समधिका इतिहासलेखका ग्रन्थस्य दर्शनमपि न कृतवन्त इति स्वपूर्वतने-तिहासलेखकमुखापेक्षिणो भवन्ति। ग्रन्थमधीतवत्सु इतिहासप्रणयनप्रवृत्तिरपि स्यादिति क्वचिदेव प्राप्यते। मादृशो जनोऽपि सकलसाहित्यसंसारं परिचिनोतीति कथयन्नवश्यं विकत्थमानः कथ्यते।

ईदृश्यां विषमायामपि परिस्थितौ यन्मयात्र पदं न्यधायि तन्मम साहसमात्रम्।

मयाऽत्र ग्रन्थे प्रथमं वेदस्य तदङ्गसमुदयस्य च परिचयं प्रदाय यथाक्रमं काव्यानि परिचायितानि। काव्यानां परिचयप्रदानकाले मया तदेव वस्तु लिखितं यन्मया प्रामाणिकं स्वीकृतम्। इदं सम्भवति यन्मया समयादिनिरूपणे प्राञ्च इतिहासकारा अनुसृताः स्युः।

अत्रोपायान्तराभावान्मया तेऽनुसृताः, परन्तु काव्यकोटिनिर्धारणे मया स्वात्मैव साक्षीकृत इति पाठकाः प्रत्यक्षमेव वीक्षिष्यन्ते ।

ग्रन्थस्य कायो यथा न स्थूलः स्याद् विवक्षितश्चार्थो न हीयेत इति सावधानेन मया संक्षिप्ता सरणिराश्रिता, अथापि दुर्बोधतां दवयितुमतीव सतर्का दृगाश्रितैव ।

येषामितिहासकृतां ग्रन्थानहं पर्यालोचयं ते सर्वेऽपि मया धन्यवादैः सत्क्रियन्ते । सत्यन्त्विदं यद्यदि ते पथिप्रदर्शका नाभविष्यंस्तदा कार्यमिदं ममासाध्यमेवाभविष्यत् । तत्रापि विशिष्य धन्यवादार्हाः पं० बलदेवोपाध्यायाः, येषां ग्रन्थो ममादर्श आसीत् ।

ये च सुहृदो मया यथावसरं पृष्टाः स्वविचारेण मामकृतार्थयन् सर्वे ते सम्प्रति सकृदेव स्मृतिपात्रतां नीयमाना न शक्यन्ते धन्यवादमात्रप्रदानेन मामनृणं कर्त्तुमिति तदृण-सन्दानित एव स्थातुमिच्छामि ।

परगुणपरमाणून् पर्वतीकृत्य निजहृदि विकसतां सतां नित्यक्षमामयतया दोषैकदृशा-मसतां तु पुरः क्षमाप्रार्थनाव्यापारस्यापि स्वप्रवञ्चनामात्रसारतया क्षमाप्रार्थनामन्तरैव समापयामि प्रस्तावनामिति शम् ।

श्रीकृष्णजन्माष्टमी
२०१७ वि०

विदुषां वशंवदः
रामचन्द्रमिश्रः

# विषयनिर्देशः

निर्देशिका—अत्र ग्रन्थे सर्वत्र समयः ख्रीष्टाब्दैरेव लिखितः।



॥ श्रीः ॥

# संस्कृतसाहित्येतिहासः



राधासविभ्रमहगन्तनिपातजातपत्रं प्रमोदकुसुमालिभिरुल्लसन्तम् ।
कूले कलिन्ददुहितुस्ततकेलिशाखं कृष्णानुरागतरुमादरतः प्रपद्ये ॥ १ ॥

श्रद्धानतेन शिरसा पितरं 'मधुसूदनम्' ।
प्रसूं 'जयमणिं' चाहं प्रणमामि पुनः पुनः ॥ २ ॥
प्रणम्य शारदापादपद्मद्वन्द्वं यथामति ।
सुरत्नागितिहासोऽयं रामचन्द्रेण तन्यते ॥ ३ ॥
क्वाहं मन्दमतिः क्वायं विषयोऽतिदुरुत्तरः ।
विदन्नपीदं प्रयते वस्तुगौरवमोहितः ॥ ४ ॥
ग्रन्था अनेके सन्त्यत्र विषये विबुधैः कृताः ।
देववाचि तथान्यत्र भाषास्वपि सदाहृताः ॥ ६ ॥
प्रयासोऽयं ममच्छात्रवर्गसन्तोषहेतवे ।
अतः क्षमन्तां सुधियो ममेदमपि चापलम् ॥ ६ ॥

## विषय-प्रवेशः

संस्कृतभाषा देवभाषा कथ्यते। संस्कृतभाषायां मानवसंस्कृतेरितिहासः सुरक्षितोऽस्ति। इयं संस्कृतभाषाऽन्याभ्यः सर्वाभ्योऽपि भाषाभ्यः प्रकारे विस्तारे च महती, सौन्दर्ये विचारपवित्रतायां चान्यूना विद्यते। सत्यपि मन्दतमे विकासक्रमे क्रमोपनते च बाधासमुदये इतिहासारम्भसमयत एव संस्कृतभाषा विश्वस्यान्यासां भाषाणां समतां कुर्वती समायाति। अन्याभिर्विश्वस्य भाषाभिरस्याः प्रतिस्पर्धा गुणगणकृतैव। भारतेऽजायन्त विविधानि सामाजिकपरिवर्तनानि, धार्मिकाण्युत्थानपतनानि, वैदेशिकानामाक्रमणानि च, तथापि संस्कृतं सर्वदा समभावेन सर्वत्र व्यवहारवर्त्मन्यवर्त्तत।

संस्कृतं सर्वदा जीवितभाषाभावमभजत यतोऽत्रैव पूर्वतनाः सर्वेऽपि ग्रन्था अलिख्यन्त। आस्तां पुराणी कथा, संस्कृतस्य सम्प्रत्यपि जीवितभाषात्वे प्रमाणमिदं यदधुनापि संस्काराः प्रायोऽधिकसंख्यकभारतीयानां संस्कृत एव सम्पाद्यन्ते, महाभारतप्रभृतयो धर्मग्रन्था अधीयन्ते, स्वीया विचारा लोकविशेषैः संस्कृते प्रकाश्यन्ते, कविता विरच्यन्ते च।

भाषाविज्ञानपण्डितानां मते आर्यभाषा सेमिटिकभाषा चेति द्वयोरेव भाषयोर्व्यवहर्त्तारः सभ्यतां संस्कृतिञ्च सृष्टवन्तः। आर्यभाषापि पाश्चात्य-

पौरस्त्यभेदेन द्विविधा। अस्मिन्नार्यभाषायाः पाश्चात्यप्रभेदे यूरोपदेशस्य प्राचीना आधुनिक्यश्च ग्रीक-लैटिन-फ्रेञ्च-जर्मन-इङ्गलिशप्रभृतयो भाषाः समायान्ति। आर्यभाषायाः पौरस्त्यप्रभेदे ईरानीभाषा संस्कृतभाषा च समागच्छतः। ईरानीभाषा 'जेन्दअवेस्ता' नाम्ना व्यवह्रियते यत्र पारसीकानां धर्मग्रन्था निबद्धाः, संस्कृतभाषायां भारतीयानां धर्मग्रन्था निबद्धा इति प्रतीतमेव।

'संस्कृतम्' इति पदं सम् + कृ + क्त इति व्युत्पादितम्। भाषारूपार्थेऽस्य शब्दस्य प्रयोगः प्रथमतो वाल्मीकिरामायणे एव प्राप्यते—

'यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम्।
रावणं मन्यमाना मां सीता भीता भविष्यति ॥'

ततः पूर्वं तत्रार्थे भाषाशब्द एव व्यवह्रियते स्म। यास्केन पाणिनिना चापि लोकव्यवहृतभाषार्थे भाषाशब्द एव व्यवहृतः—

'भाषायामन्वध्यायञ्च' निरुक्ते—१।४
'भाषायां सदवसश्रुवः' पा० सू० ३।२।१०८
'प्रथमायाश्च द्विवचने भाषायाम्' पा० सू० ७।२।८८

मन्ये, यदा प्राकृतभाषायाः प्रचारो बहुलीभूतस्तदा ततो भेदं बोधयितुं लोके व्यवहृतपूर्वा तदानीं क्षीयमाणप्रचारा चेयं भाषा विद्वद्भिः संस्कृतपदेन व्यहृता जाता।

संस्कृतभाषाया रूपद्वयं, लौकिकं वैदिकञ्च। महाभारतकालात् पूर्वतनभाषा वैदिकभाषा, ततः परस्तात् प्रचारिता च लौकिकभाषा।

लौकिकभाषापेक्षया वैदिकभाषाया भेदं गमयितुं निम्नलिखितप्रयोगावलिः क्षमा—

| लोके— | वेदे— |
|---|---|
| देवैः— | देवेभिः |
| देवाः | देवासः |
| विश्वानि | विश्वा |
| परमे व्योमनि | परमेव्योमन् |
| तनुम् | तन्वम् वा तनुवम् |
| युष्मभ्यम् अस्मभ्यम् | युष्मे अस्मे |
| तन्मः | तन्मसि |
| शृणुत | शृणोत |
| जीविसुम् | जीवसे |
| पातुम् | पिबध्यै |
| गत्वा | गत्वाय |
| पीत्वा | पीत्वो |
| तारय ( लोट् ) | तारिषत् ( लेट् ) |

तदेवं लौकिकी वैदिकी च संस्कृतभाषा परिचेतुं शक्यते । उदाहरणार्थमत्र वैदिकी भाषा प्रदर्श्यते—

'मानो वधाय हन्तवे जिहीडानस्यरीरधः । माहृणानस्य मन्यवे ॥'
'कदा क्षत्रश्रियं नरमावरुणं करामहे मृडीकायोरुचक्षसम् ॥'
'अतो विश्वान्यद्भुताचिकित्वाँ अभिपश्यति । कृतानि या च कर्त्वा ॥'
'सनो विश्वाहा सुक्रतुरादित्यः सुपथाकरत् । प्रण आयूंषि तारिषत् ॥'
'इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युराचके ॥'

इदं निदर्शनं वैदिकयुगस्य प्रथमामवस्थामाश्रयन्तीं भाषां प्रकाशयति ।

ब्राह्मणग्रन्था मध्यमामवस्थामाश्रयन्तीं भाषां प्रकाशयन्ति, तत्र कतिचन प्रयोगाः संहितानुकूलाः कतिचन च लोकभाषानुकूलाः ।

संस्कृतभाषायाः स्वरूपे विचार्यमाणे इदं प्रागवधार्यं यदियं लोकभाषा व्यवहारभाषा वा आसीदथवा केवलशास्त्रभाषा एव अवर्त्तत ? अत्र मतद्वयम्, केचन कथयन्ति यत् प्राकृतमेव लोकभाषाऽऽसीत्, संस्कृतं शास्त्रभाषा साहित्यिकभाषा वाऽवर्त्तत, व्यवहारभाषा नासीत् ।

अपरे पुनः संस्कृतभाषैव पुरा लोकभाषा आसीदिति समर्थयन्ते, तेषामयमाशयः—पुराकाले भारतीया अनया संस्कृतभाषयैव स्वं मनोभावं प्रकटयन्ति स्म, क्रमशः शनैः शनैः प्राकृतोदये जाते संस्कृतभाषाया व्यवहारक्षेत्रं सङ्कोचमापत्, परन्तस्यामपि दशायां शिष्टाः संस्कृतभाषामेव व्यवहरन्ति स्म । अत एव रूपकेषु शिष्टानां संस्कृता भाषा तदन्यपात्राणाञ्च प्राकृतम् ।

संस्कृतस्य व्यवहारभाषात्वे निम्नलिखिता युक्तय उपस्थाप्यन्ते—

(१) वैदिकसंस्कृतभाषातो भिन्ना भाषा, तात्कालिकजनताया भाषा, 'भाषा' पदेन निरुक्तग्रन्थे यास्केन व्यवहृता । तेन हि वैदिककृदन्तशब्दानां सिद्धिः लोकप्रचलितधातुभ्यः प्रदर्शिता । 'भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते' इति हि तदुक्तिः । तस्मिन् समये भिन्नभिन्नप्रान्तेषु संस्कृतशब्दानां यानि रूपान्तराणि प्राप्यन्ते स्म, ये विशिष्टप्रयोगा भवन्ति स्म, तेषां समेषामुल्लेखोऽपि यास्केन कृतः, यथा—"-'शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति, विकारमेव त्वेनमार्या भाषन्ते शव इति' दातिर्लवनकर्मा प्राच्येषु प्रयुज्यते, दात्रमुदीच्येषु" एभिः साक्षिभिर्यास्कसमये संस्कृतस्य भाषितभाषात्वं सिद्ध्यति । यास्कस्य समयो ६०० ई० पू० कथ्यते ।

(२) पाणिनिरपि संस्कृतस्य व्यावहारिकं स्वरूपं भाषापदेनैव व्यवहृतवान्, किञ्च दूराद्धूते प्लुतमनुशासता पाणिनिना संस्कृतस्य भाषित-भाषात्वं स्पष्टमुक्तम्, यदि संस्कृतं भाषितभाषा नाभविष्यत्तदा दूरात्सम्बोधनावसरस्यैवाभावात्तत्र प्लुतत्वानुशासनमनर्थकं स्यात् । अपि च पाणिनिः भाषितभाषायामेव व्यवहर्तुं योग्यान् 'दण्डादण्डि', 'उदरपूरं भुङ्क्ते' इत्यादीन् शब्दाननुशशास, तदप्यस्याः संस्कृतभाषाया भाषितभाषात्वं गमयति ।

( ३ ) पाणिनेः परतो जातः कात्यायनः लोके व्यवहृतान् नवान् शब्दान् दृष्ट्वा तेषां सिद्धये नियमानुक्तवान्। अतः प्रतीयते यत्तदा संस्कृतं व्यवहार-भाषासीत्।

( ४ ) महाभाष्यकृता पतञ्जलिना देशभेदेन क्रियाभेदमाख्याय संस्कृतस्य भाषितभाषात्वमुच्यते स्म, तथाहि—हम्मतिः सुराष्ट्रे, प्राच्येषु रंहतिः, आर्यस्तु गच्छतिः प्रयुज्यत इति तेनोक्तम्। महाभाष्यकृता—वैयाकरणरथवाहकयोरेको रुचिरः संवाद उक्तः—'एवं हि कश्चिद्वैयाकरण आह—कोऽस्य रथस्य प्रवेता? सूत आह—अहमायुष्मानस्य रथस्य प्राजिता। वैयाकरण आह—अपशब्द इति। सूत आह—प्राप्तिज्ञो देवानांप्रियो न तु इष्टिज्ञः। इष्यत एतद्रूपमिति। वैयाकरण आह—अहो खल्वनेन दुरुतेन बाध्यामहे इति। सूत आह—न खलु वेञः सूतः, सुवतेरेव सूतः, यदि सुवतेः कुत्सा प्रयोक्तव्या, दुःसूतेनेति वक्तव्यम्॥' २।४।५६ सूत्रभाष्ये। अतो यां वाचं रथवाहकोऽपि व्यवहरति सा भाषितभाषा मन्तव्यैव।

( ५ ) भोजस्य समये विक्रमादित्यस्य समये च संस्कृतस्य प्रचुरप्रचार-आसीत्। एभिः प्रमाणैः संस्कृतस्य भाषितभाषात्वं सिद्धम्।

यद्यपि सम्प्रति साहित्यशब्दो वाङ्मयमित्यर्थे प्रयुज्यते यत्रार्थे 'लिटरेचर' ( Literature ) शब्दो वैदेशिकैः प्रयुज्यते, परन्तु संस्कृतभाषायां साहित्यशब्दस्य 'शब्दार्थौ' इत्यर्थः, सहितयोर्भावः साहित्यम्—सहितयोः कयोः? शब्दार्थयोः, तच्च साहित्यं क्वचिदन्यत्र शास्त्रे न भवति किन्तु काव्यशास्त्र एव। तत्र हि शब्दः अर्थश्च इत्युभय मिलितं सदेव कमप्याह्लादं जनयति, न केवलः शब्दो नापि वा केवलोऽर्थः, तथा चोक्तमपि—'न च काव्ये शास्त्रादिवत् अर्थप्रतीत्यर्थं शब्दमात्रं प्रयुज्यते, सहितयोः शब्दार्थयोस्तत्र प्रयोगात्। साहित्यं तुल्यकक्षत्वेन अन्यूनानतिरिक्तवृत्तित्वम्' इति व्यक्तिविवेकटीका। एतेन साहित्यशब्दस्य काव्यस्वरूपमर्थ इति सङ्कोचः कृतो वेद्यः। अपि च राजशेखरेण 'पञ्चमी साहित्यविद्येति यायावरीयः' इति काव्यमीमांसायामुक्तम्, आधुनिकप्रथानुसारेण तु सर्वासामपि विद्यानां साहित्यपदाभिलप्यत्वे काव्यमात्रपरकत्वेनात्र साहित्य-शब्दप्रयोगोऽयुक्तः स्यात्। किञ्च बिल्हणेन—

'साहित्यपाथोनिधिमन्थनोत्थं काव्यामृतं रक्षत हे कवीन्द्राः।
यदस्य दैत्या इव लुण्ठनाय काव्यार्थचौराः प्रगुणाभवन्ति॥'

इति स्वीये विक्रमाङ्कदेवचरितनामके महाकाव्ये प्रोक्तम्, तदपि साहित्यशब्दस्य काव्यार्थतां व्यञ्जयति।

'साहित्यदर्पणः' इति काव्यलक्षणस्वरूपादिबोधकग्रन्थस्य नामकरणमपि विद्यान्तरव्यावृत्तकाव्यमात्रवाचकस्य साहित्यशब्दस्य प्रयोगं प्रमापयति।

तदित्थं साहित्यशब्दोऽत्र काव्यमात्रपरक इति प्रतिपत्तव्यम्।

अतिप्राचीनमिदं संस्कृतसाहित्यम्, मा भूवन्ननादया वेदाः, परं तेऽति-प्राचीना इत्यकामेनापि स्वीकर्त्तव्यमेव। लोकमान्यतिलकमहोदयो यद् गणिता-

धारेण वेदानां ६००० ई० पू० निर्मितत्वं ततोऽपि वा पूर्वकालिकत्वं निर्धारित्तवाँस्तत्र नास्ति सन्देहस्यावकाशः। वेदकालादारभ्य प्रवहन्तीयं संस्कृतसाहित्यधाराऽबाधगत्याऽधुनानधि समागच्छति। अन्यभाषासाहित्येतिहासानां विलोकनेन प्रतीयते यत्तानि साहित्यानि परिस्थितावनुकूलायामुदयन्ते, कियन्तं कालं यावदग्रेसरन्ति, परन्तु परिस्थितिवैषम्ये प्रवाहः शिथिलीभवति, स चायं दोषः संस्कृतसाहित्यं न स्पृशति। वेदानां रचनायां जातायां तद्व्याख्यानभूता ब्राह्मणग्रन्था अरच्यन्त, ब्राह्मणग्रन्थेभ्यः पश्चादारण्यकानि, तदनन्तरमुपनिषदः, ततो रामायणं महाभारतं पुराणानि च। सेयं परम्परा कियता स्वरूपविपर्ययेण सह काव्य-नाटक-गद्य-चम्पू-कथा-स्मृति-तन्त्रादिनिर्माणविधया चिरमन्ववर्त्तत। सेयं संस्कृत साहित्यस्याविच्छिन्ना परम्परा न्यूनान्न्यूनमष्टसहस्रसंवत्सरेभ्यः समायातीति नितान्तमत्यं वचः। नास्ति विश्वस्मिन्नस्मिन् किमपि साहित्यमन्यद्यदविच्छिन्नधारमियन्ति दिनानि जीवितं समर्थ्येत।

अतिव्यापकं च संस्कृतसाहित्यम्। इदं सर्वाङ्गपूर्णं यतोऽत्र मानवजीवनोद्देश्यभूताः धर्मार्थकाममोक्षाख्याश्चत्वारोऽपि पुरुषार्था विवेचिताः। धर्मशास्त्रं प्रथत एव, अर्थशास्त्रमपि कौटिल्यादिप्रणीतमत्र न कुतोऽपि हीयते। कामशास्त्रमपि परमप्रसिद्धमत्रत्यम्, मोक्षशास्त्रस्यापि परमप्रकृष्टता सर्वसम्मता। एवं संस्कृते मानवजीवनोपयोगिनः सर्वेऽपि विषयाः साधु विवेचिता इति कथनं समुचितमेव। अत्र प्रेयःशास्त्रं श्रेयःशास्त्रं चोभयं समभावेन समेधितम्, अत एव चात्र भोगमोक्षयोरुभयोः सत्तया सकलसाहित्यापेक्षया विशिष्टता विद्यते।

अतिमहत्त्वपूर्णमपीदं संस्कृतसाहित्यम्। इदं प्राचीनतायां सर्वातिशायीति पूर्वमावेदितमेव। अस्य व्यापकत्वं परिमाणमहत्त्वञ्चापि प्रसिद्धम्। एतन्महत्त्वे प्रमाणानि यथा—

(क) संस्कृतसाहित्यं न केवलं भारतीयजनताया अपि तु चीनजापानकोरिया-प्रभृतिवासिनामपि लोकानामितिवृत्तं लङ्का-मलयद्वीपादिवासिनाञ्च इतिवृत्तं सुरक्षितरूपेण गोपायति। एतस्य प्रभावस्तुरुष्कादिदेशेतिहासेष्वपि पतित इतीतिहासविदां कृतेऽत्र महत् स्वाध्यायसाधनम्।

(ख) द्रविडभाषापरिवारं विहाय सर्वा भारतीयभाषाः प्राच्यसंस्कृतभाषायाम् यथा, तथा सर्वा अपि यूरोपीयभाषाः प्रतीच्यभाषायां सम्बद्धा भवन्ति, तेनोभयविधभाषासमुदयः भारोपीयभाषावर्ग इत्याख्यायते, भारोपीयभाषावर्गे संस्कृतभाषा सर्वज्येष्ठेति सर्वसम्मतम्।

(ग) धर्मविज्ञानं तदुपचयश्च यथा संस्कृतभाषाश्रयेण परिचीयते न तथा भाषान्तराश्रयेण।

(घ) भारते वर्षे न केवलं राजनीतिः, आयुर्वेदः, गणितफलितज्यौतिषे, अङ्कगणितम्, ज्यामितिः, एतान्येव अपि तु तन्त्रम् मन्त्रः, कामकला चापि साहित्यरूपेण शिक्ष्यते, तद्वैभवं संस्कृतस्यैव।

( ङ ) सूत्रसाहित्यं क्वापि परस्यां भाषायां न जातम्, इदमनन्यसाधारणं संस्कृतसाहित्यस्य महत्त्वम् ।

( च ) संस्कृतं न केवलं ब्राह्मणधर्मनामकं जातीयं ( National ) धर्मं प्रतिष्ठापितवत्, अपि तु बौद्धधर्मनामकं सार्वभौमं धर्ममपि प्रकाशयामास ।

( छ )मननशक्तिसमुद्भवानि नानादर्शनानि संस्कृते महत्त्वमानयन्ति ।

( ज ) यावत् संस्कृतसाहित्यं प्राप्यते, तावदेव रोम-यवनोभयसाहित्यापेक्षया परिणाहेऽत्यधिकम् ।

आभिर्विशिष्टताभिः संस्कृतसाहित्यस्य महत्त्वं प्रतिष्ठितं विद्यते । नैतावदेव सांस्कृतिकदृष्ट्यापि संस्कृतभाषया महत्त्वपूर्णं पदं लब्धव्यम्, भूखण्डं यदधुना 'हिन्द-चीन' नाम्ना ख्यायते तत्पूर्वं शुद्धं 'हिन्द' आसीत्, चतुर्दश शताब्दीपर्यन्तं तत्सुवर्णद्वीपनामकमासीत् । विक्रमादित्यसमयाच्चतुर्दशशताब्दीपर्यन्तं तत्र भारतीयं साम्राज्यमासीत्, तदा तत्र संस्कृतमेव राजभाषाऽवर्त्तत । कम्बोजदेशे या रमेरभाषा, यवद्वीपे च या कविभाषा सा भाषाद्वयी पूर्वमार्यावर्त्तीयवर्णमालायामेवालिख्यत । तदा तयोर्भाषयोः संस्कृतस्य तावान् प्रभावोऽवर्त्तत यत् संस्कृतोपादानानि गृहीत्वैव तयोः साहित्यसृष्टिः प्रारभत । यवद्वीपस्य कविभाषायां रामायणीयं महाभारतीयं चाख्यानमधुनापि प्राप्यते । अधुनापि यवद्वीपवासिनो भारतीया इव रामलीलादर्शनेनात्मानं विनोदयन्ति ।

बालीद्वीपस्य सभ्यता भारतीयसभ्यता, तत्रत्यो धर्मस्तन्त्रप्रधानः, वैदिकमन्त्रोच्चारणं सम्प्रत्यपि विकृतरूपेण तत्र विद्यते ।

मङ्गोलियादेशेऽपि संस्कृतस्य प्रसार आसीत् । तत्रानेके संस्कृतग्रन्था लब्धाः, महाभारताधाराणि तद्भाषानिबद्धानि बहूनि नाटकान्यपि तत्र लब्धानि, तेषु हिडिम्बबधं प्रधानम् । तदेवं संस्कृतस्य सांस्कृतिकं महत्त्वं प्रमापितं जायते ।

विशुद्धकला दृष्ट्यापि संस्कृतसाहित्यमतिमहत्त्वशालि, अत्र कालिदाससदृशः कविः, भवभूतितुल्यो नाटककारः, बाणभट्टसमो गद्यलेखकः, जयदेवसदृशो गीतप्रणेता चाजायत, यदीयाभिस्तत्तत्काव्यसृष्टिभिः शुद्धकलारूपेणापि विनोदितं विनोद्यते च भुवनम् ।

तुलनात्मकभाषाविज्ञानशास्त्रिणां कृते तु संस्कृतं जीवनमेवेति नितान्तमहत्त्वशालि संस्कृतम् ।

संस्कृतभाषानिबद्धसाहित्यमात्रस्य विवेचनाय सौकर्यं कालविभागेन सम्पाद्यते अत्र प्रथमः श्रुतिकालः कल्प्यताम्, यत्र संहिताब्राह्मणारण्यकोपनिषदोऽरच्यन्त । द्वितीयोऽपि स्मृतिकालनामा स्मर्यताम्, यत्र रामायण-महाभारतपुराणवेदाङ्गानि रचितानि । तृतीयः कालः सूत्रकालनाम्ना लौकिक-काव्योदयकालनाम्ना वा व्यवह्रियताम्, यत्र पाणिनिप्रणीतसूत्रसिद्धभाषाग्रंथितानि काव्यानि जातानि । चतुर्थश्च शास्त्रकालनाम्नाऽभिधीयताम्, यत्र तानि तानि शास्त्राणि न्यायवेदान्तादीनि साहित्यशास्त्रं चाजायन्त ।

अत्र ग्रन्थे प्रधानतया तृतीय एव कालो मीमांसितः, परन्तु अवतरणरूपेण प्रसङ्गसङ्गत्यै प्रथमद्वितीयकालयोरपि कियती चर्चा कृता, उपसंहाररूपेण च चतुर्थोऽपि कालः स्पृष्ट इव।

## वेदपरिचयः

संस्कृतसाहित्ये वेदानां स्थानं सर्वोपरि वर्त्तते। भारते धर्मव्यवस्था वेदायत्तैव। वेदो धर्मनिरूपणे स्वतन्त्रभावेन प्रमाणम्, स्मृत्यादयस्तु तन्मूलकतया। श्रुतिस्मृत्योर्विरोधे श्रुतिरेव गरीयसी। न केवलं धर्ममूलतयैव वेदाः समाहृताः, अपितु विश्वस्मिन् सर्वप्राचीनग्रन्थतयाऽपि। प्राचीनानि धर्मसमाज-व्यवहार-प्रभृतीनि वस्तुजातानि बोधयितुं श्रुतय एव क्षमन्ते।

प्रधानतया वेदो द्विविधः मन्त्ररूपो ब्राह्मणरूपश्च। मन्त्रसमुदाय एव संहिताशब्देन व्यवहृतः। ब्राह्मणरूपो वेदभागस्तु संहिताभागस्य व्याख्यारूप एव। स चायं ब्राह्मणभागो यागस्वरूपबोधकतया प्रथितः। ब्राह्मणग्रन्थोऽपि त्रिधा विभक्तो भवति--ब्राह्मणम्, आरण्यकम्, उपनिषदश्च। यज्ञस्वरूपप्रतिपादको ब्राह्मणभागः। अरण्ये पठिताः यज्ञस्याध्यात्मिकं रूपं विवेचयन्तो वेदभागा आरण्यकानि। उपनिषदो ब्रह्मबोधिकाः मोक्षसाधनानि, अयमेव भागो वेदस्यान्तरूपतया वेदान्त इत्युच्यते। ब्राह्मणभागो गृहस्थानामुपयोगी, आरण्यकभागो वानप्रस्थमाश्रितानाम्, उपनिषद्भागश्च सन्न्यस्तानामुपयोगीत्यपि कथयितुं शक्यते।

## वेदशब्दार्थः

विद्यन्ते धर्मादयः पुरुषार्था यैस्ते वेदाः, इति बह्वृक्प्रातिशाख्यम्। सायणस्तु अपौरुषेयं वाक्यं वेद इत्याह। इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो वेदयति स वेद इति भाष्यभूमिकायामुक्तम्, तत्र प्रमाणमपि तत्रैवोक्तम्—

'प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते।
एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता॥'

आम्नायः, आगमः, श्रुतिः, वेदः, इति सर्वे शब्दाः पर्यायाः।

सोयं वेदस्त्रयीति पदेनापि व्यवह्रियते, वेदरचनायास्त्रिप्रकारकत्वेन त्रयीति कथ्यते। या खलु रचना पद्यमयी सा ऋक्, या गद्यमयी सा यजुः, या पुनः समग्रा गानमयी रचना सा सामेति कथ्यते, तदुक्तं जैमिनिना—

'तेषामृग् यत्रार्थवशेन पादव्यवस्था, गीतिषु सामाख्या, शेषे यजुःशब्दः' इति। द्वितीयाध्याये प्रथमपादे ३२-३३-३४ सूत्राणि।

यास्कस्तु—'ता ऋचः परोक्षकृताः प्रत्यक्षकृताः आध्यात्मिक्यश्चेति भेदात् त्रिविधाः। ऋक्शब्दोऽत्र मन्त्रवचनः। यासु प्रथमपुरुषक्रियास्ताः परोक्षकृताः, यासु मध्यमपुरुषक्रियास्ताः प्रत्यक्षकृताः यासु चोत्तमपुरुषक्रियास्ता आध्यात्मिक्यः' इति।

अतः यत्र कुत्रापि प्राचीनग्रन्थे वेदार्थे 'त्रयी'पदं प्रयुक्तं तत्र सर्वत्र रचनात्रैविध्यं मनसि कृतं बोध्यम्।

यत्तु केचन "ऋग्यजुःसामाख्यास्त्रय एव वेदाः पूर्वमासन्, तद्यथा—
'अग्नेर्ऋचो वायोर्यजूंषि सामादित्यात् ।' छा० ब्रा० ६।१७
'अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् ।
दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम् ॥' मनु० १।१३

अतो वेदानां त्रित्वादेव तत्र त्रयीति व्यवहारो वास्तवो न प्रकारभेदकृतः" इति तदयुक्तम्, ऋग्वेदेऽपि अथर्ववेदनामोल्लेखदर्शनात् । भगवता पतञ्जलिनापि 'चत्वारो वेदाः साङ्गाः सरहस्याः' इति पस्पशाह्निके स्पष्टमुक्तम् । छान्दोग्यब्राह्मणे मनुस्मृतौ च यज्ञोपयोगिनो वेदा एव परामृष्टाः, नाभिचारिकः सामवेद इति त्रित्वमेवोक्तम्, एवं परत्रापि । जैमिनिस्तु मन्त्राणां त्रिप्रकारकतामेव लक्षितवान्, न वेदसंख्यां व्यवस्थापितवान् । अतो वेदाश्चत्वार एव, त्रयीति व्यवहारस्तु प्रकारकृतः । अथर्ववेदीयमन्त्रा अपि पूर्वोक्तप्रकारत्रयान्यतमरूपा एवेति बोध्यम् ।

## ऋग्वेदपरिचयः

ऋच्यते स्तूयते यया सा ऋक् । तादृशीनामृचां समूह एव ऋग्वेदः । यत्रार्थवशेन पादव्यवस्था सा ऋगिति मीमांसकाः । स च ऋग्वेदः सूक्तमण्डलभेदेन द्विधा विभक्तः । तत्र सूक्तं चतुर्विधम्—ऋषिसूक्तदेवतासूक्तच्छन्दःसूक्तार्थसूक्तभेदात् । एकर्षिदृष्टमन्त्राणां समूहो ऋषिसूक्तम् । एकदेवताकमन्त्राणां समूहो देवतासूक्तम् । समानच्छन्दसां मन्त्राणां समूहो नामच्छन्दःसूक्तम् । यावदर्थंसमाप्तानां मन्त्राणां समूहोऽर्थसूक्तम् । सुष्ठूक्तत्वात्सर्वं सूक्तमित्याख्यायते ।

ऋग्वेदः सोऽयं मण्डलानुवाकवर्गभेदेन अष्टकाध्यायसूक्तभेदेन च द्विधा । बालखिल्यसूक्तानि विहाय सम्पूर्णायामृग्वेदसंहितायां दशमण्डलानि, पञ्चाशीतिश्चानुवाकाः, अष्टोत्तरशतद्वयमिताश्च वर्गाः ( इति प्रथमो भेदः ), अष्टौ अष्टकानि, चतुष्षष्टिरध्यायाः, सप्तदशोत्तरसहस्राणि च सूक्तानि ( इति द्वितीयो भेदमार्गः )

मन्त्राश्च सर्वे दश सहस्रचतुःशतसप्तषष्टिमिताः ( १०४६७ ) इति शाकलः, शौनकानुक्रमणी तु दशसहस्रपञ्चशताशीतिमितान् ( १०५८० ) मन्त्रान् आह । अत्र भेदे कालभेदेन मन्त्रवृद्धिलोपावेव हेतुतयोन्नेयौ भवतः । शब्दसंख्या—१५३८२६, अक्षरसंख्या—४३२००० । सर्वेऽपि मन्त्राः चतुर्दशसु छन्दस्सु विभक्ता बोध्याः ।

ऋग्वेदगतमन्त्रद्रष्टारो ऋषयः गृत्समदविश्वामित्रवामदेवात्रिभरद्वाजवसिष्ठादयः सन्ति ।

ऋग्वेदस्य दशसु मण्डलेषु नवमं मण्डलं पवमानमण्डलनाम्ना प्रथितम् । तत्र हि सोमविषयकमन्त्राणां सङ्कलनं कृतम् । पवमानः—सोमः । पूर्वोक्ताः सप्तापि मन्त्रद्रष्टारो ऋषयो द्वितीयमण्डलतः सप्तममण्डलपर्यन्तगताभिः ऋग्भिः सम्बद्धाः, दशममण्डलमन्त्रा नानर्षिसम्बद्धाः । दशमे मण्डले न केवलं देवतास्तुतय एव, अन्यप्रकारका अपि मन्त्रा दृश्यन्ते ।

द्वितीयमण्डलादारभ्य सप्तममण्डलपर्यन्तस्य ऋग्वेदभागस्य रचना सतर्वः प्राचीना, दशमं मण्डलं सर्वतोऽर्वाचीनम्, शेषाणि मध्यकालिकानीति साम्प्रतिका आलोचकाः कथयन्ति ।

## सामवेदपरिचयः

यज्ञे चत्वारो ऋत्विजो भवन्ति – १ होता, अध्वर्युः, ३ उद्गाता, ४ ब्रह्मा । होता—आह्वानकर्त्ता, स हि यज्ञावसरे प्रक्रान्तदेवतानां प्रशंसायां रचितान् मन्त्रान् उच्चारयन् देवता आह्वयति, तत्कार्याय सङ्कलिता मन्त्राः स्तुतिरूपतया ऋचः समाख्याताः, तेषां संग्रह एव ऋग्वेदः । अध्वर्युर्विधिवद्यज्ञं सम्पादयति, तत्रावश्यकमन्त्रा यजूंषि, तत्संग्रहो यजुर्वेदः । उद्गाता—उच्चस्वरेण गानकर्त्ता, स हि स्वरबद्धान् मन्त्रानुच्चैर्गायति, तदपेक्षितमन्त्रसंग्रहः सामवेदः । ब्रह्मा—यज्ञनिरोक्षकः कृताकृतावेक्षणकर्मा, स हि सर्वविधमन्त्रज्ञः, तदपेक्षितो मन्त्रराशिरथर्ववेद इति कथ्यते ।

सामवेदस्य गानप्रचुरता प्रथिता, ऋच एव गीयन्ते, सामवेदे १५४९ मन्त्राः सन्ति, तेषु, ७५ मन्त्रा ईदृशा ये ऋग्वेदे न प्राप्यन्ते, शेषाः सर्वेऽप्युभयवेदसाधारणाः । सामवेदागतमन्त्राणां सप्त स्वराः, यतस्ते गीयन्ते, ऋग्वेदे पुनस्तेषामेव मन्त्राणां त्रय एव स्वराः, एतावानेव उभयवेदसाधारणानां साममन्त्राणामृग्वेदमन्त्रेभ्यो भेदः ।

सामवेदो द्विधा विभज्यते-पूर्वार्चिकम्, उत्तरार्चिकं च । पूर्वार्चिकमेव छन्दः, छन्दसी, छन्दसिका चेति त्रिभिरपि नामभिरभिधीयते । विषयानुसारं पूर्वार्चिकं चतुर्षु भागेषु विभज्यते--आग्नेयपर्व (अग्निसम्वन्धिनीभिर्ऋग्भिरुपेतम्), ऐन्द्रपर्व (इन्द्रसम्बन्धिनीभिर्ऋग्भिर्युतम्), पवमानपर्व (सोमविषयकम्), आरण्यकपर्व च ।

उत्तरार्चिकन्तु अनुष्ठाननिर्देशकम् । तस्य बहवो विभागाः—दशरात्रम्, संवत्सरम्, ऐकाहम्, अहीनम्, सत्रम्, प्रायश्चित्तम्, क्षुद्रञ्चेति प्रमुखास्तत्र भेदाः ।

## यजुर्वेदपरिचयः

यजूंषि गद्यानि । अध्वर्युणा यज्ञे उपयुज्यमाना मन्त्रा एवात्र यजुर्वेदे सङ्कलिताः, यज्ञस्य वास्तविकं विधानमध्वर्युरेव करोति, अतोऽयं यजुर्वेदो यज्ञविधेरतिसंनिकृष्टं सम्बन्धं रक्षति ।

यजुर्वेदो द्विप्रकारकः, कृष्णयजुः शुक्लयजुश्च ।

पौराणिकाः कथयन्ति—व्यासो वैशम्पायनाय वेदं प्रोवाच, स स्वशिष्याय याज्ञवल्क्याय । कुतोऽपि कारणाद् रुष्टो वैशम्पायनो याज्ञवल्क्यमुवाच—देहि मदधीतं वेदमिति । याज्ञवल्क्यो गुरुवचनपालनाय ततोऽधीतं वेदं सद्यो वान्तवान् । अन्ये वैशम्पायनशिष्यास्तित्तिरिरूपं धृत्वा याज्ञवल्क्येन वान्तं वेदं गृहीतवन्तः । स एवायं वान्तगृहीतो वेदः कृष्णयजुर्वेदः ।

वैशम्पायने कुपिते ततोऽधीतं वेदं विसृज्य याज्ञवल्क्यः पुनर्वेदाधिगतये सूर्यमाराधयामास, ततश्च वेदमाप, ततोऽयं वेदः शुक्लयजुर्वेदनाम्नाऽप्रथत । अनयोर्वेदयोर्महदन्तरम् ।

शुक्लयजुर्वेदे विनियोगवाक्यरहिताः केवला मन्त्रा विद्यन्ते, कृष्णयजुर्वेदे तु विनियोगवाक्यानि मन्त्राश्च। अतोऽमिश्रितरूपतया शुक्लयजुर्वेदः, मिश्रितरूपतया च कृष्णयजुर्वेद इति संज्ञा जातेत्यपि लोकाः कथयन्ति।

सोऽयं यजुर्वेदः ४० अध्यायान्, ३०३ अनुवाकान्, १९७५ कण्डिकाः (मन्त्रान्), २९६२५ शब्दान्, ८८८७१ अक्षराणि च बिभर्त्ति। अस्य वेदस्य प्रथमेऽध्याये दर्शपौर्णमासौ, द्वितीये पिण्डपितृयज्ञः, तृतीयेऽग्निहोत्रं चातुर्मास्येष्टिः, चतुर्थाध्यायादष्टमाध्यायपर्यन्तमग्निष्टोमविधानं सोमयागः, नवमे वाजपेयो राजसूयश्च, दशमे सौत्रामणिः, एकादशाध्यायादष्टादशाध्यायपर्यन्तम् अग्निचयनम्, उखाभरणम्, चितयः, रुद्रहः, शतरुद्रियम्, वसोर्धारा, राष्ट्रभृच्च। एकोनविंशतितमाध्यायात् परिशिष्टमारभ्यते, विंशे एकविंशे च सोमसम्पादनविधिः, तदनु पञ्चविंशतिपर्यन्तमश्वमेधः, ततः शेषे भागे पुरुषमेधसर्वमेधपितृमेधादिविवरणञ्च प्रपञ्चितम्। अन्तिमश्चाध्याय ईशावास्योपनिषद्रूपः।

शुक्लयजुर्वेदस्य संहितैव वाजसनेयिसंहिता कथ्यते। तादृशनामकरणे बीजं त्विदं कथ्यते यत् याज्ञवल्क्येनाराधितः सूर्यो वाजी भूत्वा तस्मै वेदं प्रोक्तवान् अतस्तदुक्ता संहिता वाजसनेयी संहिता समाख्याता।

शुक्लयजुर्वेदस्य माध्यन्दिनशाखा कण्वशाखा चेति द्वे शाखे। प्रथमा उत्तर भारते प्राप्यते, द्वितीया च महाराष्ट्रे। अनयोः शाखयोः संहिते भिन्ने सत्यावपि स्वल्पमेव भेदं धारयतः, बहुष्वंशेषु तुल्यता वर्त्तते।

कृष्णयजुर्वेदस्य चतस्रः शाखाः प्राप्यन्ते—

(क) तैत्तिरीयशाखा—इयं प्रधानशाखा, अत्र सप्तखण्डाः, ते च खण्डाः अष्टकशब्देन काण्डशब्देन च व्यवह्रियन्ते। प्रतिकाण्डं कतिपयेऽध्याया, ये प्रपाठकनाम्ना ख्याताः। इमे प्रपाठका बहुष्वनुवाकेषु विभक्ताः सन्ति।

(ख) मैत्रायणीसंहिता } इमे द्वे अपि संहिते तैत्तिरीयसंहितामनुकुरुतः,
(ग) काठकसंहिता } केवलं क्रमे यत्र तत्र पार्थक्यं विद्यते।
(घ) कठकापिष्ठलसंहिता—अर्धं एवास्या भागोऽधुनावध्यधिगतो विद्यते।

## अथर्ववेदपरिचयः

अभिचारक्रियायाः प्राधान्येन प्रतिपादकोऽयं वेदः अथर्वनामकर्षिणा दृष्टत्वात् अथर्ववेद इत्युच्यते। अत्र वेदे २० काण्डानि, ७३१ सूक्तानि, ५९८७ मन्त्रा विद्यन्ते। एषु मन्त्रेषु द्वादशशतमन्त्रा ऋग्वेदेऽपि दृश्यन्ते। विंशकाण्डे १५३ सूक्तानि सन्ति, तेषु द्वादशसूक्तानि अतिरिच्य शेषाणि सर्वाण्यपि ऋग्वेदस्य दशममण्डले समुपलभ्यन्ते।

अथर्ववेदस्य नव शाखा आसन्, परं सम्प्रति शौनकपिप्पलादसमाख्ये द्वे एव शाखे प्राप्येते। प्रचलिता अथर्वसंहिता शौनकशाखान्तर्गता, पैप्पलादशाखासंहितापि अनतिचिरेणैव मुद्रिता।

## ब्राह्मणग्रन्थपरिचयः

वेदो द्विविधो मन्त्ररूपो ब्राह्मणरूपश्चेत्युक्तं तदयं ब्राह्मणभागोऽपि वेद एव। ब्रह्म वेदस्तद्व्याख्या ब्राह्मणभाग इति केचित्। वेदशेषभूता इमे ब्राह्मणग्रन्था यज्ञानुष्ठानस्य विस्तृतं वर्णनं कुर्वन्ति। कतिचन कथा अपि ब्राह्मणेषु प्राप्यन्ते।

प्रत्येकवेदशाखानुसारेण ब्राह्मणा आरण्यकग्रन्थाश्च भिन्नाः सन्ति, तत्र ब्राह्मणा यथा—

ऋग्वेदस्य ऐतरेयब्राह्मणं कौषीतकिब्राह्मणञ्चेति ब्राह्मणद्वयम्। अनयोरैतरेयब्राह्मणमति प्रथितम्। अत्र अष्टौ पञ्चिकाः, प्रतिपञ्चिकं पञ्चाध्याया इति मिलित्वा ४० अध्यायाः सन्ति। कौषीतकिब्राह्मणे केवलं त्रिंशदध्यायाः।

सामवेदस्य बहवो ब्राह्मणभागाः सन्ति, येषु ताण्ड्यब्राह्मणं प्रसिद्धतरम्। अयं ग्रन्थः पञ्चविंशत्यध्यायशाली, अतएव पञ्चविंशब्राह्मण संज्ञयाऽपि प्रसिद्ध्यति।

कृष्णयजुर्वेदस्य तैत्तिरीयब्राह्मणनामा ब्राह्मणभागो विद्यते। शुक्लयजुर्वेदस्य शतपथब्राह्मणं नितान्तप्रसिद्धम्, अत्र शतमध्याया विद्यन्ते।

अथर्ववेदस्य गोपथब्राह्मणम्। अत्र खण्डद्वयमेव, प्रथमखण्डे पञ्चाध्यायाः, द्वितीये च षट्। ब्राह्मणग्रन्थेषु सर्वतो नवोऽयं ग्रन्थः कथ्यते।

एवमेव ऋग्वेदस्य आरण्यकद्वयम्, ऐतरेयमारण्यकम् शाङ्खायनारण्यकञ्च।

कृष्णयजुर्वेदस्य तैत्तिरीयमारण्यकम्।

सामवेदस्य जैमिनीयशाखायाः जैमिनीयोपनिषद्ब्राह्मणमेव तवलकारारण्यकमिति नाम्ना प्रसिद्धम्। अस्मिन् साममन्त्राणां शोभना व्याख्या कृता। इयं सामवेदारण्यसंहिता सत्यव्रतसामश्रमिणा १८७८ ई० वर्षे मुद्रयित्वा प्रकाशिता।

## उपनिषत्परिचयः

वेदान्ता उपनिषद इत्याख्यायन्ते। उपनिषच्छब्दस्य रहस्यमर्थः, अध्यात्मविद्यारहस्यप्रतिपादका वेदभागा उपनिषदः कथ्यन्ते।

मुक्तिकोपनिषदि उपनिषदां संख्या १०८ कथिता। तत्र १० उपनिषदः ऋग्वेदसम्बद्धाः, १९ उपनिषदः शुक्लयजुर्वेदसम्बद्धाः, ३२ कृष्णयजुर्वेदसम्बद्धाः, १६ सामवेदसम्बद्धाः, ३१ अथर्ववेदसम्बद्धाः। वेदान्ताचार्या एतासूपनिषत्सु कतिचनोपनिषदः स्वमतानुसारिव्याख्यया भूषितवन्तः। तासु दशोपनिषदः प्रसिद्धाः—ईश-केन-कठ-प्रश्न-मुण्ड-माण्डूक्य-तैत्तिरीय-ऐतरेय-छान्दोग्य-बृहदारण्यकोपनिषदः। श्वेताश्वतरोपनिषदेकादश्यपि प्रसिद्धा।

कतिचनोपनिषदो गद्यात्मिकाः, कतिचन पद्यात्मिकाः कतिचन गद्यपद्योभयात्मिकाश्च। आसामुपनिषदां रचनाकालो भिन्नभिन्नः, परं प्रसिद्धाः कतिचनोपनिषदो बुद्धकालात्प्राचीन एवेति सर्वसम्मतम्।

उपनिषदो भारतीयाध्यात्मविद्याया ज्वलन्ति रत्नानि। महर्षयो यानि आध्यात्मिकतत्त्वानि ज्ञानदृशा साक्षादकुर्वन् तानि सर्वाणि तत्त्वान्यत्र वर्णितानि।

सप्तदशशतके दाराशिकोहनामा शाहजहाँनाम्नः यवनसम्राजः पुत्रः ५० सङ्ख्याकाः उपनिषदः पारसोभाषायां ब्राह्मणपण्डितानां साहाय्येनानुवादितवान् ।

'शोपेन होवेर' (Shopen Hower) नामा प्रसिद्धो वैदेशिको दार्शनिक उपनिषदः स्वगुरुषु गणयति स्म । सम्प्रत्यपि पाश्चात्त्येषूपनिषदां महान् प्रभावो विद्यते, प्रायः सर्वास्वेव सभ्यभाषास्वासामुपनिषदामनुवादो जातः ।

उपनिषदोऽतिसरससरलशैल्या तत्त्वं ग्राहयन्ति, तेन तासां महत्त्वं लोकप्रियत्त्वं चानुदिनमवर्धत । आसां तत्त्वप्रकाशनशैली यथा—

'आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ।'
इन्द्रियाणि हयानाहुर्विषयाँस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥'

भगवद्गीताप्युपनिषदेवेति बोध्यम् ।

## वेदानां रचनायाः कालः

प्राचीना भारतीया विद्वांसो वेदानपौरुषेयान् मन्यन्ते, तेषां मते वेदरचनाकालविचारो निरर्थको दुरर्थकश्च । पाश्चात्त्या विद्वांसो यथाबुद्धिवैभवं वेदरचनाकालं निर्धारयन्ति, पाश्चात्त्यविचारसरणिविदो भारतीया अपि तेनैव मार्गेण वेदकालं निर्णेतुं यतन्ते । अत्र तद्विषयका कतिचन विचाराः प्रस्तूयन्ते ।

### १. मैक्समूलरमतम्

मैक्समूलरमहोदयस्य मतेन ऋग्वेदस्य रचना ११५० ई० पू० समीपे जाता। बुद्धधर्मोदयात् प्रागेव च ब्राह्मणग्रन्था अपि व्यरच्यन्त । बुद्धेन ब्राह्मणग्रन्थेषु विवेचितानामेव यागविधीनां कट्वी आलोचना क्रियते स्म, अपि चोपनिषत्समथितं कतिपयतत्त्वजातमात्मसात् क्रियते स्म' अतो बुद्धात् पूर्वतना (५०० ई० पू०) एव ब्राह्मणोपनिषद्भागाः सम्भवन्ति । वैदिकसाहित्ये चत्वारि युगानि–छन्दोयुगम् मन्त्रयुगम्, ब्राह्मणयुगम्, सूत्रयुगञ्च । प्रत्येकयुगविकासे तेन वर्षशतद्वयं कालः कल्पितः, तदनुसारेण बुद्धात् ६०० वर्षतः पूर्वं छन्दोयुगस्यास्तित्वं समायाति । अतः ऋग्वेदस्य रचना ११५० ई० पू० समयात् पश्चात्कालिकी न सम्भवतीति सम्प्रति ऋग्वेदस्य जातस्य ३२०० वर्षाणि जातानीति कथयितुं शक्यमिति तदाशयः ।

मैक्समूलरमहोदयेनायं कालः सम्भाव्यरूपेणोक्तो न तु निश्चयरूपेण, परं तदनुसारिणः पाश्चात्त्यास्तदीयैरेव तर्कैः कालममुं निश्चयरूपेण कथयितुं प्रवृत्ताः ।

### २. डॉ० अविनाशचन्द्रदासमतम्

अयं महानुभावः वेदे निर्दिष्टानि अनेकानि भूगर्भशास्त्रीयतत्त्वानि विशेषतः आर्यावर्त्ततश्चतुर्दिक्षु चतुःसमुद्रीस्थितिमाधारीकृत्य गणनाद्वारा वेदस्य समयं २५ सहस्रसंवत्सरपूर्वं मन्यते । इदमीयं मतम् 'ऋग्वेदिक इण्डिया' (Rigvedic India) नामके पुस्तके व्यक्ततयाऽनेन प्रतिपादितम् ।

३. वेदस्थितज्यौतिषतत्त्वाधारं मतम्

भारते षड् ऋतवो भवन्ति । अमी ऋतवः सूर्यसंक्रमणनिमित्तकाः । इदमपि प्रसिद्धं यत् प्राचीनकालादधुनापर्यन्तममी ऋतवः पश्चात्सर्पन्ति, अर्थात् पूर्वं यत्र नक्षत्रे यस्यर्त्तोरुदयो जायते स्म सम्प्रति स एवर्त्तुस्ततः पूर्ववर्त्तिनि नक्षत्रान्तरे उदितो भवति । पुराकाले वसन्तो वर्षादिरभवत्, अत एव तस्य प्रशस्ततया भगवद्विभूतिभाव उक्तो गीतायां—'ऋतूनां कुसुमाकरः' इति । सम्प्रति वसन्त-सम्पातः मीनसङ्क्रान्तिकालादारभते, मीनसङ्क्रान्तिश्च पूर्वभाद्रपदनक्षत्रस्य चतुर्थचरणे भवति । सेयं स्थितिर्नक्षत्राणां क्रमशःपश्चात्सर्पणेनोत्पन्ना । पूर्वं कदाचिद् वसन्तसम्पातः उत्तरभाद्रपद–रेवती–अश्विनी–भरणी–कृत्तिका–मृग-शिरःप्रभृतिषु नक्षत्रेष्वासीत्, ततः पश्चात्सर्पन्नयं वसन्तसम्पातः साम्प्रतिकीं स्थितिमनुप्रपन्नः ।

ज्योतिर्विदः सूर्यस्य संक्रमणवृत्तं २७ नक्षत्रेषु विभजन्ति, पूर्णं संक्रमण-वृत्तम् ३६० अंशानामस्ति । तत् प्रत्येकं नक्षत्रम् ३६० ÷ २७ = १३$\frac{1}{3}$ अंशानां चापं निर्माति । संक्रमणबिन्दुश्च ७२ वर्षेषु एकमंशं विहायापरमंशं प्रसर्पति । एवम् एकस्मान्नक्षत्रात् संक्रमणबिन्दुः परं नक्षत्रं याति, तत्र ७२ × १३$\frac{1}{3}$ = ९७२ वर्षात्मकः कालो लगति । सम्प्रति वसन्तसम्पातः पूर्वभाद्रपदनक्षत्रस्य चतुर्थ-चरणे भवति, यदा चायं कृत्तिकानक्षत्रे भवति स्म ततो वर्त्तमानस्थितेः प्राप्तये ४$\frac{1}{2}$ नक्षत्राणि लङ्घितानि, यदि एकत्र नक्षत्रे लङ्घनीय ९७२ वर्षात्मककालापेक्षा तदा ४$\frac{1}{2}$ नक्षत्रातिक्रमे ९७२ × ४$\frac{1}{2}$ = ४३७४ वर्षात्मकः कालोऽवश्यमपेक्षितः स्यात् । तदेवं वेदोक्तज्यौतिषतत्त्वानुसारेण वेदानां २५०० ई० पू० पूर्वकालि-कता प्रतीता भवति ।

४. शङ्करबालकृष्णदीक्षितमतम्

वैदिकीषु संहितासु नक्षत्रनिर्देशकानि बहूनि वर्णनानि प्राप्यन्ते । शतपथ-ब्राह्मणे लिखितम्—

'एकं द्वे त्रीणि चत्वारि वा अन्यानि नक्षत्राणि, अथैता एव भूयिष्ठा यत् कृत्तिकास्तद्भूमानमेव एतदुपैति, तस्मात्कृत्तिकास्वादधीत । एताह वै प्राच्या दिशो न च्यवन्ते, सर्वाणि ह वा अन्यानि नक्षत्राणि प्राच्या दिशश्च्यवन्ते ।' (शतपथ० २।१।२)

एतेनेदमुक्तं भवति यत् शतपथब्राह्मणरचनाकाले कृत्तिका नियमेन प्राच्या-मासन्, सम्प्रत्येताः कृत्तिकाः पूर्वदिग्बिन्दुतः ईषदुत्तरस्यां दिशि उदयं यान्ति । दीक्षितमहोदयस्य गणनया तादृशी ग्रहस्थितिः ३००० ई० पू० काले सम्भवति । अतः स एव शतपथस्य निर्माण कालः । तैत्तिरीयसंहिता शतपथात् प्राचीना, ऋ-ग्वेदश्च तैत्तिरीयसंहिताया अपि प्राचीनः, अतः ऋग्वेदः ३५०० ई० पू० काले प्रणीत इति सम्भवति । एवञ्च सम्प्रति ऋग्वेदः ५५०० वर्षप्राचीन इति निश्चीयते ।

५. बालगङ्गाधरतिलकमतम्

तिलकस्य मते वेदकाल इतोऽपि किञ्चित् प्राचीनः सिद्ध्यति । तेन हि मृगशिरोनक्षत्रे वसन्तसम्पातस्य साधकानि बहूनि वेदवाक्यानि संगृहीतानि ।

तैत्तिरीयसंहितायामुच्यते फाल्गुनी पूर्णिमा वर्षादिः। तिलकमतं इदमनुकूलं यतो यदि पूर्णचन्द्रः फल्गुन्यां तदा सूर्येण मृगशिरसि भवितव्यमेव, तदैव च वसन्तसम्पातो भावी।

मृगशिरसि वसन्तसम्पातस्य कालः पूर्वोक्तकृत्तिकाकालात् प्रायः २००० वर्षपूर्वं सम्भवति, यतो मृगशिरसः कृत्तिकापर्यन्तं पश्चात् सर्पणे सहस्रद्वयाब्दी अपेक्ष्यते। एकस्मान्नक्षत्रान्नक्षत्रान्तरोपसर्पणे ९७० वर्षाणि लगन्तीति पूर्वमुक्तमेव। अतो येषु मन्त्रेषु मृगशिरसि वसन्तसम्पातस्योल्लेखो विद्यते ते मन्त्राः४५०० ई० पू० समयतोऽर्वाचीना न सम्भवन्ति। तिलकेन मृगशिरसोऽपि पूर्वं पुनर्वसौ वसन्तसम्पातस्य बोधकानि वेदवचनानि प्राप्तानि, ततस्ततोऽपि पूर्वतनः कालो वेदमन्त्राणां साधयितुं शक्यते। सर्वमिदं विचार्य तिलकमहोदयेन वैदिककालश्चतुर्धा विभक्तः—

१. अदितिकालः—६००० ई० पूर्वतः ४००० ई० पू० पर्यन्तम्। अत्र काले उपास्यदेवनामगुणमुख्यचरितादिबोधका गद्यपद्यमया मन्त्रा रचिताः ये यज्ञेषु प्रयुज्यन्ते स्म।

२. मृगशिरःकालः—४००० ई० पूर्वतः २५०० ई० पू० पर्यन्तम्। अत्रैव महत्त्वशालिनि काले भूयांसो ऋग्वेदमन्त्रा व्यरच्यन्त।

३. कृत्तिकाकालः—२५०० ई० पूर्वतः १४०० ई० पू० पर्यन्तम्। अस्मिन् काले शतपथब्राह्मणतैत्तिरीयसंहितयोः प्रणयनमजायत।

४. अन्तिमः कालः—१४०० ई० पूर्वतः ५०० ई० पू० पर्यन्तम्। अत्र काले श्रौतसूत्रगृह्यसूत्रदर्शनसूत्रादीनामार्षग्रन्थानां रचना जाता। तानेव विरोद्धुं प्रतिक्रियारूपेण बौद्धधर्म उदितो बभूव। ·

साम्प्रतिकानि शोधकार्यफलान्यपि तिलकमहोदयस्य मतं पुष्टं कुर्वन्ति। १९०७ ई० वर्षे 'डा० हूगो विकलर' महाशयेन वर्त्तमान टर्की देशे एकः शिलालेखोऽधिगतः। तेन शिलालेखेन ज्ञायते यत् पश्चिम-एशियावयवभूते तत्र टर्कीदेशे द्वयोः कयोश्चित् प्राचीनजात्योर्निवास आसीत्। तत्र एकस्या जातेर्नाम 'हित्तिति' इति अपरस्याश्च 'मितानि' इत्यासीत्। अनयोर्द्वयोरपि जात्यो राजानौ पारस्परिककलहस्य निवारणाय सन्धि चक्रतुः। तत्र सन्धौ द्वावपि पक्षौ सन्धिसंरक्षकतया देवनामानि निर्दिष्टवन्तौ। तत्र 'मितानि' जातेर्देवेषु मित्रः, वरुणः, इन्द्रः, नासत्यौ च निर्दिष्टाः। अमी देवा आर्याणामेव। अतः प्रतीयते यत् आर्या एव केचन तत्राप्यवसन्।

अस्य शिलालेखस्य समयः १४०० ई० पू० विद्यते। आर्याः प्राग् आर्यावर्त्ते स्वधर्मं देवांश्च स्थिरयित्वैव क्वचन गता भवेयुः। अतः १४०० ई० पूर्वतः प्रागेव वैदिकसभ्यताया उदयो मन्तव्यः, तदानींतनश्चैव वेदः सम्भवति। इत्थं वेदानां कालः २००० ई० पू० सिद्ध्यति। अयं कालनिश्चयो तिलकस्य मतं सन्निकृष्टं करोति, अतोऽत्र वयमपि श्रद्धालवः। वस्तुतस्तु सर्वमपीदं सम्प्रत्यवधि न निर्णीतम्,

केवलमाशास्यते यत् यदा कदाचिदपि जाते निश्चये वेदाः प्रोदीरितकालतोऽपि पूर्वकालिका एव सेत्स्यन्तीति।

## वेदाङ्गानि

वेदस्य षड् अङ्गानि, यथोक्तं पाणिनिना स्वशिक्षायाम्—

'छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते॥' पा० शि० ४१-४२

पतञ्जलिनाप्युक्तम्—'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च।' (पस्पशाह्निके)

१. शिक्षा—तच्छास्त्रं शिक्षा नाम येन वेदमन्त्राणामुच्चारणं शुद्धं सम्पाद्येत। वेदे स्वरस्य प्राधान्यं सर्वविदितम्, स्वरज्ञानं च शिक्षाऽऽयत्तम्, अत एवेदं शिक्षाशास्त्रं वेदाङ्गम्। शिक्षाशास्त्रप्रयोजनमुक्तं तैत्तिरीयोपनिषदारम्भे, यथा—

'अथ शिक्षां व्याख्यास्यामः—वर्णः, स्वरः, मात्रा, बलम्, साम, सन्तान इत्युक्तः शिक्षाऽध्यायः।' तत्र वर्णोऽकारादिः, स्वर उदात्तादिः, मात्रा ह्रस्वादिः, बलं स्थानप्रयत्नौ, साम निषादादि, सन्तानो विकर्षणादिः। एतदवबोधनमेव शिक्षायाः प्रयोजनम्। सम्प्रति त्रिंशत्सङ्ख्याका शिक्षाग्रन्था उपलभ्यन्ते। तेषु—याज्ञवल्क्यशिक्षा, वाशिष्ठी शिक्षा, कात्यायनी शिक्षा, पाराशरी शिक्षा, अमोघानन्दिनी शिक्षा, नारदी शिक्षा, शौनकीयशिक्षा, गौतमी शिक्षा, माण्डूकी शिक्षा, पाणिनीया शिक्षा च मुख्याः। पाणिनीयशिक्षा तु सर्वतोऽधिकं प्रथते।

वेदभेदेन शिक्षाभेदो भवति, यथा—याज्ञवल्क्यशिक्षा शुक्लयजुर्वेदस्य, नारदीशिक्षा सामवेदस्येत्यादि।

२. छन्दः—मन्त्राणां छन्दोबद्धतया-छन्दसां ज्ञानं विना वेदमन्त्राः साधु उच्चारयितुं न शक्यन्तेऽतश्छन्दोऽपि वेदाङ्गमवश्यज्ञेयञ्च।

शौनकविरचिते ऋक्प्रातिशाख्ये चरमभागे छन्दसां पर्याप्तं विवेचनं विद्यते। अस्य छन्दःशास्त्रस्य पिङ्गलच्छन्दःसूत्रनामा ग्रन्थः सर्वाधिकप्रसिद्धः। अयं केनचित् पिङ्गलनामकेनाचार्येण विरचितः। अत्र वैदिकानि लौकिकानि चच्छन्दांसि विवेचितानि।

३. कल्पः—ब्राह्मणकाले यागस्य तावान् प्रचारो जातो यत्तेषां यथावज्ज्ञानाय पूर्णपरिचयप्रदायकग्रन्थानामावश्यकताऽनूभूयते स्म, तामेवावश्यकतां स्वल्पेन शब्देन पूरयितुं कल्पसूत्राणि विरचितानि।

कल्पसूत्राणि द्विविधानि श्रौतसूत्राणि स्मार्त्तसूत्राणि च श्रुत्युक्तयागविधिप्रकाशकानि श्रौतसूत्राणि। स्मार्त्तसूत्राण्यपि द्विधा—गृह्यसूत्राणि धर्मसूत्राणि च।

श्रौतसूत्रेषु अग्नित्रयाधानम्, अग्निहोत्रम्, दर्शपूर्णमासौ, पशुयागः नानाविधाः सोमयागाश्चेति विषयाः समुपपादिताः।

गृह्यसूत्रेषु तेषामनुष्ठानाचारयागानां वर्णनं विद्यते येषां सम्पादनं त्रैवर्णिकैरवश्यं कर्त्तव्यम्। षोडशसंस्काराणां विशिष्टं वर्णनमपि गृह्यसूत्रेषु कृतं बोध्यम्।

धर्मसूत्रेषु धार्मिकनियमाः, प्रजानां राज्ञां च कर्त्तव्यचर्याः, चत्वारो वर्णाः, चत्वार आश्रमाः, तेषां धर्माः पूर्णतया निरूपिताः। एतानि धर्मसूत्राण्येव स्मृतीनां जन्मनेऽकल्पन्त।

शुल्बसूत्रमपि कल्पसूत्रमेव, तत् श्रौतसूत्रान्तर्गतम्। शुल्बं मापक्रिया। इदं सूत्रमेव भरतीयज्यामितिशास्त्रस्य प्रवर्त्तकम्। पाश्चात्त्यैः 'पिथागोरस'- प्रभृतिभिरिदं ज्यामितिशास्त्रं प्रणीतमिति ये कल्पयन्ति, ते शुल्बसूत्रं दृष्ट्वा दृढोक्वर्वन्तु यदिदं ज्यामितिशास्त्रं भारतीयैः पाश्चात्यज्यामितिशास्त्रोत्पत्तेर्बहुदिवसपूर्वमेव प्रकटीकृतमिति।

कल्पसूत्राणि तत्तद्वेदसम्बन्धनिबन्धनभेदयुतानि। तत्र—

ऋग्वेदस्य कल्पसूत्रम्—आश्वलायनम् शाङ्खायनञ्च। अनयोरुभयोरपि कल्पसूत्रयोः श्रौतसूत्रं गृह्यसूत्रं च सम्मिलितं विद्यते। शुक्लयजुर्वेदस्य कल्पसूत्रम्-कात्यायनश्रौतसूत्रम्, पारस्कारगृह्यसूत्रम्, कात्यायनशुल्बसूत्रञ्च।

कृष्णयजुर्वेदस्य कल्पसूत्रम्—बौधायनसूत्रम् आपस्तम्बसूत्रम् च। अनयोः कल्पसूत्रयोः श्रौतगृह्यधर्मशुल्बसूत्राणिसर्वाण्यपि सन्तीति ग्रन्थाविमौ पूर्णरूपौ।

सामवेदस्य कल्पसूत्रम्—लाट्यायनश्रौतसूत्रम् द्राह्यायणञ्च। जैमिनीयशाखायाः श्रौतसूत्रं जैमिनिगृह्यसूत्रम्, गोभिलगृह्यसूत्रम्, खादिरगृह्यसूत्रञ्च।

सामवेदे एव आर्षेयकल्पस्यापि गणना भवति, अयमेव कल्पो मशककल्प सूत्रनाम्नापि प्रथते। सूत्रमिदं लाट्यायनश्रौतसूत्रात्प्राचीनं मन्यते।

अथर्ववेदस्य कल्पसूत्रम्—वैतानश्रौतसूत्रम्, कौशिकसूत्रञ्च। वैतानसूत्रं नातिप्राचीनम्, कौशिकसूत्रञ्चाभिचारक्रियावर्णनपरम्।

४. **निरुक्तम्**—निरुच्यते निःशेषेणोपदिश्यते निर्वचनविधया तत्तदर्थबोधनाय पदजातं यत्र तन्निरुक्तम्। निर्वचनमुखेन पदानामर्थावगमो यद्यपि व्याकरणेनापि सिद्धयति तथापि निरुक्तानुसारेणैव अर्था निर्वक्तव्या इति मुन्यनुशासनाद् व्याकरणसाध्यकतिपयकार्यविधायित्वाच्च शास्त्रमिदं पृथक् प्रणीतम्। तदुक्तं यास्केन—'अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते। अर्थमप्रतियतो नात्यन्तं स्वरसंस्कारोद्देशः, तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकञ्च। नहि निरुक्तार्थवित् कश्चिन्मन्त्रं निर्वक्तुमर्हतीति वृद्धानुशासनम्। निरुक्तप्रक्रियानुरोधेनैव मन्त्रा निर्वक्तव्या नान्यथा।'

अत्रेदमवगन्तव्यम्—शिक्षया वर्णोच्चारणप्रकारे व्याकरणेन च पदसाधुत्वे ज्ञाते मन्त्रघटकपदानामर्थज्ञानाकाङ्क्षायां मन्त्रघटकार्थज्ञानाय भगवता यास्केन निरुक्तं प्रणीतम्। तच्च निरुक्तं पञ्चविधम्—

'वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्॥'

इति भर्तृहरिः।

वेदागतकठिनशब्दसंग्रहरूपो निघण्टुग्रन्थश्चिरादागच्छति स्म, तत्रैव यास्केन तद्व्याख्याभूतं निरुक्तं विरचितम्। निघण्टवो वेदा एव न वेदाङ्गानि, तद्व्याख्याभूतं यास्कप्रणीतं निरुक्तमेव वेदाङ्गमिति सम्प्रदायः।

उपलभ्यमानो निरुक्तग्रन्थो यास्कस्य कृतिः। पाणिनेः प्राचीनोऽयं यास्कः ७०० ई० पू० कालिकः स्यादिति विदुषामभिप्रायः। यास्कात्प्रागपि बहवो निरुक्तकारा आसन्। येषु द्वादश यास्केन स्मृताः—"औपमन्यवः, औदुम्बरायणः, वार्ष्यायणिः, गार्ग्यः, आग्रायणः, शाकपूणिः, और्णनाभः, तैटीकिः, गालवः, स्थौलोष्ठी, क्रौष्टुकिः, कात्थक्यश्चेति।'

अत्र यास्कनिरुक्ते चतुर्दशाध्यायाः। बहवस्तु द्वादशाध्यायात्मकमेवेदं शास्त्रम्, अन्तिमौ द्वावध्यायौ तु केनचित् पश्चाद्योजितावित्याहुः।

५. व्याकरणम्—भाषा लोकव्यवहारं चालयति, यदि भाषा न स्यात्, जगदिदमन्धे तमसि मज्जेत्, यथोक्तं दण्डिना—

'इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम्।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते॥'

भाषायाः शुद्धये व्याकरणापेक्षा भवत्येव। नहि व्याकरणज्ञानशून्यः साधून् शब्दान् प्रयोक्तुमीशः। वेदस्य रक्षार्थं व्याकरणाध्ययनमत्यावश्यकम्, 'रक्षार्थं वेदानामध्येयं व्याकरणम्, लोपागमवर्णविकारज्ञो हि पुरुषः सम्यग् वेदान् परिपालयिष्यति' इति पतञ्जलिः। वेदरक्षाक्षमतयैव व्याकरणस्य वेदाङ्गत्वमपि समर्थ्यते। व्याकरणस्य सर्वाणि प्रयोजनान्युक्तानि महाभाष्ये, 'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्'। रक्षार्थं वेदानामध्येयं व्याकरणम्। ऊहः खल्वपि, न सर्वैर्लिङ्गैर्न सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः, ते चावश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणमयितव्याः, तान्नावैयाकरणः शक्नोति यथायथं विपरिणमयितुम्। तस्मादध्येयं व्याकरणम्। एवमन्यान्यपि प्रयोजनानि व्याख्यातानि भाष्ये।

पाणिनेरष्टाध्यायी, कात्यायनस्य वार्त्तिकं भाष्यकृतो भाष्यञ्चेति त्रिमुनिव्याकरणं प्रसिद्धम्। व्याकरणान्यष्टौ—

'प्रथमं प्रोच्यते ब्राह्मं द्वितीयमैन्द्रमुच्यते।
याम्यं प्रोक्तं ततो रौद्रं वायव्यं वारुणं तथा॥
सावित्रं च तथा प्रोक्तमष्टमं वैष्णवं तथा॥'

(भविष्यपुराणे ब्राह्मपर्व)

लघुत्रिमुनिकल्पतरुकृतस्तु नव व्याकरणानि स्मरन्ति—

'ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतं चापिशलं शाकलं पाणिनीयकम्॥'

व्याकरणानामष्टविधत्वमेव प्रसिद्धम्—यथोक्तं भास्करेण—'अष्टौ व्याकरणानि षट् च भिषजां व्याचष्ट ताः संहिताः' इति भविष्यपुराणोक्तानि व्याकरणानि तु न प्रसिद्धानि। ऐन्द्रादीन्येव प्रसिद्धानि।

सर्वेष्वपि व्याकरणेषु लौकिकवैदिकोभयविधशब्दसाधकतया पाणिनीयव्याकरणस्यैव प्राधान्यम्। अत एव पाणिन्युपज्ञं व्याकरणं प्रसिद्धम्।

पाणिनेः कालादिकं जाम्बवतीजयपरिचयप्रकरणे द्रष्टव्यम्।

६. **ज्यौतिषम्**—इदं कालविज्ञापकं शास्त्रम्। मुहूर्त्तं शोधयित्वा क्रियमाणा यज्ञादिक्रियाविशेषाः फलाय कल्पन्ते, नान्यथा, तन्मुहूर्त्तज्ञानञ्च ज्यौतिषायत्तमतोऽस्य ज्यौतिषशास्त्रस्य वेदाङ्गत्वं स्वीकृतम्। उक्तश्चायमर्थ आर्चज्यौतिषे, यथा—

'वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्वा विहिताश्च यज्ञाः।
तस्मादिदं कालविधानशास्त्रं यो ज्यौतिषं वेद स वेद यज्ञान्॥'
(आर्चज्यौतिषम् ३६)

चतुर्णामपि वेदानां पृथक् पृथक् ज्यौतिषशास्त्रमासीत्, तेषु सामवेदस्य ज्यौतिषशास्त्रं नोपलभ्यते, त्रयाणामितरेषां वेदानां ज्यौतिषाण्यवाप्यन्ते।

(१) ऋग्वेदस्य ज्योतिषम्—आर्चज्यौतिषम्, षट्त्रिंशत्पद्यात्मकम्।
(२) यजुर्वेदस्य ज्यौतिषम्—याजुषज्यौतिषम्, ऊनचत्वारिंशत्पद्यात्मकम्।
(३) अथर्ववेदस्य ज्यौतिषम्—आथर्वणज्यौतिषम्, द्विषष्ट्युत्तरशतपद्यात्मकम्।

एतेषां त्रयाणामपि ज्यौतिषाणां प्रणेता लगधो नामाचार्यः। तत्र याजुषज्यौतिषस्य प्रामाणिकं भाष्यद्वयमपि प्राप्यते, एकं सोमाकरविरचितं प्राचीनम्, द्वितीयं सुधाकरद्विवेदिकृतं नवीनम्। एतस्य ज्यौतिषशास्त्रस्य त्रीणि वर्त्मानि, तदिदं शास्त्रं त्रिस्कन्धमुच्यते। तदुक्तम्—

'सिद्धान्तसंहिताहोरारूपं स्कन्धत्रयात्मकम्।
वेदस्य निर्मलं चक्षुर्ज्योतिश्शास्त्रमनुत्तमम्॥'

एतत्प्रवर्त्तका अष्टादश महर्षयः, ते च—

सूर्यः पितामहो व्यासो वसिष्ठोऽत्रिः पराशरः।
कश्यपो नारदो गर्गो मरीचिर्मनुरङ्गिराः॥
लोमशः पुलिशश्चैव च्यवनो यवनो भृगुः।
शौनकोऽष्टादशश्चैते ज्योतिःशास्त्रप्रवर्त्तकाः॥'

## प्रसिद्धाः कतिचन ज्यौतिषग्रन्थकाराः

| | नामानि | कालाः | ग्रन्थाः |
|---|---|---|---|
| १. | आर्यभटः | ५०० ई० | आर्यभटीयम् |
| २. | वराहमिहिरः | ६०० ई० | पञ्चसिद्धान्तिका, बृहज्जातकं लघुजातकञ्च |
| ३. | ब्रह्मगुप्तः | ७०० ई० | ब्रह्मस्फुटसिद्धान्तः, खण्डखाद्यं, ध्यानग्रहश्च। |
| ४. | लल्लः | ७०० ई० | रत्नकोशः, धीवृद्धियन्त्रञ्च। |
| ५. | उत्पलाचार्यः | १००० ई० | वराहमिहिरग्रन्थानां टीकाः। |

६. श्रीपतिः ११०० ई० सिद्धान्तशेखर-धीकोटिकरण-रत्नमाला-जातकपद्धतयः।
७. भोजदेवः ११०० ई० राजमृगाङ्ककरणम्
८. भास्कराचार्यः १११४–११४० ई० सिद्धान्तशिरोमणिः, करणकुतूहलञ्च।
९. केशवः १५०० ई० ग्रहकौतुक-मुहूर्त्ततत्त्व-जातकपद्धतयः।
१०. गणेशः १५५० ई० ग्रहलाघवम्।
११. कमलाकरः १६५० ई० सिद्धान्ततत्त्वविवेकः।

एतदतिरिक्ता अपि—लघुपाराशरी, बृहत्पाराशरी, जैमिनिसूत्रम्, भृगुसंहिता, मीनराजजातकप्रभृतय आर्षग्रन्थाः, लघुजातकम् बृहज्जातकम्, सारावलिः, जातकाभरणम् जातकपद्धतिः, जातकसारः जातकालङ्कारः, पद्मजातकम्, होरारत्नम्, होराकौस्तुभम्, इत्यादयः पुरुषप्रणीतग्रन्थाश्च शास्त्रमिदं समृद्धं कुर्वन्ति।

केरलमतप्रतिपादका ग्रन्थाः, प्रश्नग्रन्थान्तराणि, रमलग्रन्थाः, ताजिकग्रन्थाश्च अस्य शास्त्रस्य पोषका एव।

## अनुक्रमणी

वेदाङ्गेष्वपरिगणिता अपि अनुक्रमणीग्रन्थाः प्रातिशाख्यग्रन्थाः देवताग्रन्थाश्च वेदस्य रक्षार्थमेव प्रणीताः।

मन्त्राणां द्रष्टारो ऋषयः के, तेषां देवताः काः, तेषाः छन्दोऽनुवाकवर्गसूक्तानि च कानि, इति बोधयितुं ये ग्रन्था विरचितास्ते अनुक्रमणीग्रन्थाः कथ्यन्ते। शौनकेन ऋग्वेदरक्षार्थम् आर्षानुक्रमण्यादयो दश ग्रन्थाः प्रणीताः। अपरेऽपि अनुक्रमणीग्रन्थाः सन्ति।

## प्रातिशाख्यम्

वैदिकशब्दानां व्याकरणप्रक्रियाप्रदर्शनमेव प्रातिशाख्यानामुद्देश्यम्। तत्र ऋक्प्रातिशाख्यम्, यजुःप्रातिशाख्यम्, तैत्तिरीयप्रातिशाख्यम् सामप्रातिशाख्यञ्च प्रसिद्धम्।

## देवता

देवताग्रन्था वेदमन्त्राणां देवताः प्रतिपादयितुं लिखिताः। पूर्वमत्र विभागे बहवो ग्रन्था आसन् परं सम्प्रति बृहद्देवतानामा एक एव ग्रन्थः प्राप्यते।

एवं संक्षेपतः परिचितो वेदवेदाङ्गग्रन्थः। इतः परं लौकिकसाहित्यं विशिष्य परिचितं कर्त्तुं प्रयासः करिष्यते।

## पुराणानि

पुराणानां धार्मिकदृष्ट्या महत्वमधिकम्। वेदविहितानां धर्माणां सरलसुबोधभाषायां वर्णनायैव पुराणानि विरचितानि—

'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति॥'

यदा वेदोक्ता अर्थाः लोकानां बुद्धौ नारोढुं प्रवृत्तास्तदा वेदोक्तार्थस्य ज्ञानं सुलभं कर्त्तुं पुराणानि विरच्यन्ते स्म ।

समाजस्य तात्कालिकस्वरूपबोधनायापि पुराणानां महानुपयोगः पुराणेषु प्राचीनभारतस्येतिहासो निहितः । पुराणोक्तानामितिवृत्तानां प्रामाणिकत्वं शिलालेखादिभिरपि कर्त्तुमारब्धम्, अतो विदेशीया अपि विद्वांसः पुराणे धृतादराः प्रतिभान्ति ।

इतिहासा यदि राज्ञां वृत्तं प्राधान्येन बोधयन्ति तदा पुराणानि राज्ञां वृत्तैः सह ऋषीणामपि वृत्तं बोधयन्तीति परमोपयोगित्वं पुराणानाम् ।

पुराणानि भौगोलिकसामग्रीमपि प्रस्तुवन्ति । काशीखण्डे काशीपुर्यास्तादृशं विस्तृतं वर्णनं विद्यते येन तस्या मानचित्रमिव पुरत उपतिष्ठते । अन्येष्वपि पुराणेषु तेषां तेषां तीर्थानां तादृशं स्पष्टं वर्णनमुपलभ्यते, येन तत्परिचये सौकर्यमाधीयते ।

पुराणेषु अतिशयोक्तिपूर्णा शैली समादृता येन लोकास्तानि अविश्वसनीयानि काल्पनिकानि च प्रतियन्ति स्म । तत्र बोद्धव्यमिदं यत् त्रिधा वर्णनं क्रियते—वस्तुतत्त्वकथारूपेण, रूपकद्वारा, अतिशयोक्तिद्वारा च । वस्तुतत्त्वकथा वैज्ञानिकानाम्, ते हि वस्तु यथावद् वर्णयन्ति, न किमपि रञ्जनं तत्राचरन्ति । रूपकद्वारा वस्तुकथनप्रणाली वेदेषु व्यवह्रियते, तत्र हि उषः सुन्दरी कृता, वृत्रश्च राजाकृतः । अतिशयोक्तिप्रणाली पुराणेष्वादृता । अस्यां प्रणाल्यां वर्णिता अर्था यथामति विविच्य ग्रहीतव्या भवन्ति । पुराणानां तुलनात्मकमध्ययनं तदन्तस्तले प्रवेशनं च यदि क्रियेत तदा तत्रत्य इतिहासभागः सामाजिकवर्णनारहस्यं च स्पष्टमवभासेत इति विदुषां विचारः ।

## पुराणलक्षणम्

पुराणं पुरातनमाख्यानमुच्यते । संस्कृते पुराणशब्दश्चिरन्तनपर्यायः । पुराणेषु भूता वर्त्तमाना भाविनश्चार्था वर्ण्यन्ते । इतिहासे तु भूता एवार्था वर्ण्यन्त इति पुराणेतिहासयोरन्तरम् । प्राचीनास्तु पुराणमपीतिहासशब्देनाभिदधते । पुराणेषु पुराणलक्षणमित्थमुक्तम्—

'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥'

सर्गः सृष्टिः, प्रतिसर्गः सृष्टेर्लयः पुनश्च सृष्टिः, वंशः सृष्ट्यादौ वंशावली, मन्वन्तराणि के के मनवः कदा कदा अजायन्तेति वर्णना, वंशानुचरितं सूर्यचन्द्रवंशयोर्विशिष्य वर्णनम् , इदं वस्तुपञ्चकं पुराणेष्वपेक्ष्यते ।

वस्तुतस्तु नैतान्येव वस्तूनि पुराणेषु वर्ण्यन्ते । इदन्तु न्यूनतमं वर्णनीयम्, पुराणेष्वितोऽधिकान्यपि तानि तानि वस्तूनि वर्ण्यन्ते । उदाहरणार्थमग्निपुराणमेव गृह्यताम् । तत्र हि सर्वाण्यपि ज्ञातव्यवस्तूनि वर्णितानि, येन तत् भारतीयज्ञानकोषः' इत्यभिधीयते ।

कस्यापि मानवसमाजस्य इतिहासस्तावन्न पूर्णो मन्यते, यावत्तस्य सृष्टेः प्रारम्भकालत इतिहासो न प्रस्तूयते। पाश्चात्त्यशिक्षाप्रभाविता विद्वांसो नैतद-नुमोदयन्ति स्म, अत एव ते पुराणानि सत्यानि न स्वीकुर्वन्ति स्म, परं सम्प्रति दृष्टिकोणपरिवर्तनं जातम्। एच्. जी. वेल्स महोदयः आउटलाइन ऑफ द हिस्ट्री नामके स्वग्रन्थे पौराणिकीं प्रणालीमनुसृतवान्। अनया सुसंस्कृ-तया दृष्ट्या भारतीयमितिहासं जिज्ञासमानानां कृते पुराणानि निधय इव।

## पुराणानां रचनाकालः

पुराणानां रचना कदा जातेति प्रश्ने निम्नलिखितविषयाः पूर्वं ध्यातव्याः–

१. अथर्ववेदे पुराणस्य उल्लेखो दृश्यते––

'ऋचः सामानिच्छन्दांसि पुराणं यजुषा सह।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिवि श्रिताः॥,
(११।७।२४)

२. गोपथब्राह्मणे पुराणानि स्मर्यन्ते—

'एवमिमे सर्वे वेदाः निर्मिताः सकल्पाः सरहस्याः सब्राह्मणाः सोपनि-षत्काः सेतिहासाः सान्वयाख्याताः सपुराणाः सस्वराः।' (गोपथप्रपा० २)

३. शतपथे––'सोऽयमिति किञ्चित् पुराणमाचक्षीत।' (१३।४।३।१३)

४. बृहदारण्यके––'इतिहासः पुराणं विद्या उपनिषदः।' (२।४।११)

५. छान्दोग्ये—'ऋग्वेदं भगवोऽध्येमि.··इतिहासपुराणं पञ्चमं वेदानां वेदम्।"

६. आपस्तम्बधर्मसूत्रे पुराणस्योल्लेख एव न केवलोऽपि तु श्लोक संख्याप्युक्ता—

'अथ पुराणे श्लोकानुदाहरन्ति, अष्टाशीतिसहस्राणीति। (२।२२।३५)

७. शङ्कराचार्यः कुमारिलभट्टश्च पुराणान्युद्धृतवन्तौ। बाणभट्टः हर्षचरिते 'पुराणेषु वायुप्रलपितम्' इत्याह।

८. पुराणेषु कलियुगवर्त्तिनां राज्ञां वर्णनानि दृश्यन्ते। विष्णुपुराणे मौर्यवंशस्य प्रामाणिकं विवरणं लभ्यते। मत्स्यपुराणे आन्ध्रनृपतयः स्मृताः। वायुपुराणे गुप्तनृपतयो वर्णिताः।

९. महाभारतकृता पुराणानि स्मृतानि, पद्मपुराणे ऋष्यश्रृङ्गस्य यत् वृत्तं वर्ण्यते तन्महाभारतेऽपि प्राप्यते।

१०. कौटिल्यकृतमर्थशास्त्रं पुराणानि निर्दिशति, तत्र हि विनेयेभ्यो राज-पुत्रेभ्यः पुराणानि उपदेष्टव्यानीति निर्दिष्ट। अर्थशास्त्रं चेदं चन्द्रगुप्तराज्य-कालिकमिति ततः पूर्वं पुराणरचनं सिद्ध्यति।

११. धर्मसूत्रेषु पुराणानि स्मर्यन्ते।

तदिमानि सर्वाणि तत्त्वानि पुराणानां वैदिककालेऽप्यस्तित्वं समर्थयन्ते। ईशवीयशतकात् षट् शतकपूर्वतनकाले पुराणानामस्तित्वमासीदिति कल्पनाऽपि सत्यानुमोदिता। इदं तु सत्यं यत् पुराणस्यादिमं रूपं सम्प्रति नावाप्यते।

पुराणं कदाचिदेकत्र समये नारच्यत, समये समये तत्राध्याया योजिताः गुप्तकाल-पर्यन्तं तेषां वर्त्तमानरूपमुपपन्नमासीत् ।

## पुराणानां नामानि तत्प्रमाणं च

पुराणानां संख्याविषये मतभेदो नास्ति, सर्ववादिसिद्धं तेषामष्टादशत्वम् ।

'मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयम् ।
अनापलिंगकूस्कानि पुराणानि प्रचक्षते ।।'

श्लोकोऽयं पुराणानां नामानि संगृह्णाति ।

मद्वयम्—मकारादिपुराणद्वयम्-मत्स्यपुराणम् मार्कण्डेयपुराणञ्च २
भद्वयम्—भकारादिपुराणद्वयम्-भविष्यपुराणम् भागवतपुराणञ्च ४
ब्रत्रयम्—ब्रादिपुराणत्रयम्-ब्रह्माण्डपुराणम्, ब्राह्मपुराणम्, ब्रह्मवैवर्त्तञ्च ७
वचतुष्टयम्—वकारादिपुराणचतुष्टयम्—वामन-वराह-विष्णु-वायुपुराणानि ११
अ—अग्निपुराणम्— १२
ना—नारदपुराणम्— १३
प—पद्मपुराणम्— १४
लिं—लिङ्गपुराणम्— १५
ग—गरुडपुराणम्— १६
कू—कूर्मपुराणम्— १७
स्क—स्कन्दपुराणम्— १८

## पुराणानां श्लोकसंख्याः

| | | |
|---|---|---|
| १. तन्मत्स्यमिति जानीध्वं सहस्राणि चतुर्दश । | १४००० | श्लोकाः |
| २. पुराणं नवसाहस्रं मार्कण्डेयमिहोच्यते । | ९००० | " |
| ३. तद्भागवतमुच्यते, अष्टादशसहस्राणि । | १८००० | " |
| ४. चतुर्विंशत्सहस्राणि तथा पञ्चशतानि च ।<br>भविष्यचरितप्रायं भविष्यं तदिहोच्यते ।। | २४५०० | " |
| ५. ब्राह्मं त्रिदशसाहस्रं पुराणं परिकीर्त्यते । | १३००० | " |
| ६. तदष्टादशसाहस्रं ब्रह्मवैवर्त्तमुच्यते । | १८००० | " |
| ७. तच्च द्वादशसाहस्रं ब्रह्माण्डं द्विशताधिकम् । | १२२०० | " |
| ८. पुराणं दशसाहस्रं वामनं परिकीर्त्तितम् । | १०००० | " |
| ९. चतुर्विंशत्सहस्राणि तद् वाराहमिहोच्यते । | २४००० | " |
| १०. आग्नेयं तच्च षोडशसाहस्रम् । | १६००० | " |
| ११. चतुर्विंशत्सहस्राणि वायवीयम् । | २४००० | " |
| १२. त्रयोविंशतिसाहस्रं वैष्णवं परिकीर्त्यते । | २३००० | " |
| १३. पञ्चविंशत्सहस्राणि नारदीयं तदुच्यते । | २५००० | " |
| १४. पाद्मं तु पञ्चपञ्चाशत्सहस्राणीह कथ्यते । | ५५००० | " |
| १५. तदेकादशसाहस्रं लैङ्गिकं परिकीर्त्तितम् । | ११००० | " |

१६. अष्टादशसहस्राणि गारुडं तदिहोच्यते । १८००० श्लोकाः
१७. कूर्मरूपी जनार्दनः, अष्टादशसहस्राणि । १८००० "
१८. स्कन्दं नाम पुराणञ्च ह्येकाशीतिर्निगद्यते ।
सहस्राणि शतञ्चैकम् ......................॥ ८११०० "

परं संख्येयं सम्प्रति प्राप्यमाणेषु पुराणेषु बहुत्र भिद्यतेऽपि। एवंविधसंख्या-भेदे प्रक्षेपलेखकप्रमादापहारादिकानां मध्ये किमप्येकं कारणं स्यात् ।

एतत्पुराणातिरिक्तानि अष्टादशोपपुराणान्यप्याख्यायन्ते— १ सनत्कुमार- २ नारसिंह- ३ स्कान्द- ४ शिवधर्म- ५ आश्चर्य- ६ नारदीय- ७ कापिल- ८ वामन- ९ औशनस- १० ब्रह्माण्ड- ११ वारुण- १२ कालिका- १३ माहेश्वर- १४ साम्ब- १५ सौर- १६ पराशर- १७ मारीच- १८ भार्गवेतिनामभेदोऽत्र बोध्यः ।

देवीभागवते तु स्कान्द-वामन-ब्रह्माण्ड-मारीच-भार्गवेति प्रागुक्तपुराण-पञ्चकस्य स्थाने शिव-मानव-आदित्य-भागवत-वासिष्ठेति नामपञ्चकमाम्नायते । एतदनुसारेण श्रीमद्भागवतमुपपुराणकोटौ गणितं भवतीति ।

## रामायणम्

### रामायणस्य काव्यत्वम्

संस्कृतसाहित्ये रामायणपदेन वाल्मीकिविरचितं रामायणमेव प्रसिद्धयति । भारतीयै रामायणमादिकाव्यं वाल्मीकिश्च तत्प्रणेतृतयाऽऽदिकविरभिधीयते । रामायणात् प्राचीनः संस्कृतभाषानिबद्धः काव्यलक्षणोपपन्नः कोऽपि ग्रन्थो न श्रूयते, दृश्यत, इति कथैव का ? यतो रामायणे न केवलं युद्धमेव वर्णितमपि-तु रूपकोपमाद्यलङ्कारयुतायां भाषायां प्रकृतेरपि वर्णनं कृतमतो रामायणं काव्यमिति स्वीक्रियते न वीरगाथामात्रम्, न वा शुष्केतिहासमात्रम् ।

### रामायणस्य रचनाकालः

१. रामायणे महाभारतवर्णितस्य कस्यापि पात्रस्य नाम नोपलभ्यते, महाभारते तु रामकथा वर्णिता लभ्यते । महाभारतस्य सप्तमपर्वणि लङ्काकाण्ड-गतं पद्यद्वयमवाप्यते ( अतो रामायणं महाभारतात् प्राचीनम् ) ।

२. रामायणीया रामकथा कियता परिवर्तनेन दशरथजातकनाम्ना जातक-ग्रन्थाङ्गभावं गता यत्र पालिभाषयानूदितं रामायणीयं पद्यं प्राप्यते ।

३. मृगयायां दशरथेन श्रवणकुमारोऽन्धतापससूनुर्हत इति रामायणकथा सामजातके वर्ण्यते कियता परिवर्त्तनेन समम् ।

४. बौद्धसाहित्यस्य विशेषज्ञः सिल्वाँ लेविमहोदयः स्पष्टमभिप्रैति यत् सद्धर्मस्मृत्युपस्थाननाम्नो बौद्धग्रन्थविशेषस्य मूलेन रामायणेनावश्यं भवितव्यम् । सद्धर्मस्मृत्युपस्थाने वर्त्तमानं जम्बूद्वीपवर्णनं रामायणस्थितदिग्वर्णनमनुहरति ।

५. याकोबिमहोदयो भाषाविज्ञानद्वारा बौद्धकालपूर्वभवत्वं रामायणस्याह ।

एभिः सर्वैरपि प्रमाणै रामायणस्य बुद्धपूर्वकालिकता सिद्धयति । यच्च क्वचिद्रामायणपुस्तके एकत्र बुद्धपदोपादानं तत्प्रक्षिप्तश्लोकाङ्गं मन्तव्यम् ।

६. रामायणे द्वयोरेव स्थलयोर्यवनपदं श्रूयते, तयोरेवोपलब्ध्या वेबरमहाशयो यद्रामायणस्य यवनसकाशाद् गृहीतकथामूलकत्वमुक्तवाँस्तद्यवनपदघटितयोस्तयोः पद्ययोः प्रक्षिप्ततां समर्थयमानेन याकोविमहोदयेन निपुणं दूषितमेव।

७. रामायणे कोसलराजधानी अयोध्या आख्यायते। बौद्धैर्जैनैः यवनैः पतञ्जलिना चापि कोसलराजधानी साकेत इत्युच्यते, अतः सिद्ध्यति यत् अयोध्याया अभ्युदये वर्त्तमाने साकेतेति नामकरणात् पूर्वमेव रामायणं व्यरच्यत।

८. जैनकविना विमलसूरिणा प्राकृतभाषानिबद्धे स्वीये 'पउमचरिआ' नामके ग्रन्थे रामचरितं वर्णितम्' 'पउमचरिआ' ६२ ई० समयेऽरच्यतातो रामायणं ततः प्राचीनम्।

९. पाटलिपुत्रस्य प्रतिष्ठापनमजातशत्रुणा ५०० ई० पू० समये कृतम्' रामायणे शोणगङ्गासङ्गममतिक्रम्य पुरः सरत्यपि रामे पाटलिपुत्रस्य नामापि न श्रूयते, तेन स्पष्टं प्रतीयते यद् रामायणं ५०० ई० पू० समयतः पूर्वकालिकम्।

१० बालकाण्डे विशाला मिथिला च इति द्वे नगर्यौ पृथक् पृथक् राजद्वयाधिकृते वर्ण्येते। ऐतिहासिकाः कथयन्ति यत् उभे प्रागुक्ते नगर्यौ बुद्धकालात् प्रागेव वैशालीति नाम्ना एकनगरीत्वं गते, अतोऽप्यस्य रामायणस्य बुद्धपूर्वकालिकत्वमायातम्।

११. रामायणे भारतस्य नानानृपतिशासितानेकलघुराज्यविभक्तत्वं वर्ण्यते इयं च दशा भारतस्य बुद्धपूर्वकाल एवावर्त्ततातोऽपि रामायणस्य बुद्धपूर्वकालिकता समायाता।

१२. रामस्य सम्बन्धे बेलफूर नामा पाश्चात्यपण्डितः "Cyclopaedia of India" Vol III नामके ग्रन्थे लिखति—"Rama of the Solar line of Hindu Chronology is, however, placed by brahmins 867--102 B. C, between the silver and brazen ages. But he has been variously supposed to have lived 2022 B. C. Jones, 950 Hamilton, and 1100 Todd, and according to Bently he was one year old in 960 B. C. born in sixth April 961 B. C. Ram preceded Krishna but as their historians Valmiki and Vyasa, who wrote events they witnessed, they were contemporaries, it could not have been many years."

एभिः सर्वैरपि प्रमाणैरिद सिद्धं यद्रामायणं ख्रीष्टपूर्वपञ्चमशतकात्पूर्वमेव कदाचित् प्रणीतं न तु ततोऽर्वाक्। पाणिनिकृतव्याकरणलक्षणहीनभाषाघटितत्वमपि रामायणस्य सिद्धान्तमिमं पोषयति।

## रामायणस्य प्रचारः

संसारे किमपि काव्यं लोकप्रियतायां रामायणस्य समतां कर्त्तुं न क्षमते, अत एव चास्य प्रचारोऽपि पूर्णतया जातः। निर्माणकालादेव खल्वेतद् रामायणं काव्यरूपकादिनिर्माणप्रवृत्तानां विदुषां हृदयान्याचकर्ष। महाभारते तृतीय-पर्वणि रामकथा रामायणाधारेण वर्णिता। अग्निविष्णुगरुडपुराणभागवतब्रह्मा-ण्डपुराणेषु च रामायणानुसारेण रामस्य चरितं न्यबध्यत। भासकालिदासादयः प्राचीनाः कवयो रामायणस्याधमर्ण्यं स्वीकृतवन्तः। अश्वघोषप्रभृतयो बौद्ध-कवयोपि स्वकाव्यानि रामायणानुकृतिवारिभिरसिञ्चन्। खीष्टप्रथमशतके जैन-कविना विमलसूरिणा रामायणमुपजीव्य 'पउमचरिआ'नामको ग्रन्थो रचितः। खीष्टीयतृतीयशतके तिब्बतचीनदेशयोर्भाषयोरनूदितेषु बौद्धग्रन्थेष्वपि रामस्य वीर्याणि वर्णितानि। वर्मा ( Indo China ) प्राच्यद्वीपादिभूभागेष्वपि रामायणं लोकप्रियत्वं प्रापत्। यव ( Java ) द्वीपे लाराजांग्राङ्-पमबनन-पनतरन-नामक-स्थानेषु शिवमन्दिरेषु देवगढ़स्थे विष्णुमन्दिरे च शिलासु रामायणवृत्तान्ताः शतद्वयाधिकसंख्यका उत्कीर्णाः प्राप्यन्ते। यवदीप-मलयद्वीपयोः साहित्येषु रामस्य चरितं वर्ण्यमानं दृश्यते। रामायणस्य पात्राणि नायकीकृत्य श्यामबाली-प्रभृतिदेशेषु साहित्यसृष्टिरक्रियत। आस्तां पुराणीकथा, भारतीयाधुनिकभाषासु सर्वप्रथमं रामायणं तामिलभाषायां खीष्टैकादशशतकेऽनूदितम्। तुलसीदासेनापि वाल्मीकिरामायणमेवाश्रितम्। भारतस्य काप्येतादृशी भाषा नास्ति यत्र रामा-यणस्यानुवादो न जातः स्यात्। वैदेशिक्यो भाषा अपि रामायणस्यानुवादे-नात्मानं धन्यं मन्यते।

किञ्च रामायणस्य प्रचारे इदमपि प्रमाणं यदत्र वर्णिता विजयदशमी देशे पर्वतां गमिता, एवमेव दीपावली अपि रामायणवर्णिता सर्वत्र समादृता।

तदित्थं रामायणस्य प्रचारेण तदीया लोकप्रियता प्रतीयते।

## रामचरितस्यादर्शता

वाल्मीकिना स्वकाव्यकलायाः प्रदर्शनाय यत्पात्रमाधारीकृतं तस्य रामस्य चरितमेव तादृशं यत्तदाधारीकृत्य कोऽपि कविः साफल्यमासादयेत्, यथोक्तं साकेते—

'राम तुम्हारा चरित स्वयं ही काव्य है
कोई कवि बन जाय सहज संभाव्य है'

अतो रामाधारकं वाल्मीकिकाव्यं रामायणं नितान्तहृद्यं सातिशयशिक्षाप्रदं च च भूत्वा रसास्वादसुखपिण्डप्रदानद्वारेण विनेयान्विनयति यत्काव्यस्य मुख्यं प्रयोजनमुच्यते।

रामचन्द्र आदर्शभ्राता आदर्शपतिः आदर्शपुत्रः आदर्शशासकः आदर्श-मनुष्यश्चासीदिति समर्थयितुमेव रामायणं निरमीयत, यत्र लक्ष्ये तत्सफलमभूत्। रामो वनं गत्वापि भरतोपरि सन्देहं न कृतवान्, लक्ष्मणोपरि विपदुपनिपाते

स्वप्राणाँस्तृणाय मेने इत्यादिना तदादर्शभ्रातृता, सीतां परित्यज्यापि तदनुरागाग्नौ तिलशः स्वमजुहोदिति तस्यादर्शपतित्वं, पितुराज्ञयोपनतं प्रकृतिभिरनुमोदितमपि राज्यं तत्याजेति तस्यादर्शपुत्रता, रामराज्यपदमधुनापि आदर्शराज्यपर्यायता-मापन्नमिति तस्यादर्शशासकता व्यवहारमात्रेण च तस्यादर्शमनुष्यता प्रतीतेति सर्वथा विस्मयावहं चरित्रं रामचन्द्रस्य। तादृशं चरित्रं स्वीये काव्ये सृष्टवतः कवेर्वाल्मीकेर्न प्रथमोद्भूततामात्रेणादिकवित्वमपि तु सर्वोत्कृष्टकाव्यप्रणयन-सौभाग्यवत्तयाऽपि तदीयमादिकवित्वं प्रतिपन्नं भवति।

## रामायणस्य स्वरूपम्

रामायणे चतुर्विंशतिः सहस्राणि श्लोकानामिति तत् चतुर्विंशतिसाहस्री-संहितापदेनाभिधीयते। यावन्ति अक्षराणि गायत्रीमन्त्रे तावत्सहस्रपरिमाणं रामायणमिति दृढम्। इदमपि प्रत्यक्षसिद्धं यत् प्रतिसहस्रतमश्लोकादौ गायत्री-मन्त्रस्य एकैकमक्षरं प्राप्यते। एतच्च पाठभेदादिकं नापतेदिति बुद्धया कृतं स्यादिति संभाव्यते।

बहवो विद्वांसः उत्तरकाण्डं बालकाण्डस्य कियन्तमंशं च प्रक्षिप्तमाचक्षते। बालकाण्डस्य प्रथमे तृतीये च सर्गे या विषयसूची वर्त्तते तत्रोत्तरकाण्डवर्णिता बालकाण्डगततदंशवर्णिताश्च विषया नायान्तीति च तेषां तादृशोक्तौ हेतुरुच्यते। 'याकोबि' महोदयस्तु अयोध्याकाण्डमारभ्य युद्धकाण्डान्तं काण्डपञ्चकमेव वाल्मीकिकृतं मन्यते। लङ्काकाण्डस्यान्ते ग्रन्थः समाप्त इव प्रतिभाति। उत्तर-काण्डवर्णितार्थानां सूचना च प्राक्तनकाण्डेषु नायातीति 'जैकोबी' महोदयस्य कथाकथने मूलम्। अथापि उत्तरकाण्डं तृतीय ई० पू० शतकात् प्राक्तनमेव सम्भवति, यतोऽतत्रत्य एकः श्लोकः ई० पू० तृतीयशतकनिर्मिते दशरथजातके पालिभाषयानूदितरूपेण प्राप्यते।

रामायणस्य अनेकानि संस्करणानि प्राप्यन्ते—

१. बम्बईतः प्रकाशितं देवनागरी संस्करणम्, उत्तरभारते विशेषतः प्रचरितम्।

२. वङ्गीयं संस्करणम्, लोकनाथीटीकासहितम्, जी० गोरेसियो महाशयः संस्करणमिदं प्रकाशितवान्, इटालियनभाषायां रामायणस्यानुवादं च कृतवान्। समयः—१८४८–१८६७ ई०।

३. काश्मीर संस्करणम्, डी० ए० वी० कालेज-लाहौरस्यानुसन्धानकार्या-लयात् प्रकाशितम्। अस्य प्रचारो भारतस्य पश्चिमोत्तरभागे विशिष्य वर्त्तते।

४. दक्षिणभारतसंस्करणम्, इदं संस्करणं देवनागरीसंस्करणेन सह मिलतीव।

प्रथमसंस्करणत्रये पर्याप्तभेदो लभ्यते, तत्र कतमं संस्करणं मूलरामायणा-नुकूलमिति कथयितुं न शक्यते।

## रामायणे रसः

काव्यानामादर्शभूतं रामायणम् कवीनामादर्शभूतश्च वाल्मीकिरिति कथनं सत्यादनपेतम्। यदि वाल्मीकिर्नाभविष्यत्तदा कवयः कीदृशा भवन्तीति निर्णयो दुष्करोऽस्थास्यदेवमेव रामायणाभावे काव्यस्वरूपमपि दुरवधारमस्थास्यत्।

कवयः क्रान्तदर्शिनो भवन्ति, ते यन्मनोरमं तत्त्वं पश्यन्ति, तदेव शब्दद्वारा लोकानुपदेष्टुं रञ्जयितुं च चित्रयन्ति। स्वानुभूतवस्तुजातस्य शब्दचित्रोपस्थापनमेव काव्यम्।

रामायणात् पूर्वमुपनिषदादौ यद्यपि पद्यान्यासन् परं तेषु लौकिकं छन्दो नासीत्, वाल्मीकिर्हि सर्वप्रथमं लौकिकं छन्दोऽवतारितवान्।

यावत् पर्यन्तं कवेः समक्षे वर्णनीयं वस्तु नागतं तावदयं मौनमादधौ, यदैव क्रौञ्चवधं करुणरसं दृष्टवान्, तदैवाकस्मादेवास्य मुखात् काव्यप्रवाहो निर्गतः, तदस्य काव्ये करुण रस एव प्रधानत्वं भजते। रस एव काव्यस्यात्मा स च वाल्मीकेः काव्ये करुण एव संभवति। तथा चोक्तं तौतभट्टेन—

'दर्शनाद् वर्णनाच्चाथ रूढालोके कविश्रुतिः।
तथाहि दर्शने स्वच्छे नित्यऽप्यादिकवेर्मुनेः।
नोदिता कविता लोके यावज्जाता न वर्णना॥'

यावदसौ रसं नानुभूतवान् तावद् रामायणकथां जानन्नपि तां न निबद्धवान्। कवयो हि रसं बन्धुमध्यवस्यन्ति न कथामात्रम्।

"रामायणे हि करुणो रसः स्वयमादिकविना सूचितः 'शोकः श्लोकत्वमागत' इत्येवंवादिना। निर्व्यूढश्च स एव सीताऽत्यन्तवियोगपर्यन्तमेव स्वप्रबन्धमुपरचयता।" इति ध्वन्यालोकः।

भवभूतिरपि एको रसः करुण एवेति ब्रुवाणः काव्ये करुणरसस्य प्राधान्यं स्वीकरोति। वाल्मीकिरपि स्वकाव्ये तथैव स्वीकृतवान्स्यादिति नाश्चर्यजनकम्।

रामसीतयोर्निर्मलचरित्रता वाल्मीकेः कवित्वस्य चूडान्तं निदर्शनम्। रामस्य चरित्रं कविनाऽतिसावधानतया चित्रितम्। रामस्य महात्मत्वमनेन श्लोकेन प्रकाश्यते—

'कथञ्चिदुपकारेण कृतेनैकेन तुष्यति।
न स्मरत्यपकाराणां शतमप्यात्मवत्तया॥' (२।१।११)

रामस्यावन्ध्याभिलाषतां बोधयितुमिदमेकं पद्यमेव पर्याप्तम्—

'नास्य क्रोधः प्रसादो वा निरर्थोऽस्ति कदाचन।
हन्त्येष नियमाद् बध्यानवध्येषु न कुप्यति॥'

रामस्य सीताविषयकानुराग एव न रावणवधं प्रयोजितवान्, अपि तु कर्त्तव्यबुद्धिरेव तथा कारितवती—

'स्त्री प्रणष्टेति कारुण्यादाश्रितेत्यानृशंस्यतः।
पत्नी नष्टेति शोकेन प्रियेति मदनेन च॥'

स्त्रीसामान्यकृतं दयालुत्वं, स्वाश्रितपीडेत्यक्रूरत्वं, पत्नीति शोकः, प्रियेति कामश्चेति सर्वं संभूयैव रावणवधप्रयोजकतामगमत् न केवलोऽनुरागः। तथा सति तदीयं महत्त्वं किञ्चिदपकृष्येत।

लक्ष्मणे शक्त्याहते सति तदुद्गारा रामस्य भ्रातृप्रेम व्यञ्जन्ति—

'देशे देशे कलत्राणि देशे देशे च बान्धवाः।
तं तु देशं न पश्यामि यत्र भ्राता सहोदरः॥'

रामस्य महत्त्वं तदाऽतीव स्फुटतां गच्छति यदासौ हतस्य रावणस्य संस्काराय स्वाश्रितान् प्रेरयति—

'मरणान्तानि वैराणि निवृत्तं नः प्रयोजनम्।
क्रियतामस्य संस्कारो ममाप्येष यथा तव॥'

## रामायणस्य कविताशैली

सर्वप्रथमं रामायणं काव्यं वर्त्तते तदनन्तरमेव धर्मग्रन्थ इतिहासोऽन्यद्वा किञ्चिदिति वस्तुतत्त्वं कविना कदापि न विस्मृतमत एव चासौ सर्वत्र कवित्वं व्यञ्जयितुमचेष्टत।

हेमन्तवर्णने काव्यच्छटा दृश्यताम्—

'सेवमाने दृढं सूर्ये दिशमन्तकसेविताम्।
विहीनतिलकेव स्त्री नोत्तरा दिक् प्रकाशते॥
प्रकृत्या हिमकोशाढ्यो दूरसूर्यश्च साम्प्रतम्।
यथार्थनामा सुव्यक्तं हिमवान् हिमवान् गिरिः॥
रविसङ्क्रान्तसौभाग्यस्तुषारावृतमण्डलः।
निश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते॥'

रावणेन बहुशः प्रार्थ्यमाना सीता यदाह तदतिरमणीयं काव्यमिति निदर्श्यते—

'नाहं शक्या त्वया स्प्रष्टुमादित्यस्य प्रभा यथा।
सिंहस्य खादतो मांसं मुखादादातुमिच्छसि॥
यो रामस्य प्रियां भार्यां बलात्त्वं हर्त्तुमिच्छसि।
त्वं क्षुरं जिह्वया लेक्षि सूच्या स्पृशसि लोचने॥
यो रामस्य प्रियां भार्यां पापबुद्ध्या निरीक्षसे॥'

अशोकवाटिकास्थायाः सीतायाः स्वरूपमुपमाभिः प्रकाशितं यथा—

'अभूतेनापवादेन कीर्त्तिं निपतितामिव।
आम्नायानामयोगेन विद्यां प्रशिथिलामिव॥
सन्नामिव महाकीर्त्तिं श्रद्धामिव विमानिताम्।
पूजामिव परीक्षीणामाशां प्रतिहतामिव॥'

कवितायां लोकहितमुद्देश्यं स्यादिति वाल्मीकिना कदापि न विस्मृतम् अत एव चरित्रसृष्टौ वर्णने वा सर्वत्र कविरुच्चमादर्शं विचारं च व्यञ्जितवान्।

'कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे ।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥'

ईदृशा उपदेशाः काव्यस्य महत्त्वं वर्धयन्ति ।

एभिरेव साहित्यगुणैर्वाल्मीकिर्भारतीयकाव्यधाराया हिमवान् मन्यते ।

'कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥'

## महाभारतम्

### महाभारतस्य नामकरणम्

इदं प्रायः सर्वे भारतीया विद्वांसो मन्यन्ते यत् महाभारतं प्राग् जयनाम्ना ततो भारतनाम्ना ततः परतश्च महाभारतनाम्ना प्रसिद्धम् । 'नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् । देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥' इति पद्यं महाभारतस्य जयशब्दव्यवहार्यतामाह । मौलिकं जयनाम्ना व्यवहृतञ्च महाभारतमल्पपरिमाणं स्वरूपत ऐतिहासिककथाप्रधानञ्चावर्त्तत नोपदेशप्रधानम् । जय इति नामैव तस्य ग्रन्थस्य पाण्डवविजयमात्रबोधनाय निर्मितत्वमाह । अमुमेव जयनामानं ग्रन्थं व्यासो निजशिष्यं वैशम्पायनमध्यापयामासेति सा प्रथमावस्था महाभारतस्य ।

वैशम्पायनश्च गुरोर्व्यासादधीते जये स्वरचितसंवादादि योजयित्वा नागयज्ञावसरे जनमेजयं श्रावयामासेति तस्यामवस्थायां चतुर्विंशतिसहस्रश्लोकपरिमाणतां गतं भारतसंज्ञया प्रथमानञ्चेद जातम् । सेयं द्वितीयाऽवस्था ।

अथायमेव चतुर्विंशतिसाहस्रीपरिमाणो भारतग्रन्थः शौनकाय सौतिना श्रावणकाले तत्पृष्टप्रतिवचनैः समुपबृंहितो भूत्वा लक्षश्लोकपरिमाणो महाभारतसंज्ञया प्रथितोऽभवत् । सेयं तृतीया पूर्णतावस्था । तृतीयावस्थायां मनुनाम्नाऽपि व्यवहारविषयतां गतोऽयं ग्रन्थो महाभारतमिति तस्य संज्ञा सौतिकृता ।

### महाभारतं कुत्र शास्त्रेऽन्तर्भवति

प्रथमं महाभारतमितिहासः पुराणमाख्यानकञ्चेति नामभिराख्यायते स्म । साम्प्रतिकास्तु महाभारतम् आचारशास्त्रम् नीतिशास्त्रम् धर्मार्थकाममोक्षाख्यचतुर्वर्गसाधनम् चामनन्ति । भारतं पञ्चमो वेदः इति सर्वत्र प्रचरितम् । सर्वत्रास्मिन् ग्रन्थे वैष्णवसिद्धान्तानां प्रमुखत्वेन प्रतिपादनात् महाभारतं वैष्णवस्मृतिरप्याख्यायते । महाभारतस्य अशीतिप्रतिशतभागोऽनेकविधोपदेशमयः, विंशतिप्रतिशतभाग एवेतिहासप्रतिपादक इति अस्य नीतिशास्त्रेषु गणनोचिता ।

### महाभारतस्य रचनाकालः

सम्प्रत्युपलभ्यमानं महाभारतं मूलमहाभारतात् परतो बहुषु शतकेषु व्यतीतेष्वेव निर्मितं स्यादतो मूलमहाभारतस्य जयाभिधानस्य वर्त्तमानमहाभारतात् पूर्वकालिकत्वं निश्चितम् । अत्र वर्त्तमानमहाभारतस्य रचनाकालसंबंधे विचारणीयमस्ति, तत्र—

१. ख्रीष्टैकादशशतके जातेन क्षेमेन्द्रेण कृतो भारतमञ्जरीनामा ग्रन्थः कथायां वर्त्तमानमहाभारतमनुहरतीति वर्त्तमानमहाभारतस्य एकादशशतकपूर्वकालिकत्वं सर्वथा सिद्धम् ।

२. अष्टमशतकोत्तरार्धे जाता आद्यशङ्कराचार्या महाभारतं स्त्रीभिर्धर्मज्ञानायाध्येयत्वेनादिशन्ति, तेन महाभारतस्य ततः पूर्वकालिकत्वं सिद्धम् ।

३. अष्टमशतकोत्पन्नाः कुमारिलभट्टाः महाभारतस्य बहूनि पर्वाणि स्मरन्ति ।

४. सप्तमशतकोत्पन्ना बाणसुबन्धुप्रभृतयः कवयो महाभारतस्याष्टादशापि पर्वाणि हरिवंशं च स्मरन्ति ।

५. कम्बोडियानामके भारतस्य प्राचीनोपनिवेशे षष्ठशतकसमीपे उत्कीर्णात् शिलालेखात् ज्ञायते यत् तत्रत्याय कस्मैचिन्मन्दिराय रामायणमहाभारतग्रन्थौ भारतेन प्रहितौ । तत्कथाप्रबन्धोऽपि भारतेन कृतः ।

६. यववालिप्रभृतिषु द्वीपेषु षष्ठशतके महाभारतमवर्त्तत, ततोऽपि पूर्वं तिब्बतभाषायां महाभारतस्यानुवादो जातः ।

७. चतुर्थपञ्चमशतकलिखितेषु दानपत्रकेषु स्मृतिरूपेण महाभारतवचनानि निर्दिष्टानि दृष्टानि ।

८. ४६२ ख्रीष्टोत्कीर्णे एकत्र शिलालेखे पाराशर्यव्यासस्य लक्षश्लोकात्मकमहाभारतप्रणेतृत्वमुल्लिख्यते ।

९. सीरियादेशभाषायाम् उपलभ्यमानस्य शान्तिपर्वाध्यायत्रयस्य साक्ष्येण हर्टलमहोदयः प्रमाणयति यत् प्रचलितं महाभारतम् ई० पू० पञ्चमशतकनिबद्धात् महाभारतात् न भिद्यते ।

१०. ड्योन क्राइसोस्तोम ( Dion Chyrsostom ) महोदयस्य साक्ष्येण प्रतीयते यत् ५० ख्रीष्टाब्दकाले लक्षपद्यात्मकं महाभारतं दक्षिणापथे लब्धप्रचारमासीत् ।

११. ख्रीष्टप्रथमशतके स्थितेन वज्रसूचीकृताश्वघोषेण हरिवंशस्थं पद्यमेकमुद्धृतम् । एभिः सर्वैः समुदितैरेतत् सिद्धं यत् ख्रीष्टशतकप्रारम्भे महाभारतमवश्यमवर्त्तत । अपि च—

( क ) पाणिनिः महाभारतं जानाति स्मेति डल्हमैन ( Dalhmann ) साक्ष्येण प्रतीयते ।

( ख ) ख्रीष्टपूर्वपञ्चमशतकप्रणीते आश्वलायनगृह्यसूत्रे महाभारतस्योल्लेखो दृश्यते ।

( ग ) ४०० ई० पू० समये निर्मिते बौधायनधर्मसूत्रे महाभारतस्योल्लेखोऽस्ति ।

( घ ) बौधायनगृह्यसूत्रे महाभारतीयं विष्णुसहस्रनामोद्ध्रियते स्म ।

( ङ ) महाभारतीयशान्तिपर्वणि विष्णोर्दशावतारगणनाकाले बुद्धस्य नाम नायाति ।

(च) मेगास्थनिजप्रणीते भारतवर्णने याः कथास्ता महाभारत एव प्राप्याः ।

(छ) ब्रह्मा सर्वदेवज्येष्ठतया महाभारते प्रतिपादितः । पालिभाषासाहित्येन ज्ञायते यद् ब्रह्मणो ज्येष्ठत्वं ख्रीष्टपूर्वपञ्चमशतकात् प्रागेव प्ररूढप्रचारमासीत् ।

(ज) ज्यौतिषप्रमाणैः अपि कतिपये विद्वांसः कल्पयन्ति यत् वर्त्तमानं महाभारतम् ५०० ई० पू० समयात् प्रागेव निर्मितं न ततः परम् ।

अतः सर्वसमीक्षया महाभारतम् ५०० ई० पू० समयतः परतो न निर्मितं किन्तु कदाचित् पूर्वमेव निर्मितमिति प्रतीयते ।

## महाभारतस्यादरः

रामायणस्य तुलनायां यद्यपि महाभारतस्य प्रचारादरौ अल्पौ, तथापि महत्त्वदृष्ट्या महाभारतं विश्वस्य कुतोऽपि ग्रन्थान्न हीयते । महाभारतं तदानीन्तनभारतीयसमाजनीतिराजनीतिप्रभृतिज्ञातव्यं बोधयति, महाभारतं तदानीन्तनीं भारतीयां सभ्यतां प्रकाशयति । प्रमाणग्रन्थतयैवास्य पञ्चमवेद संज्ञा जाता । यथा रामायणाधारेण बहवो ग्रन्था अरच्यन्त तथैव महाभारताधारेणापि । एतत सर्वमस्य ग्रन्थस्य महत्त्वे साक्षिभूतम् ।

## महाभारतस्य संस्करणानि

महाभारतं शाखाद्वयशालि, देवनागराक्षरशाखाकम्, दाक्षिणात्यशाखाकञ्च । अस्य प्रथमं मुद्रितं संस्करणं १८३४–३९ वर्षसमये जातम्, पुनश्चेदं १८५७ ई० समये टीकाद्वयेन सह प्रकाशितम् । १८५५ ई० वर्षे मद्रासतः तैलङ्गाक्षरैरेकं संस्करणं प्रकाशितम् ।

## महाभारतस्य विभागः

महाभारतमष्टादशसु पर्वसु विभक्तं वर्त्तते, तस्मिंश्च आदि-सभा-वन-विराट-उद्योग-भीष्म-द्रोण-कर्ण शल्य सौप्तिक-स्त्री-शान्ति-अनुशासन-अश्वमेध-आश्रमवासि महाप्रास्थानिक-स्वर्गारोहणपर्वाणि सन्ति । कथा प्रसिद्धा । अनुषङ्गतः शकुन्तलोपाख्यान-मत्स्योपाख्यान-रामोपाख्यान--शिविकथा--सावित्रीकथा–नलोपाख्यानादीनि वर्णितानि ।

युद्धवर्णनमात्रं न व्यासस्य लक्ष्यमपि तु भौतिकजीवनस्यासारतां प्रकाश्य प्राणिनां मोक्षमार्गे प्रवर्त्तनमेव व्यासस्य महाभारतप्रणयने उद्देश्यमासीत्, अत एवात्र शान्तो रसः प्रधानभूतः, वीरस्तु रसोऽङ्गभावं गतः ।

## महाभारतस्य विशिष्टता

व्यासस्य कृतिरियं सर्वैरितिहास इत्युच्यते यतोऽत्र वीराणां पुण्या गाथा वर्णिता । अयं ग्रन्थो धार्मिकग्रन्थो येन लोकः स्वकल्याणं गवेषयति ।

अत्रैव ग्रन्थे गीतारत्नं विद्यते याऽदुग्धेव प्रतीयतेऽनवरतं दुह्यमानाऽपि । गीताग्रन्थस्यादरो महाभारतस्यैव विशिष्टतां प्रमापयति । स्वयमेव व्यासेन महाभारतस्य प्रशंसायां यदुक्तं तदक्षरशः सत्यम्—

'यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजः।
न चाख्यानमिदं विद्यान्नैव स स्याद्विचक्षणः॥
श्रुत्वा त्विदमुपाख्यानं श्राव्यमन्यन्न रोचते।
पुंस्कोकिलगिरं श्रुत्वा रूक्षा ध्वांक्षस्य वागिव॥

## महाभारतीया कविताशैली

'मुहूर्त्तं ज्वलितं श्रेयो न च धूमायितं चिरम्।
मा तुषाग्निरिवानर्चिः धूमायस्व जिजीविषुः॥'
'यस्य वृत्तं न जल्पन्ति मानवा महदद्भुतम्।
राशिवर्द्धनमात्रं स नैव स्त्री न पुनः पुमान्॥'
'निरमर्षं निरुत्साहं निर्वीर्यमरिनन्दनम्।
मा स्म सीमन्तिनी काचिज्जनयेत्पुत्रमीदृशम्॥'
'वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही॥'
'हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः॥'

## महाभारतस्य कतिचिदुपदेशाः

व्यासो धर्मं भारतीयसंस्कृतेः प्राणभूतं मन्यमानः धर्मस्यात्याज्यतामाह—

'न जातु कामान्न भयान्न लोभाद्
धर्मं जह्याज्जीवितस्यापि हेतोः।
धर्मो नित्यः सुखदुःखे त्वनित्ये
जीवो नित्यो हेतुरस्य त्वनित्यः॥'

मनुष्यैः कर्मपरायणैर्भाव्यम्, कर्मविमुखा मानवा मानवपदवीं नार्हन्ति—

'प्रकाशलक्षणा देवा मनुष्याः कर्मलक्षणाः।'

आधुनिकाः समाजशास्त्रिणः कथयन्ति यत्—मनुष्या एव श्रेष्ठजीवास्तेषामेव कल्याणाय सर्वे नियमव्यवहाराः प्रवर्त्यन्ते। इदं वस्तु व्यासेन पूर्वतरमेवोक्तम्—

'गुह्यं ब्रह्म तदिदं ब्रवीमि
नहि मानुषात् श्रेष्ठतरं हि किञ्चित्।'

व्यासेन करशालिनः प्रशंसां कुर्वता स्वावलम्बितायाः मन्त्र एवोक्तः—

'अहो सिद्धार्थता तेषां येषां सन्तीह पाणयः।'

## रामायणमहाभारतयोस्तुलना

रामायणं पूर्वं निर्मितं महाभारतं वा पूर्वं निर्मितमिति प्रश्ने मतभेदेन समाधयो भवन्ति।

वेबरनामा पाश्चात्त्यो विद्वान् भारतीयोऽपि कतिपयबुधवर्गो रामायणे सुन्दरतरं पदावन्यासं दृष्ट्वा महाभारतं पूर्वनिर्मितमुक्तवान्। परन्तु नैतद्युक्तम्, यतो वाल्मीकिरादिकविरिति भारतीया परम्परा रामायणस्य पूर्वनिर्मितत्व-

माह। युगदृष्ट्याऽपि रामायणं महाभारतात्पूर्वतनं सिद्धयति, यतस्त्रेतायुगे रामः, द्वापरे च पाण्डवाः। अन्यान्यपि प्रमाणानि रामायणस्य पूर्वनिर्मितत्वे सन्ति।

यथा—

(क) रामायणेऽव्यावहारिक्यो वार्त्ताः लिखिताः यथा पुत्रार्थं यागः, वानरैः सख्यम्, पर्वतशिलासन्तरणादि च। महाभारते व्यावहारिक्य एव वार्त्ता उक्ताः, यथा द्यूतं, तत्र पराजयः राज्यार्थं युद्धञ्च।

(ख) रामायणे आर्यसभ्यता शुद्धा चित्रिता म्लेच्छसम्पर्को नोक्तः, महाभारते तु दुर्योधनस्य मित्रं लाक्षागृहनिर्माता पुरोचन एव म्लेच्छ आसीत्। महाभारतकाले म्लेच्छभाषाऽपि लोकैर्ज्ञायते स्म।

(ग) रामायणानुसारेण दक्षिणभारतमनार्यवासस्थलम्, आर्याणां सभ्यता विन्ध्यपर्वतपर्यन्तमेव प्रसृता, परन्तु महाभारतानुसारेण दक्षिणभारतं राजनीतिकृतव्यवस्थं सुसभ्यं च वर्ण्यते यतो लोका यज्ञे उपहारानादाय आगता उक्ताः।

(घ) महाभारते युद्धकला विकसिता दृश्यते, सर्वेऽपि अस्त्रसम्प्रदायाः शिक्षिताः प्रतीयन्ते, व्यूहरचना क्रियमाणा वर्ण्यते, रामायणे परं वृक्षैः शिलाभिश्च प्रह्रियते, अधिकाधिकरूपेण कायिकबलप्रयोगः क्रियते, कतिपयैरेव शिक्षयाऽस्त्रचालना ज्ञायते।

(ङ) रामायणकालिकः समाज आदर्शवादमवलम्बते, पितुराज्ञां पुत्रो मनुते, ज्येष्ठभ्रातरं भ्राता कनिष्ठ आद्रियते, परं महाभारते पितुर्धृतराष्ट्रस्येच्छां दुर्योधनो नानुवर्त्तते, भीमो वा युधिष्ठिरस्य सन्धिचर्चां नाभिनन्दति।

(च) रामायणीया कथा महाभारते प्राप्यते, महाभारतीया कथा रामायणे न प्राप्यते।

तदेभिः पूर्वोक्तैः प्रमाणै रामायणस्य महाभारतात् पूर्वकालनिर्मितत्वं स्थिरीक्रियत इति।

## श्रीमद्भागवतम्

'विद्यावतां भागवते परीक्षा' इत्युक्तेर्भागवतस्य काठिन्यं श्रुतचरम्। अस्य भागवतस्य पुराणत्वे लोकाः सन्दिहते, ते हि देवीभागवतमेवाष्टादशपुराणान्तर्गतं मन्यन्ते न श्रीमद्भागवतम्। त्रयोदशशतकोत्पन्नो वोपदेवनामा वङ्गीयो विद्वान् श्रीमद्भागवतं प्रणीतवानिति कथनमपि श्रीमद्भागवतस्य पुराणत्वं सन्देहे पातयतां केषाञ्चनावस्तुतत्त्वविदामेव।

वस्तुतस्तु पुराणेषु अपेक्षितस्य ग्रन्थविस्तरस्य 'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। वंशानुचरितं चेति पुराणं पञ्चलक्षणम्' इति स्वरूपनिर्देशस्य च भागवते सत्त्वेन तदीयं महापुराणत्वं न सन्देहदोलाधिरूढम् श्रीमद्भाग-

वत्तं गायत्रीमन्त्रेणारभ्यते तेनैव च समाप्तिमाप्नोतीति मन्ये महामन्त्रसम्पुटित-मिदं न केवलं पुराणमेवापि तु महापुराणम् । अष्टादशपुराणेषु गणनाऽपि भागवतशब्दसाधारण्यादुभयोः प्राप्नोति, तत्र श्रीमद्भागवतमुत्कृष्टगुणशालितया प्राथम्यमर्हति ।

वोपदेवेन त्रयोदशशतकोत्पन्नेन भागवतं रचितमिति कथनं तु नितान्त-निर्मूलम् तत्र कारणान्यधो निर्दिश्यन्ते—

१. द्वैतमतानुयायी मध्वाचार्यो भागवतोपरि भागवततात्पर्यनिर्णयं नाम टीकाग्रन्थं व्यरचयत्, मध्वाचार्यः ११९९ ई० वर्षे जन्माग्रहीत्, अतस्त्रयो-दशशतकात् पूर्वकालिकं भागवतं त्रयोदशशताब्द्यामुत्पन्नेन वोपदेवेन प्रणीतं न सम्भवति ।

२. एकादशशतकोत्पन्नो रामानुजाचार्यो वेदान्ततत्वसारनामके स्वग्रन्थे भागवतवर्त्तिवेदस्तुतेः पद्यमुद्धृतवान् ।

३ चित्सुखाचार्येण नवमशतकसम्भूतेन विरचिताया भागवतव्याख्याया निर्देशो मध्वाचार्यश्रीधरस्वामिविजयध्वजैः स्वग्रन्थेषु कृतः ।

४. दशमशतकोत्पन्नः प्रत्यभिज्ञादर्शनाचार्योऽभिनवगुप्तः स्वीयायां गीता-टीकायां भागवतस्यैकादशस्कन्धतः कतिपयपद्यानि उद्धृतवान् ।

५. साङ्ख्यकारिकासु माठरवृत्तिनाम्नी व्याख्या विद्यते, यस्याः अनुवादः चीनदेशभाषायां ५५७—५६९ मध्ये कदाचिदजायत, तत्र भागवतस्य श्लोकद्वयं निर्दिष्टम् ।

६. अष्टमशतकोत्पन्नः शङ्कराचार्यः गोविन्दाष्टक-प्रबोधसुधाकरनामकयोः स्वस्तोत्रयोः स्तुतिप्रसङ्गे यासां घटनानां चर्चामकृत ता भागवत इव स्थिताः ।

७. शङ्कराचार्यस्य परमगुरवः गौडपादाचार्याःपञ्चीकरणव्याख्यायां 'जगृहे पौरुषं रूपम्' इति भागवतस्य पद्यं भागवतनामोपादानपूर्वकमुद्धृतवान् । अयं गौडपादाचार्यः षष्ठशतकात् परतो नैव सम्भावयितुं शक्यते ।

इमानि प्रमाणानि सभेरीनादं साधयन्ति भागवतस्य षष्ठशतकात्प्राचीन-ताम्, तथा सति त्रयोदशशताब्दीजातेन वोपदेवेन निर्मितत्वं वक्तुरुपहासायैव केवलम् ।

पद्मपुराणान्तर्गतभागवतमाहात्म्यानुसारेण तु कलियुगप्रारम्भ एव भागव-तस्य निर्माणं सिद्धयति ।

वोपदेवेन यदि भागवतं कृतं तदा हरिलीलामृतं मुक्ताफलं चेति ग्रन्थद्वयं कथं कृतम् ? हरिलीलामृते भागवतानुक्रमणी विद्यते, मुक्ताफलं च भागवतस्थ-सरसश्लोकानां संग्रहः, वोपदेवस्य भागवतरचयितृत्वे मुक्ताफलसदृशस्य ग्रन्थस्य तेनैव प्रणयनं व्यर्थमेव स्यात् ।

## भागवतस्य कवितासौष्ठवम्

भागवतस्य पद्येषु गद्येष्वपि तादृशं चमत्कारकं सौष्ठवं प्राप्यते यत् तेन विदुषां मनांसि हठादाकृष्यन्ते । नवेषु काव्येषु जातेष्वपि भागवतगता काव्य-

माधुरी नापकृष्टतां गता। तत्पठतां मनांसि भागवतं काव्यमेव प्रथमं मन्यन्ते ततोऽनन्तरं पुराणादि किञ्चिदन्यत्। भागवते समायातानि मथुराद्वारकाप्रभृति-नगरीवर्णनानि यथा कलायुतानि तथैव यथार्थान्यपि। केशिनो विकरालस्य रूपस्य जरासन्धभीमयोर्भीषणस्य गदायुद्धस्य च वर्णनमेकतो यदि रोमाञ्चमुदञ्चयति तदा गोपीगीतभ्रमरगीतादि पठ्यमानमेव हृदयं स्तिमितयति नयने उदस्रयति च। दृश्यताम्—

'रत्नप्रदीपनिकरद्युतिभिर्निरस्त-
ध्वान्तं विचित्रवलभीषु शिखण्डिनोऽङ्ग।
नृत्यन्ति यत्र विहितागुरुधूपमक्षै-
र्नियन्तिमीक्ष्य घनबुद्धय उन्नदन्तः॥

द्वारकावर्णनपद्येऽस्मिन् मयूराणां भ्रमस्य वर्णनं नितान्तमनोहरमिदम्। भागवतस्थितेषु वर्णनेषु चमत्कारस्तदाऽतिशयमाप्नोति यदा तत्र वर्णनेष्वपि आत्महिताधायका आध्यात्मिका उपदेशा रसवृष्टिं कुर्वते—

'गिरयो वर्षधाराभिर्हन्यमाना न विव्यथुः।
अभिभूयमाना विषयैर्यथाऽधोक्षजचेतसः॥' (१०।२०।१५)
'सरिद्भिः संगतः सिन्धुः चुक्षुभे श्वसनोर्मिवान्।
अपक्वयोगिनश्चित्तं कामाक्तं गुणयुग्यथा॥' (१०।२०।१४)

रासपञ्चाध्यायो भागवतस्य काव्यकलायाः पराकाष्ठाया निदर्शनम्—

'शरदुदाशये साधुजातसत्सरसिजोदरश्रीमुषा दृशा।
सुरतनाथ तेऽशुल्कदासिका वरद निघ्नतो नेह किं वधः?'॥"
'चरसि यद् व्रजाच्चारयन् पशून् नलिनसुन्दरं नाथ ते पदम्।
तृणकुशाङ्कुरैः खिद्यतीति नः कलिलतां मनः कान्त गच्छति॥'

ईदृशं सङ्गीतमयं हृदयोद्गारप्रकाशनक्षमं च सरसं काव्यं वस्तुतः संस्कृत-साहित्येऽपरत्र दुर्लभमिति कथनं भूतार्थकथनमेव।

## भागवतस्य टीकासम्पत्

वैष्णवदार्शनिकैः सर्वैरेव भागवतस्य व्याख्या कृता, तदयं भागवतग्रन्थो ब्रह्मसूत्रसमतां गतः। अस्य ग्रन्थस्य टीकासम्पदेवादसीयं गौरवं गमयितुमलम्—

१. चित्सुखाचार्यकृता टीका, नोपलभ्यते, केवलं निदिश्यते।
२. श्रीधरकृता टीका, इयं प्रामाणिकी, 'श्रीधरः सकलं वेत्ति श्रीनृसिंहप्रसादतः' इति श्रुतेः।
३. सुदर्शनसूरिणः शुकपक्षीया टीका, श्रीवैष्णवमतपोषिका।
४. वीरराघवाचार्यस्य भागवतचन्द्रचन्द्रिकाटीका, श्रीवैष्णवमतपोषिका।
५. विजयध्वजकृता पदरत्नावली, माध्वमतपोषिका।

६. सनातनगोस्वामिनः बृहद्वैष्णवतोषिणी, दशमस्कन्धस्य ।
७. जीवगोस्वामिनः क्रमसन्दर्भः ।
८. विश्वनाथचक्रवर्त्तिनः सारदर्शिनी ।
९. जीवगोस्वामिनः षट्सन्दर्भः, तत्त्वविवेचनग्रन्थः ।
१०. वल्लभाचार्यस्य सुबोधिनी, वल्लभसम्प्रदायस्य ।
११. शुकदेवाचार्यस्य सिद्धान्तप्रदीपः, निम्बार्कसम्प्रदायस्य ।
१२. श्रीहरेः हरिभक्तिरसायनं नाम पद्यमयी टीका ।

एवं वयं पश्यामो यदाचार्याः भागवतं स्वमतपोषणाय सादरं व्याचख्युः, अतोऽस्य ग्रन्थस्य सारवत्त्वं प्रतीमः ।

'निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसम्मितम् ।
पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः ॥'



# महाकाव्यम्

## महाकाव्यानां विकासः

संस्कृतकाव्यस्योदयो यद्यपि प्रशान्तपावने तपोवनेऽजायत, तथापि तस्य विकासो राज्ञां प्रासादेष्वभूदिति कथनं न सत्यादपेतम्। कालिदासो विक्रमादित्यमन्तरा दुराप एवास्थास्यत्। हर्षवर्धनं विना बाणस्य सम्भवो नासीत्। कविसमादरो राजभिः क्रियमाण एव तानुत्तमकाव्यनिर्माणाय प्रेरयत्। राजानो हि कवीनाद्रियन्त। राज्ञामाश्रये कवित्वं प्रस्फुटति स्म। राज्ञामेव रङ्गशालासु तेषां कृतयोऽभ्यनीयन्त। राज्ञामाश्रयमत्राप्यैव संस्कृतकाव्यं सर्वांशतो विकासमभजत।

संस्कृतकाव्यानि पुराणं रामायणं भारतं च बीजभावेनाश्रयन्ति। यद्यपि वेदेषु वर्णनपराणां मन्त्राणामुपलब्धिरिति तदपि परोक्षभावेन काव्यबीजत्वं भजते परन्तु रामायणादीनि तु प्रत्यक्षभावेनैव काव्यस्य बीजानि वक्तुं शक्यन्ते।

वेदेषु वर्णितानां कथानामाधारेण यद्यपि लौकिककाव्यप्रणयनं प्रायो नाजायत, तथापि कालिदासो विक्रमोर्वशीये वेदवर्णितामेवोर्वशीपुरूरवसोः स्नेहकथां संदृब्धवान्।

राज्ञामाश्रयेषु स्थिता अपि संस्कृतभाषाकवयः केवलं तेषामेव वर्णनानि प्रस्तुतवन्त इति यदाधुनिका आलोचका आक्षिपन्ति तदसारमेव, यतो मेघदूते कालिदासः साधारणभृत्यस्य यक्षस्यैव प्रणयकथाममरतामनयत्, दरिद्रचारुदत्ते भासोऽपि तथैव दरिद्राश्रयकथामुपस्थापितवान्, शूद्रकोऽपि मृच्छकटिके तथैव दरिद्रवृत्तमुपस्थापितवान्।

संस्कृतभाषाकाव्यानां विकासस्यालोचनायां प्रक्रान्तायामिदं न विस्मर्तव्यं यदत्र साहित्ये प्रथमं रसं बन्धुमध्यवसायः प्रवर्त्तते स्म। वाल्मीकिना हि काव्यानामादिकाव्ये स्वरामायणे करुणरसस्य या धारा प्रवाहिता सा सततं स्यन्दमाना एव स्थास्यति। वर्णनप्रवृत्तावनुदिनमुपचीयमानायामपि कालिदासप्रभृतयो महाकवयो रसबन्धायैव व्याप्रियमाणाः प्राप्यन्ते।

अनन्तरकालोत्पन्नाः पुनः कवयो रससापेक्षाः सन्तोऽपि ज्ञानगरिमाणमुपदर्शयितुं कवितामरचयन्, तादृशानां कवीनां मध्ये श्रीहर्षः प्रधानम्। यद्यपि हर्षस्य काव्ये ज्ञानगरिमाऽन्तर्लीनः प्रतिभाति, तथापि रसपेशलता सर्वत्र प्राप्यत एव।

कतिपये पाश्चात्यविद्वांसः संस्कृतकाव्यानां मूलं प्राकृतकाव्यमाहुः, तदनुचितम्, नहि संस्कृतकाव्यानि प्राकृतमूलानि, प्राकृतकाव्यानां तावत्प्राचीनानामश्रवणात्। नाप्यनुवादरूपत्वे संस्कृतकाव्यस्रोतसि एतावती प्रखरता समागन्तुमशक्ष्यत।

संस्कृतकाव्यधाराया रामायणादिहिमवत्प्रसूतत्वेऽपि प्रथमे काव्यग्रन्थाः कतम इति चिन्तायां श्रूयमाणनामधेयाः पाणिनिवररुचिप्रभृतयो यानि काव्यानि रचितवन्तस्त एव ग्रन्थास्तथेति प्रतिपत्तुं शक्यन्ते।

यद्यपि आलोचका वैयाकरणस्य पाणिनेः काव्यप्रणेतृत्वं प्रति सन्दिहन्ति, तथापि भूयांसो विद्वांसो वैयाकरणप्रवरं पाणिनिमेव काव्यप्रणेतारमाहुः। राजशेखरोऽप्यत्रार्थे कृतसाक्ष्यः प्रतीयते—

नमः पाणिनये तस्मै येन रुद्रप्रसादतः।
आदौ व्याकरणं प्रोक्तमनु जाम्बवतीजयम् ॥'

वररुचेः काव्यं यद्यपि नोपलभ्यते तथापि पतञ्जलिप्रामाण्येन भ्राजाख्य-श्लोकरचयितृत्वं वररुचेः प्रमाण्यते।

## पाणिनेः जाम्बवतीजयम्

पाणिनेः परवर्त्तिनो विद्वांसः पाणिनेः कृते 'दाक्षीपुत्र' 'शालातुरीय' इति विशेषणे प्रयुक्तवन्तः। शालातुरशब्दस्य स्थानवाचकता। जेनरल कनिङ्घम-महोदयः शालातुरस्य वर्त्तमानं नाम 'लाहुर' इत्यातिष्ठते। 'लाहुर' नामको ग्रामः पेशावरस्य समीपे विद्यते। उत्तरभारतस्य भौगोलिकज्ञानं यदष्टाध्याय्यां प्रकाशितं पाणिनिना तेनापि तस्योत्तरभारतवर्तित्वं प्रमाणीक्रियते।

तक्षशिलानामके प्रसिद्धे विश्वविद्यालये पाणिनिना विद्याभ्यासः कृतः। पाटलिपुत्रेऽपि वर्षनामकाद्विदुषस्तस्य विद्याध्ययनं प्रथते—

'अत्रोपवर्षवर्षाविह पाणिनिपिङ्गलाविह व्याडिः।
वररुचिपतञ्जली इह परीक्षिताः ख्यातिमुपजग्मुः ॥'

भट्टसोमेश्वरराजशेखरौ विषयेऽत्र साक्षिणौ भवतः। आदौ मन्दमतिरपि पाणिनिस्तपःप्रभावात् प्रतिभाप्रकर्षमापत्।

कतिपये पाश्चत्त्यलेखकाः चतुर्थं ई० पू० पाणिनिकालमाहुः। डा० गोल्ड-स्टकर डा० भाण्डारकरमहोदयौ तु पाणिनेर्बुद्धतः पूर्ववर्त्तित्वमातिष्ठमानौ अन्ततः सप्तम ई० पू० समुत्पन्नतामाहुः।

पातालविजयं जाम्बवतीजयं जाम्बवतीकल्याणं वेति समानार्थं पाणिनि-काव्यनाम।

पाणिनेः कवित्वं सरसं सरलं च। दृश्यताम् —

'गतेऽर्धरात्रे परिमन्दमन्दं गर्जन्ति यत्प्रावृषि कालमेघाः।
अपश्यतो वत्समिवेन्दुबिम्बं तच्छर्वरी गौरिव हुङ्करोति ॥'

'उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्।
यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम् ॥'

'विलोक्य सङ्गमे रागं पश्चिमाया विवस्वतः।
कृतं कृष्णं मुखं प्राच्या नहि नार्यो विनेर्ष्यया ॥'

'अयासमासादस्तमनिन्द्यतेजाः जनस्य दूरोज्झितमृत्युभीतेः।
उत्पत्तिमद्वस्तु तथा विनाश्यं यथाऽहमित्येवमिवोपदेष्टुम् ॥'

'शरदि रविरश्मितप्ता बिभ्राणाः शोषमतिशयरूपिना।
ज्वरिता इव लक्ष्यन्ते लङ्घनयोग्या महासरितः॥'
'निरीक्ष्य विद्युन्नयनैः पयोदो मुखं निशायामभिसारिकायाः।
धारानिपातैः सह किन्नु वान्तश्चन्द्रोऽयमित्यार्त्ततरं ररास॥'
'ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम्।
विनोदयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं चकार॥'

तदयं महावैयाकरणः काव्यनिर्माणेऽपि प्रथमपथप्रदर्शकत्वं गत इति बोध्यम्।

वत्सभट्टिस्तु कालिदासात्परवर्त्तितया मत इति पाणिनेः परिवर्त्तिषु कविषु कालिदास एव प्रसिद्धः कविः।

यद्यपि सुभाषितावली शार्ङ्गधरपद्धतौ सदुक्तिकर्णामृते च वररुचेः पद्यानि प्राप्यन्ते, किन्तु पतञ्जलिनापि वररुचेः पद्यानि स्मर्यन्ते स्म, यतोऽसौ वाररुचं काव्यमित्युदाजहार। तत्र वार्तिककार एवायं कविर्वररुचिरिति बहूनामास्था। वररुचेः काव्यस्य नाम 'कण्ठाभरणम्' इत्यासीत्। यथोक्तं राजशेखरेण —

'यथार्थता कथं नाम्नि मा भूद्वररुचेरिह।
व्यधत्त कण्ठाभरणं यः सदारोहणप्रियः॥'

वररुचि पाटलिपुत्रस्थस्य नन्दस्य महामन्त्री चतुर्थ ई० पू० समुद्भूतश्चाभवदिति भाण्डारकरमहोदयोऽभिप्रैति। तदेवं संस्कृतकविताधाराऽविच्छिन्नप्रवाहाऽवर्त्तत।

## महाकविः कालिदासः

### कालिदासस्य समयः

भारतीयकवीनां समयनिर्धारणमतिकष्टसाध्यं कार्यम्, यतस्तैः स्वविषये किमपि न लिखितम्। अस्यां स्थितौ अन्यकृतैरुल्लेखैः अनुमानेन च प्राचां कवीनां समयो व्यवस्थापनीयो भवति। अस्मादेव हेतोः कालिदासस्य समयसम्बन्धेऽपि मतभेदा वर्त्तन्ते—

१. सर विलियम जोन्स-महोदयः विक्रमसंवत्प्रवर्त्तकस्य ईशवीयसंवत्पूर्ववर्त्तिनः कस्यापि विक्रमादित्यस्य राज्ञः कल्पनां कृत्वा तत्सभामण्डनं कालिदासं मत्वा ई० पू० प्रथमशताब्दीसमुद्भवत्वं कालिदासस्य मन्यते।

२. डा० वेबर लौसन, याकोबि, मॉनियर विलियम, महानुभावानां सम्मतिषु ई० द्वितीयशतकचतुर्थशतकयोर्मध्यकालिकत्वं कालिदासस्य स्वीक्रियते।

३. डा० भाऊदाजी-महाशयस्तु—उज्जयिनीनरेशः हर्षविक्रमादित्यो यं मातृगुप्तनामानं काश्मीरान् शासितुं प्रेषितवान् स मातृगुप्तः कालिदास एवेति मत्वा कालिदासस्य षष्ठशतकोद्भवत्वं स्वीकरोति।

४. वत्सभट्टिमहोदयस्यैकः शिलालेखः प्राप्यते, यत्र ५२९ मालवसंवदुल्लेखो विद्यते, स च ई० ४७३ तः संवदति। तस्य शिलालेखस्य भाषा कालिदासीयां

भाषामनुहरति । एतदेवाधारीकृत्य मैक्डोनलमहोदयः कालिदासस्य पञ्चमशतकोद्भवतामाह ।

५. डा० हार्नले-प्रभृतयस्तु विद्वांसः कालिदासस्य काव्येषु गोप्ता-गोप्त्रे-कुमार-गुप्त-स्कन्द-प्रभृतिशब्दैः गुप्तवंश्यनृपाणां स्मरणं मन्यमानाः कालिदासस्य समयं पञ्चमं षष्ठं वेशवीयशतकमाहुः ।

६. ए० सी० चटर्जीमहोदयस्तु कालिदासं मालवनरेशयशोधर्मसमकालिकं मत्वा षष्ठशतकवर्त्तिनमाह ।

७. रामचन्द्रविनायकपटवर्धनस्तु 'आषाढस्य प्रथमदिवसे', 'प्रत्यासन्ने नभसि' इत्यादि पद्याधारेण ज्यौतिषानुसारिणीं गणनां कृत्वा १८०० वर्षपूर्ववर्त्तिनं कालिदासमातिष्ठते ।

८. आर० कृष्णमाचारियर-महाशयो मेघसन्देशविमर्शनामकग्रन्थे लिखति यत् 'दिङ्नागानां पथि परिहरन्' इति श्लोकस्य साक्ष्येण दिङ्नागसमकालिकः कालिदासः ई० षष्ठशतकेऽवर्त्ततेति ।

९. म० म० रामावतारशर्मा महोदयः कालिदासं द्वितीयचन्द्रगुप्तसमकालिकं मत्वा ३७५तः ४५० ई० मध्यवर्त्तिनं सप्रमाणं साधयति ।

विचारकास्तु—प्राचीनसमये मालवनामकगणस्य प्रामुख्यमवर्त्तत, ई० पूर्वतृतीयशतके क्षुद्रकगणेन सह मिलित्वा मालवगणः सिकन्दरेण सह युयुधे, सहायकाभावात् परं पराजीयत । अयमेव मालवगणो ग्रीकाणां सतताक्रमणात् पीडितः सन् राजस्थानमागत्य ई० प्रथमशतके मालवदेशं स्वायत्तीचकार । गणराज्येऽस्मिन् विक्रमादित्यो मुख्योऽवर्त्तत । शकान् पराजित्यायं शकारिपदवीमभजत्' एतत्प्रवर्त्तितसंवत्सरस्य गणनाम्ना मालवसंवत्-नाम्ना व्यवहारः प्रचलितः । अतः ई० पू० प्रथमशतके विक्रमादित्यस्य सत्तया तत्सभायां स्थितस्य कालिदासस्य स एव समयः संभवति ।

किञ्च—निश्चितः समयोऽश्वघोषस्य, स हि कुषाणनरेशकनिष्कसमकालिकतया प्रथमशताब्दीस्थितः । तत्काव्ये कालिदासस्य काव्यमनुक्रियमाणं वीक्ष्यते । रघुवंशे कुमारे च विद्यमानं पद्यं बुद्धचरितेऽश्वघोषेण किञ्चिदेव विपर्यस्योपन्यस्तम्, अतोऽश्वघोषात्पूर्ववर्त्ती सम्भवति कालिदासः ।

तदाभ्यां सम्भवप्रमाणाभ्यां कालिदासस्य ई० पूर्वप्रथमद्वितीयशतकसम्भवत्वं स्वीकर्त्तुं समर्थयन्ते ।

## कालिदासस्य देशः

कालिदासस्य को देश इति विषये महान् मतभेदः । केचन काश्मीरान्, अपरे वङ्गान्, तदन्ये मिथिलां च तद्देशमाहुः । वयन्तु पश्यामः—मालवगणमुख्यविक्रमादित्यसभास्थस्य कालिदासस्य मालवमुख्यनगरी उज्जयिनी एव स्थानम् । कालिदासस्योज्जयिनीवर्णनपक्षपातोऽपि पक्षमिमं समर्थयते । कालिदासेन यथा सूक्ष्मेक्षिकयावन्तीनां भौगोलिकी स्थितिर्मेघदूते निबद्धा सा तद्देश-

वासित्वे एव सम्भवति। हिमालयादिवर्णनमपि वङ्गमिथिलादिवासिनः कालिदासस्य कृते न तथानुकूलं यथा मालववासिन इत्यपि पूर्वोक्तसमर्थकम्।

## कालिदासस्य रघुवंशकाव्यम्

रघुवंशम् १९ सर्गात्मकं महाकाव्यम्। अत्र रघोर्वंशस्य कथा निबद्धा। दशमसर्गादारभ्य पञ्चदशसर्गपर्यन्तं रामस्य कथा वर्णिता। तदुत्तरं रामवंश्यानां तत्तन्नृपाणां चरितान्युपन्यस्तानि। अन्तिमः सर्गो गर्भान्वितस्याग्निवर्णस्याभिषेकेण समाप्यते—

'तस्यास्तथाविधनरेन्द्रविपत्तिशोकादुष्णैर्विलोचनजलैः प्रथमाभितप्तः।
निर्वापितः कनककुम्भमुखोज्झितेन वंशाभिषेकविधिना शिशिरेण गर्भः॥'

कालिदासोऽग्निवर्णपरवर्त्तिनां राज्ञामपि वर्णनं चिकीर्षति स्म, परमसौ कालेन कवलीकृत इत्येके। अन्ये पुनः 'कालिदासेन परतोऽपि रघुवंशस्य सर्गा लिखिताः परन्तु ते न प्राप्यन्ते' इत्याहुः। बहवस्तु कालिदासस्याग्निवर्णसमकालिकतया ग्रन्थस्य तत्पर्यन्ततां समर्थयन्ते। क्षेत्रेशचन्द्रचट्टोपाध्यायास्तु स्वीये 'डेट ऑफ कालिदास' ( Date of Kalidasa ) नामके निबन्धे रघुवंशमग्निवर्णावसानमेवाहुः, किञ्च ते इदमपि कथयन्ति यत् अग्निवर्णः प्रायो देवभूमिः शुङ्गवंश्य एवासीद्यो ब्राह्मणेन मन्त्रिणा वासुदेवेन हतः।

रघुवंशे येषां राज्ञां वर्णनानि सन्ति, तेषां रामायणवर्णितनृपैः सह भेद आपतति, परन्तु वायुपुराणवर्णितरामवंशावल्या सह रघुवंशवर्णितरामवंशावली भूयसा सामञ्जस्यं धारयति।

## कालिदासस्य कुमारसंभवम्

इदमपि महाकाव्यं १७ सर्गसमाप्यम्। अत्र कुमारजन्मवर्णनम्। रामायणगतं निम्नलिखितं पद्यं पठित्वैव कालिदासेन स्वकाव्यस्य नामकरणं कृतं स्यादिति विद्वांसस्तर्कयन्ति—

'एष ते राम गङ्गाया विस्तरोऽभिहितो मया।
कुमारसंभवश्चैव धन्यः पुण्यस्तथैव च॥' (बालकाण्डे ३७।३२)

अन्ये—नवमसर्गादारभ्य सप्तदशसर्गपर्यन्तस्य भाषा न तथा प्रौढा विद्यते यथाऽऽदिमस्य सर्गाष्टकस्य, किञ्च मल्लिनाथप्रभृतयष्टीकाकृतो नवमसर्गात् व्याख्यां न कृतवन्तः किन्तु अष्टमसर्गपर्यन्तमेव व्याख्यातवन्तः, अतः अष्टमसर्गपर्यन्तमेव कुमारसंभवं कालिदासेन कृतमिति हेतोरष्टमसर्गात् परतः काव्यं केनाप्यन्येन योजितम्। केचित्तु शृङ्गारप्रधानस्याष्टमसर्गस्यापि परकृतत्वं कल्पयन्ति। यथोक्तम् आर० वी० कृष्णमाचार्यमहोदयेन—

'नवमादयस्तु सर्गा येन केनापि विरचिताः स्युरिति भाति। नवमादिषु किल सर्गेषु क्वचिच्छब्दतो वर्णनादिभिश्च पूर्वतरसंवाददर्शनेऽपि भूयसा विसंवाद एव समुपलभ्यते। किञ्च तत्र प्रायेण विसंस्थुलानि परस्परसौहार्दविरहितानि शिथिलशिथिलानि क्वचित् क्वचिदश्लीलप्रायाणि अपप्रयुक्तानि पुनरुक्तकल्पानि पदजातानि नियतमकालिदासीयत्वमेव नवमादीनां सर्गाणामावेदयन्ति' इति।

## कालिदासस्य कविताशैली

कालिदासस्य काव्यमाधुरी तथा प्रसिद्धा यथा नार्हति प्रस्तावनाम्। आलोचकानां सम्मतौ कलापक्षापेक्षया हृदयपक्षस्य चमत्कार्युपन्यसनं यस्य काव्ये संभवति स कवि श्रेष्ठः। एतदनुकूलं हृदयपक्षस्य चमत्कारि चित्रणं कालिदासस्य काव्येषु सर्वत्र प्राप्यते। कालिदासो निजे काव्ये वस्तुवर्णनावसरे रसस्य प्राञ्जलमुपस्थापनं तथा मनोरमपद्धत्या विधत्ते यथा स नातिमन्थर-चपलः कामपि विचित्रां कमनीयतामावहन्नास्वादः पाठकानां हृदयानि हर्षस्तिमितवृत्तीनि विधत्ते।

मानवजीवनस्य सर्वाङ्गसम्पूर्णं चित्रमुपस्थापयितुमसौ रघुवंशं प्रणीतवान्, प्रेम्णः परं प्रकर्षं प्रकाशयितुञ्च कुमारसम्भवं निर्ममे। महाकाव्ययोरनयोर्या रमणीयता सा वचसां पथि न पदं धत्त।

रघुवंशे द्वितीयसर्गे आश्रितपालनाय स्वं वपुरुत्स्रष्टुकामस्य राज्ञश्चित्रणे कविना महानादर्शः स्थापितः रघोविजययात्रावर्णने तेषां देशानां तद् रम्यं चित्रणं कृतं यज्ज्ञातं सन्मनो विनोदयति, स्वयंवरवर्णने मनोभावज्ञानस्य प्रकृष्टः परिचयः प्रदत्तः, दशरथस्यानपत्यतादशायां मुनिशापावसरोत्थाभिरुक्तिभिरनपत्यतावलेशस्य वर्णनं कृतम्, सीतात्यागावसरे रामस्योक्तिषु कर्त्तव्य-प्रेम्णोर्विवादे प्रेम्णः पराजयं प्रकाश्य नैतिकस्तर उन्नमितः, अवसानेऽतिकान्ता-सक्तेरनिष्टफलकत्वं च प्रदर्शितम्। तदित्थं रघुवंशकाव्यमारम्भादवसानं यावदतिरमणीयं रचितम्।

उपमा कालिदासस्येति कथनं तु न प्रमाणमपेक्षते—

'अयोघनेनाय इवाभितप्तं वैदेहि बन्धोर्हृदयं विदद्रे।'
'सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः॥'

इत्यादि निदर्शनोपस्थापनं तु स्वबुद्धिवैभवप्रकाशनमेवेति विरम्यते।

शब्दविन्यासोऽपि कवेरस्य काव्यान्तरविलक्षण एव, दृश्यताम्—

'ततो मृगेन्द्रस्य मृगेन्द्रगामी वधाय वध्यस्य शरं शरण्यः।
जाताभिषङ्गो नृपतिर्निषङ्गादुद्धर्त्तुमैच्छत् प्रसभोद्धृतारिः॥'
'तमार्यगृह्यं निगृहीतधेनुर्मनुष्यवाचा मनुवंशकेतुम्।
विस्माययन् विस्मितमात्मवृत्तौ सिंहोरुसत्त्वं निजगाद सिंहः॥'
'इत्थं द्विजेन द्विजराजकान्तिरावेदितो वेदविदां वरेण।
एनोनिवृत्तेन्द्रियवृत्तिरेनं जगाद भूयो जगदेकनाथः॥'

किमीदृशो शब्दसज्जा क्वचिदपरकविकृतावपि दृष्टा श्रीमद्भिः? कुमार-सम्भवप्रथमसर्गे हिमालयवर्णने या वास्तविकवस्तुन्याससहकृता काव्यकला सा नितान्तहृद्या। तृतीयसर्गे शृङ्गारोद्दीपकसामग्रीसङ्कलने कालिदासेन प्रथमं वसन्तर्त्तुः प्रकटीकृतस्तदनन्तरं काननशोभा समुद्भाविता, तदनन्तरं वसन्त-

पुष्पाभरणं वहन्ती, आवर्जिता किञ्चिदिव स्तनाभ्यां, वासो वसाना तरुणार्क-रागं स्थावरराजकन्या अदर्शयत । एतादृशसामग्रीसमवधाने सत्येव तु –

'हरस्तु किञ्चित्परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे विम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥'

महादेवे पार्वतीवदनं पश्यति सत्येव—

'कामस्तु बाणावसरं समीक्ष्य पतङ्गवद्वह्निमुखं विविक्षुः ।
उमासमक्षं हरबद्धलक्ष्यः शरासनज्यां मुहुराममर्श ॥'

तदियता सम्भारेण समुपपादितः शृङ्गाररसः पाठकेभ्यः स्वदते ।

## अश्वघोषः

अश्वघोषः स्वर्णाक्षीपुत्रः पार्श्वस्य शिष्यश्च कथ्यते । स हि मगधराजाश्रित आसीत् । उत्तरभारतशासकः कनिष्को मगधाधीशम् आक्रमणेन नमयित्वा राज्यस्य परिवर्त्ते वस्तुद्वयं दातुमादिष्टवान्—१. बुद्धस्य पात्रम् २. अश्व-घोषञ्च । राजा मगधानां पात्रं दातुमुद्यतोऽपि कविमश्वघोषं दातुं नैच्छत् । मन्त्रिणस्तं तथाऽवलोक्य चिन्तिता अजायन्त । राजा मन्त्रिणां बोधनाय उपायमेकं कृतवान् । स हि स्वाश्वशालास्थितेभ्योऽश्वेभ्यो दिनमेकं यावत् ग्रास-प्रदानं न्यषेधत् । दिनान्तरे सर्वेषां हयानामग्रे ग्रासं प्रदाय अश्वघोषाय स्वस-ङ्गीतिं कर्त्तुं प्रोक्तवान् । अश्वघोषस्य सङ्गीतिस्तथा मधुराऽजायत यथा तदाकर्ण-नासक्ता अश्वा ग्रासभक्षणं विहाय तां सङ्गीतिमेव श्रोतुमैहन्त, तदा मन्त्रिणः कवेरश्वघोषस्य मूल्यमजानन् । तदवध्येवासौ तन्नाम्ना प्रथते स्म । वास्तविकं च तन्नामालुप्यत । अश्वघोषः कथञ्चित् कनिष्केण सह कश्मीरान् गतस्तेन बह्वादृतश्च । कनिष्कसमकालिकतयाऽश्वघोषस्य समयः प्रथम ई० पू० स्थिरः । अश्वघोषस्य काव्यं चीनभाषायाम् ३८४-४१७ ई० समयेऽनूदितम् । इत्सिङ्गो नाम चीनवासी यात्री अश्वघोषं महोपदेशकं नागार्जुनात् पूर्ववर्त्तिनञ्चाह । अयं साकेतवासीति प्रसिद्धम् ।

## अश्वघोषस्य बुद्धचरितम्

बुद्धचरितं संस्कृतभाषामयं सप्तदशसर्गनिबद्धमेकं महाकाव्यं विद्यते । अत्र बुद्धस्य चरित्रमुपदेशांश्च कविरवर्णयत् । चतुर्दशसर्गस्य मध्यादयं ग्रन्थः चीनभाषा-नुवादेन सह न संवदति । प्रायोऽयं ग्रन्थः चतुर्दशसर्गमध्यभागपर्यन्त एव मिलति स्म, तदनन्तरभागो नश्यति स्म । पश्चादसौ केनचित् कविना निर्माय पूरितः ।

## अश्वघोषस्य सौन्दरानन्दम्

अष्टादशसर्गात्मकेऽत्र महाकाव्ये इक्ष्वाकुवंशस्य राज्ञो नन्दस्य धर्मपरिवर्त्त-नम् सुन्दर्या सह तत्पाणिग्रहणं च वर्णयति कविः । बहोः कालात् पूर्वं बुद्धाः काव्यमिदं नाद्रियन्त । अत्र ग्रन्थे बुद्धधर्मेऽश्वघोषेण ये तर्काः प्रदर्शितास्ते ध्यानमाकर्षन्ति ।

इमे द्वे अपि काव्ये बुद्धधर्मेण सह सम्बद्धे । अश्वघोषस्य रूपकमन्यत्र प्रकरणे निदर्शयिष्यते ।

## अश्वघोषस्य पाण्डित्यम्

अश्वघोषस्य साहित्यिकं पाण्डित्यं बौद्धदर्शनज्ञानं चातीव गभीरमासीत्। स हि दार्शनिकमपि तथ्यं सरससरलशैल्या समुपस्थापयति। अश्वघोषः पूर्वं ब्राह्मण आसीदतो ब्राह्मणसाहित्यस्यापि गाढं ज्ञानं रक्षति स्म। तत्कालप्रचलितानां नीतिशास्त्रकौटिल्यार्थशास्त्रवैद्यकादीनां ज्ञानेन सह व्याकरणस्य विस्तृतं ज्ञानं तेन रक्ष्यते स्म। तदीयं बौद्धदर्शनज्ञानं तु नितान्तसबलमासीत्, असौ योगाचारमतस्यास्थापक आसीत्।

अश्वघोषेण शब्दानां विशिष्टेऽर्थे प्रयोगः कृतो योऽन्यत्र नासाद्यते, यथा 'गन्त्री'शब्दो यानार्थे 'धर्मन्'शब्दश्च व्यवहारार्थे।

## कालिदासकवितासाम्यम्

अश्वघोषकृतिषु सरसा सरला च शैली समाहृतेति प्रागवोचाम। सरसायां सरलायां च शैल्यां ख्यातस्य कालिदासस्य कवितायाः अनुकरणं साम्यं चास्य काव्येषु प्राप्यते इत्यधो निदर्श्यते—

| अश्वघोषपद्यानि | कालिदासपद्यानि |
|---|---|
| तां सुन्दरीं चेन्न लभेत नन्दः<br>सा वा निषेवेत न तं नतभ्रूः।<br>द्वंद्वंध्रुवं तद्विकलं न शोभे-<br>तान्योऽन्यहीनाविव रात्रिचन्द्रौ॥<br>( सौन्दरा० ४।७ ) | परस्परेण स्पृहणीयशोभं<br>न चेदिदं द्वन्द्वमयोजयिष्यत्।<br>अस्मिन् द्वये रूपविधानयत्नः<br>पत्युः प्रजानां विफलोऽभविष्यत्।<br>( रघु० ७।१४ ) |
| वाता ववुः स्पर्शसुखं मनोज्ञा<br>दिव्यानि वासांस्यवपातयन्तः।<br>सूर्यः स एवाभ्यधिकं चकाशे<br>जज्वाल सौम्यार्चिरनीरितोऽग्निः॥<br>( बुद्ध० १३-७३ ) | वाता ववुः सौख्यकराः प्रसेदु-<br>राशा विधूमो हुतभुग् दिदीपे।<br>जलान्यभूवन् विमलानि तत्रो-<br>त्सवेऽन्तरिक्षं प्रससाद सद्यः॥<br>( कुमार० ११।३७ ) |
| स हि स्वगात्रप्रभयोज्ज्वलन्त्या<br>दीपप्रभां भास्करवन्मुमोष।<br>महार्हजाम्बूनदचारुवर्णो<br>विद्योतयामास दिशश्च सर्वाः॥<br>( बुद्ध० १।३२ ) | अरिष्टशय्यां परितो विसारिणा<br>सुजन्मनस्तस्य निजेन तेजसा।<br>निशीथदीपाः सहसा हतत्विषो<br>बभूवुरालेख्यसमर्पिता इव॥<br>( रघु० ३।१५ ) |
| अतोऽपि नैकान्तसुखोऽस्ति कश्चि-<br>न्नैकान्तदुःखः पुरुषः पृथिव्याम्।<br>( बुद्ध० ११।४३ ) | कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा, नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण।'<br>( उत्तरमेघ० ४८ ) |

एभ्यः सादृश्येभ्यः कस्यापि निम्नोन्नतभावं न व्यवस्थापयितुमिच्छामि, केवलं कालिदासकृतावश्वघोषस्यादरं प्रदर्शयामि।

'अश्वघोषस्य कविता तथा सरला यथा लोकस्तमविद्वांसमपि कथयितुं साहसं कर्त्तुमुद्यतः स्यात् । तेन हि स्वानुभूतयोऽनलङ्कृतभावेन व्यक्तीकृताः, कुत्रापि शास्त्रीयं कलाप्रकाशकं पाण्डित्यं नावतारितं—

ऋतुर्व्यतीतः परिवर्त्तते पुनः क्षयं प्रयातः पुनरेति चन्द्रमाः ।
गतं गतं नैव तु सन्निवर्त्तते जलं नदीनां च नृणां च यौवनम् ॥'

'प्रसन्नपदवाक्यानां प्रयोगेण धार्मिकसन्देशानां काव्यतापादने कविरयं नितान्तनिपुण इति श्लोकेनाधोलिखितेन समर्थ्यते—

'कृपणं बत यूथलालसो महतो व्याधभयाद्विनिःसृतः ॥
प्रविविक्षति वागुरां मृगश्चपलो गीतरवेण वञ्चितः ॥'

संन्यासी भूत्वा पुनर्गृहस्थताभिमुखं सुन्दरनन्दं प्रतीदमुपदेशवाक्यम् ।'

## कुमारदासः

कुमारदासस्य विषये एका कथा प्रथते । कुमारदासेन सह कालिदासस्य सख्यमासीत् । कालिदासो यदा कदा कुमारदासनिवासं सिंहलं भूषयति स्म । एकस्मिन् समये कालिदासे सिंहलस्थिते कुमारदासः स्वप्रेयस्यै कस्यैचित् वेश्यायै समस्यामेकां दत्तवान्—'कमले कमलोत्पत्तिः श्रूयते न च दृश्यते' इत्याकाराम् । उक्तवांश्च यत् अस्याः समस्यायाः पूरकं पारितोषकेण सत्करिष्ये इति । तदनन्तरमेव कालिदासोऽपि तस्य एव वेश्याया भवनं गतस्तां समस्यां सद्योऽपूरयत् 'बाले तव मुखाम्भोजे कथमिन्दीवरद्वयम्' । द्रव्यलुब्धा सा गणिका कालिदासं घातयित्वा तच्छवं गुप्तं चकार, परदिने समस्यापूर्तिमादाय कुमारदासं राजानमुपससाद पारितोषिकं चार्थयामास । राजा सन्दिहानमानसो भूत्वा भयताडनादिना रहस्यं स्वीकारयामास । ज्ञातकालिदासावसानश्च तच्छवं प्राप्य तच्चितायामात्मनमाहुतीचकार ।

कथयाऽनया कुमारदासस्य कालिदाससमकालिकत्वं सिद्धयति । माघेन जानकीहरणपद्यमनुकृतं, वामनेन तदुदाहृतमिति तदीयप्राचीनतायाः समर्थकं प्रमाणम् । कुमारदासः सिंहलस्य राजा कुमारमणेः पुत्रश्चासीत् । यदहरसौ जन्माग्रहीत्तदहरेव तस्य पिता युद्धे हतः । पितृमरणानन्तरमसौ मातुलाभ्यां मेघाग्रबोधिभ्यां पालितः । मातुलकृतं पालनमसौ जानकीहरणे नामस्व काव्ये विंशतिसर्गे शेषभागे स्वयमुक्तवान्—

विद्वानस्य कवेः पितार्यहृदयं धीमानितो मानितो
लङ्केश्वर्यभुजः कुमारमणिरित्यासन्नयः सन्नयः ।'
'श्रीमेघोऽस्य कवेरसौ किल वृद्धामातुलो मातुलो ॥'
'भ्राता तन्मातुरस्याः शशिधवलयशःकारणानां रणानां
कर्त्तु पुत्रोऽग्रबोधिर्जनशिरसि लसद्भासुराज्ञः सुराज्ञः ।'
'आत्मापत्याविशेषं पुपुषतुरहृतप्रेमदान्तौ मदान्तौ ॥,

महावंशे यः कुमारधा तुसेनः कित्तिसेनस्य पुत्र उक्तः सोऽस्मात् कवेः कुमारदासाद्भिन्नः पञ्चमशतकोत्पन्नश्च। कालिदासभाषातुलितभाषाकं काव्यमुत्पादितवान् कुमारदासस्तु कालिदाससमये एव स्वीकर्तुं युज्यते।

## कुमारदासस्य जानकीहरणम्

जानकीहरणं चिरमप्राप्तमेवासीत्, केवलं—जानकीहरणं कर्तुं रघुवंशे स्थिते सति। कविः कुमारदासश्च रावणश्च यदि क्षमः' इति स्तुतिपद्यमेव तत्सत्त्वमनुमापयतिस्म। सिंहलभाषानुवादाधारेण राजसुन्दरः पञ्चदशसर्गान्तं जानकीहरणमुद्धृवान्। नन्दर्गीकरमहाशयः हरप्रसादशास्त्रिमहाशयश्च ये संस्करणे प्रकाशितवन्तौ ते अपि क्रमशः १०, १४ सर्गानेव धारयतः।

षोडशः सर्गः बार्नेटमहोदयेन पश्चात्सम्पादितो मुद्रितश्च लन्दन नगरे सम्प्रति अन्येऽपि लेखाः प्राप्ता ये पुस्तकस्य स्वरूपद्वयमुपस्थापयन्ति। रामकृष्णकविना प्राप्ते लेखपुस्तके प्रकाशितपुस्तकेभ्योऽधिकाः श्लोकाः सन्ति।

जानकीहरणस्य प्रथमसर्गे दशरथवृत्तम्, द्वितीये रावणपराजितानामिन्द्रादिदेवानां नागलोके विष्णुसमीपोपसदनम्, तृतीये ऋतुवर्णनम्, चतुर्थे पुत्रेष्टियागो रामस्य जन्म शिक्षाग्रहणं, वसिष्ठाज्ञया राक्षसवधोद्योगश्च, पञ्चमे वसिष्ठाधिष्ठिततपोवनवर्णनम्, षष्ठे मिथिलाप्रस्थानम्, सप्तमे विवाहः, अष्टमे रामसीतयोर्मधुयामिनीवर्णनम्, नवमे वरवध्वोः अयोध्याप्रत्यावर्त्तनम्, दशमे रामवनवासः भरतकृतं तत्प्रार्थनं, सीताहरणञ्च, एकादशे गरुडरावणयोर्युद्धं गरुडवधः सुग्रीवसख्यादिकञ्च, द्वादशे शरद्वर्णनम्, त्रयोदशे सीतावियोगे रामस्य विलपितम्, चतुर्दशे सेतुबन्धनम्, पञ्चदशे रामेण रावणं प्रति सन्देशप्रेषणञ्च। शेषभागे रामायणकथैवानुसृता।

वर्णनादिषु कुमारदासः कालिदासमनुहरति। जल्हणः कुमारदासं रामाश्रयकाव्यकर्त्तृषु द्वितीयं ब्रवीति। कालिदासमतिरिच्य सर्वोत्कृष्टरामाश्रयकाव्यप्रणेता कुमारदास इति तदाशयः।

## कुमारदासस्य भाषाशैली

सर्वात्मना कालिदासमनुहरतः कुमारदासस्य भाषाऽपि कालिदासानुकारिणी सरसा सरला च। कतिचनोदाहरणानि प्रदीयन्ते—

'स्त्रियां न पुंसामुदयस्य कारणं त एव तद्धामविभूतिहेतवः।
तडिद्वियुक्तोऽपि घनः प्रजृम्भते विना न मेघं विलसन्ति विद्युतः।।'

'उभे वक्षसि वश्यानां तिष्ठतो रक्तकर्कशे।
यौवने वनिता वल्कसन्ततिर्वार्धके च नः।।'

'गतापि भर्त्रे परकोपमायतं गिरं कृथा मा परुषार्थदीपिनीम्।
कुलस्त्रियो भर्त्तृजनस्य भर्त्सने वदन्ति मौनं परमं हि साधनम्।।

'फुल्लं यदीदं कमलं किमेतत्तत्रैव नीलोत्पलयोर्विकासः।
इत्यात्तशङ्काऽनुसरस्तरन्त्या हंसः सिषेवे वदनं सुदत्याः।।'

एवमादीनि बहून्युदाहरणानि दातुं शक्यन्ते, यैः काव्यस्य भाषाशैली परिचिता भविष्यति, स्थालीपुलाकन्यायेनैतावतैव विभाव्यताम् ।

## भारविः

### भारवेः परिचयः

कौशिकगोत्रोत्पन्नस्य नारायणस्वामिनः पुत्रो भारविः । भारवेः पूर्वजाः पूर्वम् उत्तरपश्चिमभारतान्तर्गतम् आनन्दपुरं नाम नगरमध्यवात्सुः, परतश्च ते नासिकनामकं दक्षिणभारतनगरमायाताः । एकदा स्वसमसामयिकेन राजकुमारेण विष्णुवर्धनेन समं मृगयायां घोरं काननमुपेतो भारविः मांसं सिषेवे, यत्पापापनोदनाय स तीर्थानि बभ्राम । तदीयं काव्यं श्रुत्वा काञ्चीनृपः सिंहविष्णुस्तमात्मराजधानीमानाययत् । सिंहविष्णुतनयेन राजकुमारमहेन्द्रविक्रमेण सह स तत्र सानन्दमुवास । तस्य पुत्रो मनोरथनामाऽऽसीत् । तस्य प्रपौत्रः दण्डो बभूव । इयं कथाऽवन्तिसुन्दरीकथायां लिखिता । 'भारवेरेव नामान्तरं दामोदर इत्यथवा दामोदरभारवी भिन्नौ पुरुषाविति सन्देहो दुरपासः ।

भारविः शैव आसीत् । भारविरिति नाम एल्होल् शिलालेखे ( Ailhola inscription ) निम्नलिखितरूपेण प्राप्यते—

'येनायोजि न वेश्म स्थिरमर्थविधौ विवेकिना जिनवेश्म ।
स विजयतां रविकीर्त्तिः कविताश्रितकालिदासभारविकीर्त्तिः ॥'

अयं पुलकेशिनो द्वितीयस्य ६३४ ई० सामयिकः शिलालेखः, अतो भारविस्तत्पूर्वतनः सम्भवति ।

किञ्च काशिकावृत्तौ भारवेः काव्यमुदाहृतं दृश्यते ।

अपिच स्वहर्षचरिते बाणेन भारविनामास्मरणात् बाणसमयपर्यन्तं न भारवेः प्रसिद्धिरजायतेति तर्कयितुं शक्यते ।

अतः भारवेः समयः षष्ठेशवीयशतकं मन्तुं युज्यते ।

### भारवेः किरातार्जुनीयम्

शिवार्जुनयुद्धमवलम्ब्य निर्मितं भारवेरेकमेव किरातार्जुनीयाभिधं काव्यं प्राप्यते । अष्टादशसर्गनिबद्धेऽत्र महाकाव्ये महाभारताधारकं सुन्दरमुपाख्यानं चित्रितम् ।

द्यूते पराजितो युधिष्ठिरो भ्रातृभिः पत्न्या च सह द्वैतवने वसति स्म । स दुर्योधनस्य शासनपद्धतिं ज्ञातुमेकं वनेचरं गुप्तचररूपेण प्रेषितवान् । सर्वं ज्ञात्वा प्रतिनिवृत्तो वनेचरो दुर्योधनस्य नीतिपूर्णां शासनपद्धतिं युधिष्ठिराय निवेदयामास । भीमद्रौपद्यौ युधिष्ठिरं बहूत्तेजयामासतुः परं प्रतिज्ञामुल्लङ्घ्य युधिष्ठिरो युद्धार्थं न प्रावर्त्तत । अत्रान्तरे वेदव्यासस्तत्रायातः । स पाशुपतास्त्रमासादयितुमर्जुनं तपस्यार्थमिन्द्रकीलं नाम पर्वतं प्रेषयामास । तपस्यतोऽर्जुनस्य व्रतभङ्गाय देवबाला आगत्य विफलप्रयासा अभवन् । इन्द्रः स्वयं तदाश्रममागत्य तं प्रोत्साहयामास । अर्जुनस्य तपोबलं परीक्षितुं शिवः किरातवेषमाधायागतः ।

मायावी शूकरोऽर्जुनस्याश्रमपार्श्वेऽदृश्यत। अर्जुनकिरातौ सहैव तत्र शूकरे बाणं प्रचिक्षिपतुः। इदमेव युद्धकारणमजायत। युद्ध्यमानयोः किरातार्जुनयोर्गाण्डीवी भुजाभ्यामाजघ्ने कनकशिलानिभं विषमविलोचनस्य वक्षः। अर्जुनपराक्रमदर्शनतुष्टः शिवोऽर्जुनाय पाशुपतास्त्रं ददौ।

## भारवेः काव्यशैली

भारवेरर्थगौरवं प्रसिद्धम्। अतएव मल्लिनाथोऽपि टीकाप्रारम्भे—नारिकेलफलसम्मितं वचो भारवेरित्याह। बहोरप्यर्थराशेरल्पेन शब्देनाभिधाने भारविरभ्यस्तकौशल इति सर्वेषां विदुषां विचारः। भीमभाषणस्य प्रशंसायां युधिष्ठिरेण प्रोक्तम्—

'स्फुटता न पदैरपाकृता न च न स्वीकृतमर्थगौरवम्।
रचिता पृथगर्थता गिरां न च सामर्थ्यमपोहितं क्वचित्॥'

वस्तुत इयमेवोक्तिर्भारविकवित्वप्रशंसायामप्युपयुज्यते।

ऋतूनां जलक्रीडायाश्चन्द्रोदयस्य च वर्णने महती कवित्वप्रतिभा प्रदर्शिता भारविणा। अलङ्काराणां यथावसरोपन्यासे चित्रकाव्यनिर्माणे च परं साफल्यमासादितमनेन कविवरेण। भारविणा नीतयो निपुणमुपन्यस्ताः—

'वरं विरोधोऽपि समं महात्मभिः।'
'न वञ्चनीयाः प्रभवोऽनुजीविभिः।'
'हितं मनोहारि च दुर्लभं वचः।'
'विश्वासयत्याशु सतां हि योगः।'
'सुदुर्लभाः सर्वमनोरमा गिरः।'
'गुरुतां नयन्ति हि गुणा न संहतिः।'
'गुणाः प्रियत्वेऽधिकृता न संस्तवः।'

'षाड्गुण्यप्रभवा नीतिर्वंशस्थेन विराजते' इति क्षेमेन्द्राङ्कितवंशस्थोपनिबद्धां भारवेर्नीतिचर्चामालोक्यैव प्रवृत्ता स्यादिति सम्भाव्यते।

भारवेः कवितानां समीक्षया ज्ञायते यदस्याभिमानधनताऽऽसीत्। भारविकवितायां तर्कात्मकमोजः प्रबलम्। कवित्वनिदर्शनाय कतिचन पद्यान्युद्ध्रियन्ते।

'अथ क्षमामेव निरस्तविक्रमश्चिराय पर्येषि सुखस्य साधनम्।
विहाय लक्ष्मीपतिलक्ष्मकार्मुकं जटाधरः सञ्जुहुधीह पावकम्॥'
'अपवर्जितविप्लवे शुचौ हृदयग्राहिणि मङ्गलास्पदे।
विमला तव विस्तरे गिरां मतिरादर्श इवाभिलक्ष्यते॥'
'तुषारलेखाकुलितोत्पलाभे पर्यश्रुणी मङ्गलभङ्गभीरुः।
अगूढभावापि विलोकने सा न लोचने मीलयितुं विषेहे॥'
'मृणालिनीनामनुरञ्जितं श्रिया विभिन्नमम्भोजपलाशशोभया।
पयः स्फुरच्छालिशिखापिशङ्गितं द्रुतं धनुःखण्डमिवाहिविद्विषः॥'

# माघः

## माघस्य चरितम्

शिशुपालवधप्रणेतुर्माघस्य पितामहः सुप्रभदेवः गुर्जरशासकस्य वर्मलात-नाम्नो नृपस्य मन्त्री आसीत्। माघस्य पिता दत्तको विद्वान् दानप्रसिद्धश्चासीत्। माघस्य जन्म विद्यापीठतया राजधानीभावेन च पुरा प्रथिते मीनमल्लाख्यनगरे अभवत्। अत्रैव मीनमल्ले स्थित्वा ज्योतिषाचार्यो ब्रह्मगुप्तो ब्रह्मस्फुटसिद्धान्तनामकं ग्रन्थं निबबन्ध। पितुर्दानशीलतायाः प्रभावो माघस्याप्युपरि पतितः। असीमदानदोषेणायं निर्धनत्वं गतः।

भोजेन माघस्य सख्या तस्मै द्रव्यसाहाय्यं दत्त्वोपकारः कृतः। अत्र केचित् भोजस्य माघस्य चासमकालिकत्वेन साहाय्यवृत्तान्तमसत्यमातिष्ठन्ते, परं भोजस्यैकस्य भिन्नकालिकत्वेऽपि परस्य भोजस्य तत्कालजातत्वे न किमपि हीयते। कर्नलटॅड ( Col. Tod ) महाशयेन त्रयो भोजाः सप्रमाणं स्वीकृताः। तस्मान्माघकालेऽपि भोजस्य सद्भावः सम्भवति।

## माघस्य समयः

वसन्तगढनामके स्थाने एकः शिलालेखः प्राप्तः, स हि ६२५ ई० वर्षे उत्कीर्णो विद्यते। तत्र वर्मलात इति नाम लिखितम्, अतः सप्तमशतकप्रारम्भो माघस्य समयो निश्चीयते। माघस्य काव्ये द्वितीयसर्गे एकः श्लोको विद्यते—

'अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना।
शब्दविद्येव नो भाति राजनीतिरपस्पशा॥'

अत्र श्लोके वृत्तिन्यासशब्दयोः प्रयोगेण वृत्तिन्यासकाराभ्यां माघेन पश्चाद्भाविना भवितव्यम्। वृत्तिकर्त्ता जयादित्यश्च ६६१ ई० वर्षे मृत इति इत्सिङ्ग-कथनम्, अतो माघः अष्टमसर्गादौ समुद्भूतः स्यान्न तु ततः पूर्वमिति केचनाभिप्रयन्ति, परन्तु तन्न युक्तम्, ततः प्राचीनस्यापि वृत्तिग्रन्थस्य प्रमाणसिद्धत्वात्। यदि जयादित्यात् पूर्वं वृत्तिग्रन्थो नाभविष्यत्तदा बाणेन वृत्तेश्चर्चा स्वीये हर्षचरिते कथमकरिष्यत ? उक्तं हि तेन हर्षचरिते—

'प्रसन्नवृत्तयो गृहीतवाक्याः कृतयुगपदन्यासालोक इव व्याकरणेऽपि'

अतो माघेनापि प्राचीनावेव वृत्तिन्यासौ स्मृताविति तत्समयस्य पूर्वोक्ते निश्चये न कापि विचिकित्सा। भारवेरर्थतोऽनुकरणं माघकाव्ये प्राप्यत इत्यप्यस्य समयनिश्चयं पूर्वोक्तं समर्थयते।

## माघस्य शिशुपालवधकाव्यम्

माघस्य शिशुपालवधे द्वाविंशतिः सर्गाः सन्ति। अत्र युधिष्ठिरस्य राजसूये यागे श्रीकृष्णेन कृतः शिशुपालस्य वधो मुख्यतया वर्णितः। महाभारतोक्तां निष्प्राणामिमां कथां माघो वर्णनमाहात्म्येन चमत्कारिणीं विहितवान्।

## माघे काव्यगुणाः

माघकवेर्विपुला वर्णनशक्तिरत्र पल्लविता जाता, महती चोत्प्रेक्षासमर्थता स्वप्रभावं प्रकाशितवती।

माघस्य शास्त्राध्ययनं माघकाव्ये समहन्यतेव।
माघकाव्येऽलङ्कारयोजनासौन्दर्यं दुरपह्नवम्।

श्रमसाध्यमपीदं काव्यं चमत्कारपूर्णमिति कवेः शक्तिमत्ता स्फुटा। व्याकरणस्य नानाविधाः प्रयोगा अत्र प्रयस्य प्रयुक्ताः, मन्ये भट्टिकवेः प्रभावोऽस्य बुद्धौ समाविष्टः स्यात्।

माघकाव्ये स्पष्टता, मधुरता, ऊर्जस्वलता च सर्वत्र प्रकटीभवन्ति, वीरोक्तिषु त्वस्य विशिष्टा प्रभावशालिता दृश्यते—

'अनृतां गिरं न वदसीति जगति पटहैर्विघुष्यसे।
निन्द्यमथ च हरिमर्चयतस्तव कर्मणैव विकसत्यसत्यता॥'

माघकाव्ये किरातार्जुनीयमनुक्रियमाणमिव दृश्यते, तत्रापि श्रीशब्दः प्रथमं प्रयुक्तोऽत्रापि तथैव। माघस्य श्र्यङ्कतापि किरातस्य लक्ष्म्यङ्कतादर्शनमूला। चतुर्थे सर्गे वृत्तभेदोऽपि सम एवोभयोः। किराते शिवो माघे च हरिः स्तूयते।

## माघस्य भाषाशैली

'उपमा कालिदासस्य भारवेरर्थगौरवम्।
नैषधे पदलालित्यं माघे सन्ति त्रयो गुणाः॥'

इत्याभाणकं प्रसिद्धम्। माघकाव्ये—

'स काञ्चने यत्र मुनेरनुज्ञया नवाम्बुदश्यामवपुर्न्यविक्षत।
श्रितोदयाद्रेरभिसायमुच्चकैरचूचुरच्चन्द्रमसोऽभिरामताम्॥'

इत्यादिकाश्चमत्कारिण उपमाप्रयोगाः—

'आच्छादितायतदिगम्बरमुच्चकैर्गामाक्रम्य संस्थितमुदग्रविशालशृङ्गम्।
मूर्ध्नि स्खलत्तुहिनदीधितिकोटिमेनमुद्वीक्ष्य को न भुवि विस्मयते नगेशम्॥'

इत्यादिकमर्थगौरवस्थलम्—

'मधुरया मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया।
मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे॥'

इत्यादिकञ्च पदलालित्यस्थलं सहृदयानन्दनायालम्। सर्वशास्त्रज्ञानसम्पदुपेतस्य माघस्य काव्ये भाषारामणीयकं कुत्रापि नापहीयते। शास्त्रीयतत्त्वानां काव्येऽवतारणा येन कौशलेन माघेन कृता साऽन्यत्र दुरापा। व्याकरणसदृशस्य रूक्षस्यापि शास्त्रस्य काव्ये—'निहन्त्यरीनेकपदे य उदात्तः स्वरानिव' इत्याकारकः सरसः समावेशः कवेरस्य नैपुण्यं गमयति। हस्तिशास्त्राश्वविद्यादीनां सङ्गीतस्य च ज्ञानमिदमीयं विलक्षणम्। तदेवं सर्वाङ्गपूर्णमस्य काव्यं संस्कृतसाहित्यस्य मेरुदण्डायते। संस्कृतसाहित्ये प्रवेशमीप्सवो लोका माघाय स्पृहयन्ति। माघस्य पद-

प्रयोगपाण्डित्यं दृष्ट्वैव विद्वांसो 'नवसर्गगते माघे नवशब्दो न विद्यते' इत्युक्तिं प्रचारयामासुः।

माघो महान् कविः पण्डितश्चासीत्तेन कवितामलङ्कर्तुं सर्वेषामेव शास्त्राणामुपयोगः कृतो येन तदीया कविता नानाविधभूषायुता कामिनीव सगर्वं पदन्यासमाचरन्ती प्रचरति।

माघकवौ प्रकृतिपर्यवेक्षणकृतं पाण्डित्यमपि न न्यूनमासीत्तेन स्वकाव्यस्यैकादशे सर्गे प्रभातवर्णने प्रकृतेरनावृत्तं सौन्दर्यं प्रकटीकृतं, रैवतकवर्णने च कोऽपि रमणीयः सौन्दर्यप्रकाशः प्रादुर्भावितः। रैवतकपर्वतस्य वर्णने स्थितं घण्टापदघटितमिदं पद्यमेव माघस्य घण्टामाघतया प्रसिद्धिं व्यधात्—

'उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम्।
वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम्॥'

## रत्नाकरः

हरविजयप्रणेता महाकवी रत्नाकरः कश्मीरानलङ्कृतवान्। अस्य पितुर्नाम अमृतभानुरित्यासीत्। रत्नाकरस्याश्रयभूतो राजा चिप्पटजयादित्य आसीत्। रत्नाकरोक्त्या स राजा बालबृहस्पत्युपाधिक आसीत्, यतोऽसौ—'बालबृहस्पत्यनुजीविनः' इति स्वविषये लिखति। चिरजीविना रत्नाकरेण जयादित्यानन्तरं सम्राडवन्तिवर्माऽऽश्रितो यथोक्तम्—

'मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः।
प्रथां रत्नाकरश्चागात्साम्राज्येऽवन्तिवर्मणः॥'

अवन्तिवर्मा च ८५५तः ८८४पर्यन्तं राज्यं कृतवानतो रत्नाकरस्य नवमशतकवर्तित्वं सुप्रतीतम्।

## रत्नाकरस्य हरविजयकाव्यम्

हरविजयकाव्यं संस्कृतकाव्येषु परिमाणतो गुणतश्च श्रेष्ठं मन्यते। अत्र पञ्चाशत् सर्गाः सन्ति ४३२१ संख्यकानि च पद्यानि विद्यन्ते। रत्नाकरस्य समये माघस्य महती ख्यातिरासीत्, माघस्य प्रसिद्धिमालोक्य तत्प्रतिस्पर्धयेव रत्नाकरेण हरविजयं प्रणीतम्। माघेन स्वकाव्ये—'लक्ष्मीपतेश्चरितकीर्त्तनमात्रचारु' इति लिखितं, रत्नाकरेणापि 'चन्द्रार्धचूडचरिताश्रयचारु' इति हरविजयविषये प्रोक्तम्।

शङ्करकृतोऽन्धकासुरवध एवात्र विषयतया विवर्णयिषितः, तमेव विषयं सज्जयितुं प्रसङ्गतो जलक्रीडा-चन्द्रोदय-समुद्रोल्लास-प्रसाधन-विरह-पानगोष्ठ्यादयोऽपि ललितमधुरसालङ्कारप्रसादपूर्णाभिर्वाग्भिः वर्णिताः। सर्वगुणसम्पन्नमपीदं काव्यं पाण्डित्यभारेण तथाक्रान्तं यथा बहुप्रचारं नाजायत। षष्ठसर्गे भगवत्स्तुतौ ४७सर्गे चण्डिकास्तुतौ च कविना शास्त्रीयपाण्डित्यस्य पराकाष्ठा प्रदर्शिता।

कल्हणेनास्य काव्यस्योल्लेखः कृतः, अलकेनात्र व्याख्या लिखिता, क्षेमेन्द्रेणात्र प्रयुक्ताया वसन्ततिलकायाः प्रशंसा कृता।

## हरविजयतो निदर्शनानि

'आबद्धवासुकिफणागणफूत्कृताग्नि-तापस्फुटद्विकटकोटिशिखाश्मकूटम् ।
कोदण्डमिन्दुमुकुटः स्वभरक्षमं यमादाय दानवपुरीः किल निर्बिभेद ॥'(४।२७)
'अस्ताद्रिगोचरचरं रुरुचे चिराय गोरोचनारुचिमरीचिविरोचनस्य ।
बिम्बं दिनान्तपवनाहृतपुण्डरीकपर्यस्तपक्ष्मरजसेव विलङ्घ्यमानम् ॥' (९।२)
'यः सज्जनो जगति यश्च खलैकवृत्तिर्द्वावप्यलीकवचसावभिदध्महे तौ ।
एको गुणानसत एव यतः परस्य वक्तीतरः किल सतोऽपि विनिह्नुते तान् ॥'

## शिवस्वामी

'कप्फनाभ्युदय'नामकबौद्धकाव्यप्रणेता शिवस्वामी नाम महाकविः कश्मीरानलंकृतवान् । तस्य समयः ८५८–८८५ ई०, राज्यं कुर्वतोऽवन्तिवर्मणः सभापण्डिततया नवमशतकम्—

'मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः ।
प्रथां रत्नाकरश्चागात्साम्राज्येऽवन्तिवर्मणः ॥'
( राजतरङ्गिणी )

शैवमतावलम्बी सन्नपि चन्द्रमित्रनामकबौद्धसन्न्यासिनोऽनुरोधेनायं पूर्वोक्तं महाकाव्यं निरमात् । वाग्देवतावतारः काव्यप्रकाशकारोऽस्मात् काव्यात् 'उल्लास्यकालकरवालमहाम्बुवाहम्' इत्यादि पद्यं ध्वन्युदाहरणप्रस्तावे समुद्धृतवानतोऽस्य महती प्रसिद्धिरासीदिति सुखमनुमातुं शक्यते ।

बौद्धसाहित्ये कप्फनस्यावदानं प्रसिद्धम्, कप्फनो दक्षिणदेशस्थलीलावतीनगर्याः शासक आसीत् । स हि श्रावस्तीशासकं प्रसेनजितं जिगाय । प्रसेनजिता ध्यातो बुद्धः प्रकटीभूय कप्फनं विजितवान् । अन्ते कप्फनो बुद्धं शरणं प्रपन्नः कृतकृत्यतामापत् । इतीयती एव कथा शिवस्वामिना विंशतिसर्गैर्वर्णिता । इमामेव कथां रञ्जयितुं तेन मलयपर्वतर्त्तुकुसुमावचयजलक्रीडासूर्यास्तचन्द्रोदयमदिरापानानि विस्तरेण वर्णितानि । तस्य बहुकथाज्ञत्व-चित्रकवित्व-यमककवित्व-सरसकाव्यनिर्माणक्षमत्वानि तेन स्वयमुक्तानि—

'विदितबहुकथार्थश्चित्रकाव्योपदेष्टा यमककविरगम्यश्चारुसन्दानमानी ।
अनुकृतरघुकारोऽभ्यस्तमेण्ठप्रचारो जयति कविरुदारो दण्डिदण्डः शिवाङ्कः ॥'

कालिदासस्य माघस्य रत्नाकरस्य काव्यानि चानेन निपुणं परिशीलितानि इति दृश्यते तदीयकवितायाम्—

'वेणीषु मूर्च्छामिव सम्प्रयाताः कपोलयोर्लीनमिवादधानाः ।
स्मितेष्विवोच्छ्वासमिवोद्वहन्तो विलासिनीः शिश्लिषुरिन्दुपादाः ॥'
'धृतसन्धिरसो विचित्रवृत्तिर्विदधानः स्फुटशुद्धपात्रयोगम् ।
मधुवारविधिः सनायकाङ्को ववृधे नाटकवन्नितम्बिनीनाम् ॥'
'विनयं विनयन् स्मितानि पुष्णन् नयनानि भ्रमयन् वचांसि धुन्वन् ।
मुखराणि विभूषितानि कुर्वन् वरवेषो ववृधे मदो वधूनाम् ॥'

'मुहुरविशदा विस्रम्भार्द्रा मुहुःस्मृतमन्यवो
मुहुरसरलाः प्रेमप्रह्वा मुहुर्मुहुरस्थिराः।
वितथशपथोपालम्भाज्ञा मुहुर्मधुरा मुहुः
परिववृधिरे निष्पर्यन्ता मिथो मिथुनोक्तयः॥'

## क्षेमेन्द्रः

व्यासदासापरनामा क्षेमेन्द्रः प्रकाशेन्द्रस्य पुत्रः सिन्धोः पौत्रः काश्मीरदेशवासी चासीत्। क्षेमेन्द्रस्य पिता प्रकाशेन्द्रः ब्राह्मणानां संरक्षक आसीत्। प्रथममसौ शैव आसीत्परन्तु पश्चात्, सोमाचार्यप्रभावात् वैष्णवः समजायत। शास्त्रगुरुस्तस्याभिनवगुप्तः। काश्मीरराजस्य अनन्तस्य सभापण्डितः क्षेमेन्द्रः, अनन्तस्य शासनकालः १०२७ ईशवीतः १०६४ ई० पर्यन्तम्, अतः क्षेमेन्द्रस्य समयः एकादशशतकमिति निश्चित्य वक्तुं शक्यते।

अनन्तस्य शासनकाले असन्तोष-षड्यन्त्र-नैराश्य-रक्तपातानां बाहुल्यमासीदतः कोमलकवितायाः कृते तद्युगमयुक्तमासीत्, तथापि क्षेमेन्द्रः स्वदेशवासिनः सत्पथमानेतुं प्रयस्यन्निव बहूनुपदेशप्रचुरान् ग्रन्थान्निर्बबन्ध।

### क्षेमेन्द्रस्य कृतयः

क्षेमेन्द्रेण शशिवंशमहाकाव्यम्, अमृतरङ्गकाव्यम्, अवसरसारः, मुक्तावली, लावण्यवती, देशोपदेशः, पवनपञ्चाशिका, पद्मकादम्बरी (एते नाममात्रशेषाः), अवदानकल्पलता, नीतिकल्पतरुः, लोकप्रकाशकोशः, सेव्यसेवकोपदेशः, विनयवल्ली, दर्पदलनम्, कविकण्ठाभरणम्, रामायणमञ्जरी, भारतमञ्जरी, बृहत्कथामञ्जरी, समयमातृका, दशावतारचरितम् (एते श्रूयन्ते प्राप्यन्ते च) एते ग्रन्था रचिताः।

क्षेमेन्द्रस्य अवदानकल्पलता सार्धशतवर्षाभ्यन्तर एव तिब्बतभाषाऽनुवादावसरं लेभे इति क्षेमेन्द्रस्य धार्मिकोदारतायाः सुन्दरकाव्यशैल्याश्च प्रबलं प्रमाणम्।

दशावतारचरितन्नाम महाकाव्यं क्षेमेन्द्रस्यान्तिमा मधुरतमा च कृतिः। अस्मिन् स्वतन्त्रे महाप्रौढे च महाकाव्ये विष्णोर्दशावताराः रोचकशैल्या वर्णिताः। क्षेमेन्द्रस्य भाषा मधुरा, सरसा सुबोधा चासीत्। उदाहरणमेकं यथा—

'दयितजनवियोगोद्वेगरोगातुराणां विभवविरहदैन्यम्लायमानाननानाम्।
शमयति शितशल्यं हन्त नैराश्यनश्यद्भवपरिभवतान्तिः शान्तिरन्ते वनान्ते॥'

## मङ्खुकः

मङ्खः, मङ्खुकः, मङ्खको वा विश्वावर्त्तस्य पुत्रः काश्मीरवासी चासीत्, मङ्खुकस्य भ्राता अलङ्कारः ११२७ तः ११५९ ई० पर्यन्तं काश्मीरान् शासितवतो जयसिंहस्य मन्त्री आसीदिति मङ्खुकस्यापि स एव समयो निश्चीयते। रुय्यकस्तस्य साहित्यविद्यागुरुरासीत्। मङ्खुकेन श्रीकण्ठचरितन्नाम

पञ्चविंशतिसर्गसम्पूर्णं महाकाव्यं निबद्धम्। अत्र महादेवेन कृतस्त्रिपुरध्वंसो विशिष्य वर्णितः। अन्तिमे सर्गे समकालिकानां सन्निहितपूर्वकालवर्त्तिनां च कवीनां वर्णनं कृतं यदतिरमणीयम्। प्रथमः सर्गो मङ्गलाचरणात्मकः। अत्र काव्ये जोनराजस्य टीका विद्यते।

मङ्खुकेन अलङ्कारसूत्राण्यपि कृतानि, यत्र समुद्रबन्धेन टीकाकृता। मङ्खुकस्य काव्ये पदानां मधुरो विन्यासः अर्थानां समुद्भावना, भक्तेश्चोद्रेकः सहृदयानां मनांसि मदयन्ति। निदर्शनं यथा—

'सूक्तौ शुचावेव परे कवीनां सद्यः प्रमादस्खलितं लभन्ते।
अधौतवस्त्रे चतुरं कथं वा विभाव्यते कज्जलबिन्दुपातः॥'

'नो शक्य एव परिहृत्य दृढां परीक्षां ज्ञातुं मितस्य महतश्च कवेर्विशेषः।
को नाम तीव्रपवनागममन्तरेण भेदेन वेत्ति शिखिदीपमणिप्रदीपौ॥'

निम्नलिखितमन्धकारवर्णनमतीवमौलिकं रमणीयञ्च विद्यते—

'किन्नु कालगणनापतेर्मसीभाण्डमर्यमवपुर्हिरण्मयम्।
तत्र यद् विपरिवर्तिताननेलिम्पति स्म धरणीं तमोमसी॥'

अस्ताभिमुखः सूर्यो विश्वव्यवहारगणनाप्रवृत्तस्य कालस्य स्वर्णमयं मसीभाजनम्, सूर्ये परिवर्त्तितमुखे सति मसीपात्रमधोमुखं जातं ततः पतिता तमोमसी जगत् श्यामीकरोतीति भावः।

## श्रीहर्षः

श्रीहर्षस्य नैषधीयचरितं नितान्तप्रसिद्धं विशालकायं महाकाव्यम्। श्रीहर्षस्य पिता श्रीहीरस्तथा माता च मामल्लदेवी आस्ताम्। श्रीहीरः काशीवासिनो गढवालवंशोद्भवस्य विजयचन्द्रस्य सभापण्डित आसीत्। शास्त्रार्थे केनापि विदुषा जितः। श्रीहीरो मरणसमये स्वजेतारं पण्डितं पराजेतुं स्वसुतं श्रीहर्षं कथितवान्। तदाज्ञावशवर्त्ती श्रीहर्षो गङ्गातीरे चिन्तामणिमन्त्रजपं कृत्वा विशिष्टां प्रतिभां प्राप। लब्धवैदुष्यश्चासौ विजयचन्द्रस्य सभां प्रविश्य निम्नलिखितं श्लोकं पपाठ—

'गोविन्दनन्दनतया च वपुः श्रिया च मास्मिन् नृपे कुरुत कामधियं तरुण्यः।
अस्त्रीकरोति जगतां विजये स्मरः स्त्रीरस्त्रीजनः पुनरनेन विधीयते स्त्री॥'

एतत्कृतीनां कश्मीरेषु महती प्रतिष्ठाऽऽसीत्, प्रसिद्धिरिमं मम्मटभागिनेयं समर्थयति।

कान्यकुब्जाधीश्वरस्य जयचन्द्रस्य सभाऽनेनालङ्कृता। तदुक्तमनेनैव—

'ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरात्।' इति।

जयचन्द्रपितुर्विजयचन्द्रस्य प्रशंसायां विजयप्रशस्तिनामा ग्रन्थोऽनेन लिखितः।

जयचन्द्रो गढवालवंश्यो राजाऽऽसीत्। एकादशे द्वादशे चेशवीयशतके अस्य वंशस्योत्तरभारते प्रचुरः प्रभाव आसीत्। विजयचन्द्रजयचन्द्रौ मिलित्वा

११५६ ईशवीतः ११९३ ई० पर्यन्तं राज्यं चक्रतुः। अतो हर्षस्य स्थितिकालो द्वादशशतकोत्तरार्धभागो मन्यते।

## श्रीहर्षकृतिपरिचयः

१. स्थैर्यविचारणप्रकरणम्—नामतो दार्शनिकग्रन्थोऽयं प्रायः क्षणभङ्गवादखण्डनपरः।
२. विजयप्रशस्तिः—जयचन्द्रपितुर्विजयचन्द्रस्य प्रशंसापरकं काव्यम्।
३. खण्डनखण्डखाद्यम्—स्वनामख्यातोऽनिर्वचनीयतासर्वस्वभूतो वेदान्तग्रन्थः।
४. गौडोर्वीशकुलप्रशस्तिः—वङ्गीयस्य कस्यचिद्राज्ञः स्तुतिपरं काव्यम्।
५. अर्णववर्णनम्—स्वनामख्यातम्।
६. छिन्दप्रशस्तिः—अज्ञातपरिचयस्य कस्यापि राज्ञो वर्णनपरोऽयं ग्रन्थः स्यात्।
७. शिवशक्तिसिद्धिः—शिवशक्त्योरुपासनाग्रन्थोऽयं सम्भाव्यते।
८. नवसाहसाङ्कचरितचम्पूः—नाम्नैव विषयः स्वरूपञ्च आख्यायेते।
९. नैषधीयचरितम्—

अत्र महाकाव्ये निषधशासकस्य नलस्य चरित्रं प्रस्तूयते। अस्मिन् ग्रन्थे द्वाविंशतिः सर्गाः २८३० श्लोकाश्च सन्ति। एतावतापि ग्रन्थेन नलचरितैकदेश एव वर्ण्यते (केचित्तु ग्रन्थमिममपूर्णलब्धमाहुः), नलदम्पत्योः परिणयावधिवृत्तान्तः वर्णनमय्या पद्धत्या वर्णितोऽत्र ग्रन्थे। राजनि नले दमयन्तीरक्ते दमयन्तीचिन्तया दूयमाने स्वारामं पर्यटति सति तेन हंसो गृह्यते दयया मुच्यते च। स एव प्रत्युपकारभावनया नलस्य स्तुतिं दमयन्तीसमीपे करोति। दमयन्त्याः पूर्वराग उदयते। दमयन्त्याः पिता विदर्भः स्वयंवरमारचयति। दमयन्तीकामुका देवा अपि तत्रायान्ति, धृतनलस्वरूपाश्चत्वार इन्द्रयमवायुकुबेराः पञ्चमो नलश्चेति सर्वेषां समरूपतया दमयन्ती विचित्रां दशां प्रपद्यते। सभावर्णनाय समागता सरस्वत्यपि श्लेषवर्णनया दमयन्तीं व्यामोहयति। अवसाने दमयन्त्याः पातिव्रत्येन दृढानुरागेण च प्रीता देवाः स्वानि विशिष्टचिह्नानि प्रकटीकुर्वन्ति यैर्नलः परिचितो च भवति। जाते पाणिग्रहे कलिप्रवेशो मुखमुद्रणं च तस्य भवति। नलदमयन्त्यो सुखसङ्गमेन च ग्रन्थः समाप्यते।

अस्य ग्रन्थस्य सरसा वर्णनपद्धतिः शृङ्गारप्रकर्षपूर्णकथा च सहृदयहृदयान्यावर्जयतः। यथैव श्रीहर्षस्य खण्डनखण्डखाद्यमद्वितीयं तथैव नैषधीयमपि स्वक्षेत्रेऽनुपमम्। या प्रतिभा दर्शनरहस्यानि सरलीकरोति सैव शृङ्गारधारामपि प्रवाहयति। स्वयमुक्तं श्रीहर्षेण—

'साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले
तर्के वा मयि संविधातरि समं लीलायते भारती।
शय्या वाऽस्तु मृदूत्तरच्छदवति दर्भाङ्कुरैरास्तृता
भूमिर्वा हृदयङ्गमो यदि पतिस्तुल्या रतिर्योषिताम्॥'

श्रीहर्षो यथैव दार्शनिककविः तथैव योगीति स्वयमुक्तं तेन—

'यः साक्षात्कुरुते समाधिषु परं ब्रह्म प्रमोदार्णवम् ।'

श्रीहर्षः स्वीयस्य शास्त्रज्ञानस्य परिचयं प्रतिसर्गं ददाति, परन्तु सप्तदशसर्गे तु तेन स्वीयं नास्तिकारितकसकलदर्शनप्रवीणत्वं व्याकरणनिष्णातत्वं च सडिण्डिमनादं घोषितम् ।

वेदान्तिना श्रीहर्षेण नैयायिका वैशेषिकाश्च कवितायामप्युपहसिताः—

'मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम् ।
गोतमं तमवेक्ष्यैव यथा वित्थ तथैव सः ॥'

'ध्वान्तस्य वामोरु विचारणायां वैशेषिकं चारुमतं मतं मे ।
औलूकमाहुः खलु दर्शनं तत् क्षमं तमस्तत्त्वनिरूपणाय ॥'

श्रीहर्षस्योपरि प्राचां कवीनां प्रभावः संभवति । इन्दुमतीस्वयंवरं दृष्ट्वैवानेन दमयन्तीस्वयंवरो वर्णितः स्यादित्यपि सम्भवति, परन्तु अस्य महाकवेर्वर्णनपद्धतिः सर्वथा स्वीया इत्यत्र कस्यापि वैमत्यं न सम्भवति । माघस्य प्रभातवर्णनेन प्रभावितः श्रीहर्षः स्वीये महाकाव्ये एकोनविंशे सर्गे प्रभातवर्णनं कृतवान् परं शैली सर्वथा निजा प्रयुक्ता ।

सर्वतः प्रधानमस्य महाकवेर्विषय इदं वक्तव्यमस्ति यद् देवभाषासाहित्यस्य अपकर्षकाले अन्धकारयुगे प्रादुर्भूतोऽयं महाकविस्तादृशमालोकं दत्तवान् येन सकृत् सर्वा दिश एव चाकचिक्यपूर्णाः कृताः, अन्धकारयुगस्य प्रतिष्ठा शतकृत्वः समेधिता ।

श्रीहर्षस्य कवितायां नारीरूपस्य वर्णनमतीव सजीवम् । चतुर्थसर्गे विप्रलम्भशृङ्गारस्य वर्णनमपि परमरमणीयम् । चन्द्रोपालम्भस्तु संस्कृतसाहित्यस्य निधिरेव । सर्वाधिकाकर्षणस्थानं श्रीहर्षस्य कथोपकथनचातुर्यवर्णनम्—

'मयाऽङ्ग पृष्टः कुलनामनी भवानमू विमुच्यैव किमन्यदुक्तवान् ।
पिपासुता शान्तिमुपैति वारिजा न जातु दुग्धान्मधुनोऽधिकादपि ॥'

'वृथा कथेयं मयि वर्णपद्धतिः कयाऽऽनुपूर्व्या समकेति केति च ।
क्षमे समक्षव्यवहारमावयोः पदे विधातुं खलु युष्मदस्मदी ॥'

नलदमयन्त्योः सरसा कथाप्रवणता कस्य नानन्दाय जायते । एवमेव परत्रापि कथोपकथनप्रसङ्गे भवन्तः सरसं वाक्यकदम्बं प्राप्स्यन्ति ।

अन्येऽपि शास्त्रसम्मतास्तर्का अत्र काव्ये यत्र तत्र कविना सप्रयासं समावेशिताः सहृदयानां मनांसि रञ्जयन्ति । उत्प्रेक्षाणामपि चमत्कारोऽस्य नितान्तहृद्यः—

'यदस्य यात्रासु बलोद्धतं रजः स्फुरत्प्रतापानलधूममञ्जिम ।
तदेव गत्वा पतितं सुधाम्बुधौ दधाति पङ्कीभवदङ्कतां विधौ ॥'

'हृतसारमिवेन्दुमण्डलं दमयन्तीवदनाय वेधसा ।
कृतमध्यबिलं विलोक्य ते धृतगम्भीरखनीखनीलिम ॥'

अस्य उत्प्रेक्षाचमत्कारसहकृतो गाढबन्धत्वकृतश्चमत्कारो विस्मयमावहति—

'वैदर्भीकेलिशैले मरकतशिखरादुत्थितैरंशुदर्भै-
र्ब्रह्माण्डाघातभग्नस्यदजमदतया ह्रीधृतावाङ्मुखत्वैः ।
कस्या नोत्तानगाया दिवि सुरसुरभेरास्यदेशं गताग्रै-
र्यद् गोग्रासप्रदानव्रतसुकृतमविश्रान्तमुज्जृम्भते स्म ॥'

दानमाहात्म्यवर्णनमपि पञ्चमसर्गे नितान्तरमणीयं दृश्यते—

'दानपात्रमधमर्णमिहैकग्राहि कोटिगुणितं दिवि दायि ।
साधुरेति सुकृतैर्यदि कर्त्तुं पारलौकिककुसीदमसीदत् ॥'

वयं पश्यामः—श्रीहर्षस्य कविता सरसया पद्धत्या प्रचलन्ती मध्ये मध्ये दार्शनिकतत्त्वान्युपन्यस्य कविना कठिनीकृता । एतदेव मनसिकृत्य कविना स्वयमुक्तम्—

'ग्रन्थग्रन्थिरिह क्वचित् क्वचिदपि न्यासी प्रयत्नान्मया
प्राज्ञम्मन्यमना हठेन पठिती माऽस्मिन् खलः खेलतु ।
श्रद्धाराद्धगुरुः श्लथीकृतदृढग्रन्थिः समासादय-
त्वेतत्काव्यरसोर्मिमज्जनसुखव्यासज्जनं सज्जनः ॥'

नलकथाधाराणि नलोदय-नलाभ्युदय-दमयन्तीकथा-दमयन्तीपरिणय-राघवनैषधीय-कलिविडम्बन-नलचरित-सहृदयानन्दादीनि सर्वाण्यपि काव्यानि नैषधेनास्तं नीतानीति काव्यस्यास्य रमणीयत्वे प्रमाणम् ।

यद्यपि नैषधकाव्यं सीमबद्धताया अभावात् काठिन्यादेकस्यैवार्थस्य शब्दान्तरेणावर्त्तनाच्च माघकिरातार्जुनीयापेक्षया न्यूनमर्यादं मन्तव्यं भवति तथापि नैषधे स्थितं रसोल्बणत्वं सर्वमतिशय्य वर्त्तते । एतद्दृशैव लोकाः कथयन्ति—

'उदिते नैषधे काव्ये क्व माघः क्व च भारविः ?'

## नैषधस्यापूर्णता

नैषधीयचरितं लिखितुमारभमाणस्तद्विवाहेन काव्यं कथं समापयेत् ? अत्र प्रसङ्गे उत्तरद्वयं सम्भवन्ति—तावदेव निर्माय कविः परलोकं गतः, इत्येकम् । अथवा—निर्मितस्याप्यग्रेतनस्यांशस्य प्राप्तिर्न जायते । तत्र प्रथममुत्तरं नोचितं यतः खण्डनखण्डखाद्ये श्रीहर्षेण नैषधस्य चर्चा कृता, तेन नैषधं समाप्य खण्डनप्रणयनं प्रतीयते । अतः परिशेषान्नैषधशेषांशस्याप्राप्तिरिति कल्प एव फलति ।

अत्र प्रसङ्गे श्रीकृष्णमाचार्यमहोदयो लिखति यत्-उत्कलप्रान्ते हस्तलिखितः नैषधस्याग्रेतनो भागो रामगोपालस्मृतिभूषणमहोदयेन दृष्टः, यतः सार्धः श्लोकोऽपि रामगोपालमहाशयेन कृष्णमाचार्यस्य समीपे लिखित्वा प्रेषितः—

'वदन्ति चेच्चन्द्रमसं सुधारसं न पीयते तैः किमु नायिकाधरः ।
सुरापगाम्भः पिबता जनेन किं रसोत्तरं नीरधिनीरमुच्यते ?'
'उत्तुङ्गस्तनपर्वतादवतरन्दङ्गे हारावली रोमालि प्रतिपद्यते.....।'

म० म० राखालदासन्यायरत्नमपि कथयति स्म यत् इदं पद्यार्धं नैषधस्य—

'ससमार न स्मरमनाः प्रियदूतभूतं तत्रामरालयमरालमरालकेशी ॥'

इदं सर्वं निर्णयं न जनयति, सन्देहं त जनयत्येव। कृष्णमाचार्यस्य तु वङ्गे कदाचिद् नैषधशेषस्योपलब्धेराशाप्यासीदेव।

एतन्महाकविभिन्नाः अपरेऽपि बहवो महाकवयः सन्ति, तेषां संक्षिप्तपरिचयोऽत्र दीयते, विस्तरभयात्तेषां काव्यस्य विषये नोच्यते किञ्चित्।

| नाम | समयः | कृतिः |
|---|---|---|
| अभिनन्दः | दशमशतकम् | कादम्बरीकथासारः |
| मेण्ठः | पञ्चमशतकम् | हयग्रीववधः |
| भट्टारहरिचन्द्रः | पञ्चमशतकम् | धर्मशर्माभ्युदयम् |
| जिनसेनः | नवमशतकम् | पार्श्वाभ्युदयम् |
| वासुदेवः | नवमशतकम् | युधिष्ठिरविजयम् |
| धनञ्जयः | नवमदशमशतके | द्विसन्धानकाव्यम् |

## ऐतिहासिककाव्यानि

संस्कृतभाषायां पौराणिकमाधारमादाय बहूनि काव्यानि रघुवंशादीनि प्रणीतानि। गद्यग्रन्थाः पौराणिक्या कथया नैव प्रणीताः, ऐतिहासिकं त्वाधारं प्रकृत्य स्वल्पा एव ग्रन्थाः प्रणीताः। ये केचन ग्रन्थाः इतिहासाधारेण प्रक्रान्तरचनास्तेष्वपि भूयसा ऐतिहासिकतां विहाय काव्यात्मकतैव पुरस्कृता। अत ऐतिहासिककाव्यानां सङ्ख्याङ्गुलिगणनीयैवास्ति, तान्येवैतिहासिककाव्यान्यत्र परिचाययितुमुपक्रम्यन्ते।

## ऐतिहासिककाव्यप्रवृत्तिः

प्राचीनभारतेतिहासस्य ज्ञापकतया पुराणानि प्रसिद्धान्येव। ब्राह्मणादिषु ग्रन्थेष्वपि गुरुशिष्यवंशोल्लेख ऐतिहासिकस्वरूपं धत्ते। बुद्धचरितमुपजीव्य रचितानि आख्यानानि भूयसांशेनेतिहासं वर्णयन्ति, तत्र सर्वमैतिहासिकमेव तथ्यमिति निश्चित्य वक्तुं न शक्यते। जैनसाहित्येऽपि इतिहासांशो विरलप्राय एव। पट्टावलीषु जैनाचार्याणां नामावलीमतिरिच्य किमपि गभीरमैतिहासिकं तथ्यं न प्राप्यते।

वस्तुतस्तु शिलालेखप्रशस्तयो भारतीयेतिहासस्य प्रबलानि प्रमाणानि। तासु रमणीयकाव्यसरण्या कविभिः स्वाश्रयप्रदानां समकालिकानां नृपाणां स्तुतयो निबद्धा याभिः तात्कालिकभारतीयेतिहासे प्रचुरः प्रकाश आधीयते। सम्प्रति कतिपयकवीनां तद्ग्रन्थानां चात्र परिचयः प्रस्तूयते—

## वाक्पतिराजस्य 'गउडवहो'

यद्यपि काव्यमिदं प्राकृतभाषया निबद्धं परं तथापि प्राकृतस्य संस्कृताधारतया शैलीसाम्येन चात्र 'गउडवहो' काव्यमपि परिचेतुमुपक्रम्यते। एतस्य काव्यस्य रचयिता वाक्पतिराजः आत्मनः सरसया शैल्या कविषु प्रख्याततमः। अयं हि महाकविः कान्यकुब्जाधिपतेर्यशोवर्मणः सभायां प्रधानपण्डित आसीत्। वाक्पतिना कृतस्य मगधनरेशविजयस्यात्र रमणीयं वर्णनं निबद्धम्।

अयं यशोवर्मा ७२४ ईशवीतः ७६० ईशवीपर्यन्तं वर्त्तमानेन काश्मीराधिपतिना ललितादित्येन जितोऽतस्तः पूर्वमेव 'गउडवहो' नामकं काव्यं र्मिमितं भवेदिति मन्तव्यमेव, तेन ७३४ ई० समीपे तत्प्रणयनं मन्यते।

डा० याकोविमहोदयस्य मतेन 'गउडवहो' काव्ये निर्दिष्टं सूर्यग्रहणं ७३३ ई० जातमतः तत्पूर्वमेवास्य काव्यस्य निर्माणं सिद्धयति। वाक्पतिना च भवभूतिरत्यादरं दत्त्वा स्मृतः—

'भवभूतिजलधिनिर्गतकाव्यामृतरसकणा इव स्फुरन्ति।
अस्य विशेषा अद्यापि विकटेषु कथानिवेशेषु॥'

सर्वमिदमालोचयतामस्माकं मते गउडवहोकाव्यस्य निर्माणसमयः ७३३-७६० मध्ये क्वचन मन्यते।

गउडवहोकाव्ये वर्णनप्राधान्येन ऐतिहासिकतत्त्वस्यातिविरलता विद्यते। अनेनैतिहासिकतत्त्वस्योपेक्षा तथा कृता यथा गौडस्य राज्ञो जीयमानस्य नामापि नोल्लिखितम्। काव्यत्वकृता शोभा पुनरस्य ग्रन्थस्य प्रशंसनीया। तथा च दृश्यताम्—

'शोभते समागमेष्वहितप्रतापप्रदीपमालासु।
कर्णोत्पलमिव खड्गं विजयलक्ष्मीस्तव व्यापारयन्ती॥'

अत्र विजयलक्ष्मीसमागमो नवोढनायिकासमागम इव वर्णितः।

प्रभातवर्णने पद्यमेकम्—

'तमोलोहलोठकानुगतमुक्तप्रभातप्रभः।
विरलमूलः ग्रहकार्पासबीजनिवहः पश्चात् पुञ्जीक्रियते निशया।'

यथा कयापि कृषकस्त्रिया लोहलोठकानुगतकार्पासबीजनिवहः क्वचित् पुञ्जीक्रियते, तथात्र निशया स्त्रिया लोठकेन तमसा कार्पासबीजनिवहाकारो ग्रहगणः पश्चिमदिग्भागे पुञ्जीक्रीयते।

इयमीदृश्युत्प्रेक्षा दुर्लभा साधारणतः।

## पद्मगुप्तपरिमलस्य 'नवसाहसाङ्कचरितम्'

संस्कृतभाषानिबद्धेषु ऐतिहासिककाव्येषु नवसाहसाङ्कचरितकाव्यस्य नाम प्रथमकाव्यरूपेण गण्यते। अत्र भोजराजपितुः सिन्धुराजस्य नवसाहसाङ्कोपपदकस्य शशिप्रभानामिकया राजकुमार्या सह विवाहस्य कथा प्राधान्येन वर्णिता अस्य ग्रन्थस्य रचना १००५ ई० समये जातेति विदुषां निश्चयः।

अस्य काव्यस्य द्वादशसु सर्गेषु सिन्धुराजपूर्ववर्त्तिनां समस्तपरमारवंश्यराजन्यकानां कालक्रमानुसारि वर्णनं कृतम्। तस्य वर्णनस्य सत्यता च शिलालेखैः प्रमापिता विद्यते।

काव्यदृष्ट्या काव्यमिदं वैदर्भीरीतेरुत्कृष्टमुदाहरणं विद्यते। अत्र प्रसादगुणस्य प्राकृतिकदृश्यवर्णनस्य च रमणीयता हृदयहारिणी विद्यते।

अयं नवसाहसाङ्कचरितप्रणेता पद्मगुप्तः सिन्धुराजज्येष्ठभ्रातुः राज्ञो मुञ्जस्य सभापण्डित आसीत्। मुञ्जे परलोकं गते यावदसौ आत्मानं निराश्रयं भावयति

तावदेव सिन्धुराजो मुञ्जराजस्तं तथा बहु सत्कृतवान् यथा तत्सहायता कवितारूपेण स्फुटिता जाता।

अस्मिन् नवसाहसाङ्कचरितकाव्ये अष्टादश सर्गाः सन्ति। पद्मगुप्तोऽयं कालिदासस्य सफलोऽनुकर्त्ता मन्तुं शक्यते। कालिदासस्य रसमयीं पद्धतिं, सुकुमारं मार्गं चायं महता यत्नेन स्वकाव्येऽवतारयामास।
कालिदासस्य प्रशंसायां प्रसङ्गान्तरेणायं लिखति—

प्रसादहृद्यालङ्कारैस्तेन मूर्तिरभूष्यत।
अत्युज्ज्वलैः कवीन्द्रेण कालिदासेन वागिव॥'

इयमेव प्रशंसा वस्तुतस्तत्कवितायाः प्रशंसात्मना पर्यवस्यति।

## विल्हणस्य 'विक्रमाङ्कदेवचरितम्'

विल्हणः स्वकृते विक्रमाङ्कदेवचरिते नाम महाकाव्ये अन्तिमेऽष्टादशसर्गे स्वीयं चरितं विस्तरेणोपनिबद्धवान्, ततोऽवगम्यते यद् अस्य कवेः प्रपितामहः मुक्तिकलशः, पितामहः राजकलशः, पिता च ज्येष्ठकलश इति नामभिः समाख्यायन्त। अस्य भ्रातरौ इष्टरायः आनन्दश्चेति द्वौ आस्ताम्। माता चास्य नागदेवी। काश्मीरदेशश्चास्य जन्मभूमिः। आश्रयदातारं कमपि गुणिनं राजानमन्विष्यन्नयं मथुरा-कान्यकुब्ज-प्रयाग-काशी-धारादीनि स्थानानि गत्वा दक्षिणभारतस्थितं कल्याणनगरं प्राप्तवान्, यत्र तदा चालुक्यवंश्यः प्रसिद्धो राजा विक्रमादित्यः षष्ठः शासनं करोति स्म। भोजो धारानरेशो नानेन दृष्टो यदाऽयं धारामायातो यतोऽस्य धारागमनात् पूर्वमेव स दिवं गतवानासीत्। विक्रमादित्यषष्ठस्य कालः १०७६ तः ११२७ ई० पर्यन्तं मन्यतेऽतोऽस्य कवेः समयः एकादशशतकोत्तरभागो द्वादशशतकस्यादिभागश्च निश्चीयते।

विल्हणकृते विक्रमाङ्कदेवचरितनामके काव्येऽष्टादश सर्गाः सन्ति। अत्र चालुक्यवंश्यस्य विक्रमादित्यषष्ठस्य जीवनचरितं प्रसङ्गतस्तत्पूर्वजानां च चरितं निबद्धं विद्यते। ऐतिहासिकघटनानां निर्देशे विल्हणस्तथा सावधानोऽवर्त्तत यथा चालुक्यवंशस्येतिहासोऽत्र स्फुटावभासतां गतः। अत्र काव्ये कविना वैदर्भमार्गस्यानुसरणं कुर्वता माधुर्यस्य प्रसादस्य च प्रयोगे प्रचुरं प्रयतितम्। वीररसस्य प्राधान्येऽपि शृङ्गारादिरसस्तदङ्गतया निपुणं निबद्धः।

कविताया दृष्टान्ततया कतिचन श्लोका अत्रोद्ध्रियन्ते--

'कर्णामृतं सूक्तिरसं विमुच्य दोषे प्रयत्नः सुमहान् खलस्य।
निरीक्षते केलिवनं प्रविष्टः क्रमेलकः कण्टकजालमेव॥'
'साहित्यपाथोनिधिमन्थनोत्थं कर्णामृतं रक्षत हे कवीन्द्राः।
यदस्य दैत्या इव लुण्ठनाय काव्यार्थचौराः प्रगुणीभवन्ति॥'
'गृह्णन्तु सर्वे यदि वा यथेष्टं नास्ति क्षतिः कापि कवीश्वराणाम्।
रत्नेषु लुप्तेषु बहुष्वमर्त्यैरद्यापि रत्नाकर एव सिन्धुः॥'
'कुण्ठत्वमायाति गुणः कवीनां साहित्यविद्याश्रमवर्जितेषु।
कुर्यादनार्द्रेषु किमङ्गनानां केशेषु कृष्णागुरुधूपवासः॥'

'प्रौढिप्रकर्षेण पुराणरीतिव्यतिक्रमः श्लाघ्यतमः कवीनाम् ।
अत्युन्नतिस्फोटितकञ्चुकानि वन्द्यानि कान्ताकुचमण्डलानि ॥'

कालिदासेन यथा रघुवंशे इन्दुमतीस्वयंवरवर्णनं कृतं तथैव विल्हणेनापि स्वयंवरस्य वर्णनं कृतम् ।

कालिदासेन यत्र—

'तां प्रत्यभिव्यक्तमनोरथानां महीपतीनां प्रणयाग्रदूत्यः ।
प्रवालशोभा इव पादपानां शृङ्गारचेष्टा विविधा बभूवुः ॥'

इत्युक्तं, तत्र विल्हणेन—

'तदीयवक्त्रेन्दुविलोकनेन सान्द्रोल्लसद्रागपयोनिधीनाम् ।
तत्रागतानां पृथिवीपतीनामासन् विचित्राणि विचेष्टितानि ॥'

इत्थमुक्तम् । यत्र कालिदासः—

'सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥'

इति वर्णयति, तत्र विल्हणः—

मध्येन येषां वसुधापतीनां जगाम सा कामवशीकृतानाम् ।
स्वयंवरस्रग्रजसेव पूर्णास्तेषां दृषः साश्रुजला बभूवुः ॥'

इदं प्रोक्तवान् ।

एतादृशीनां समतानां दर्शनेन सुखमवगन्तुं शक्यते, यद् विल्हणेन कालिदासकाव्यानि निपुणमनुशील्यैव स्वीयं काव्यं निर्मितम् ।

## कल्हणस्य 'राजतरङ्गिणी'

संस्कृतभाषायामितिहासलेखनाय यावन्तो विद्वांसो व्यवसितवन्तस्तेषां मध्ये कल्हणः प्रमुख इति नितान्तसत्यं वस्तु । कल्हणः स्वयमेव स्वीयमितिवृत्तं निर्दिष्टवान् ।

कल्हणोऽयं काश्मीरदेशे आढ्यब्राह्मणवंशेऽजायत । अस्य पिता चणपकः तात्कालिककाश्मीराधिपतेर्हर्षस्य (१०४८–११०१) प्रधानामात्य आसीत् । हर्षे शत्रुभिः कपटेन हते सति चणपकस्य कुटुम्बं राजाश्रयविहीनमजायत । चणपकः कस्याप्यन्यस्याश्रयं नाभजत । कल्हणस्य पितृव्यः कनकोऽपि काश्मीरनृपतेर्हर्षस्यैवाश्रयेऽवर्त्तत । हर्षे हते सति स काश्मीरान् विहाय वाराणसीमध्यवसत् । कल्हणस्य संस्कृतं नाम कल्याण इत्यासीत् । स हि अलकदत्तनाम्नः कस्यचित्सत्पुरुषस्यच्छत्रच्छायामाश्रितवान् । राजपरिवारेण सह तस्य सम्बन्धो नासीदत एवासौ राज्ञामालोचनायां निर्ममदृष्टिरपक्षपातश्चाजायत । कल्हणः स्वीयां राजतरङ्गिणीं राज्ञः सुस्सलस्य पुत्रे राजनि जयसिंहे (११२७--११५९) शासति निर्मितवान् । कल्हणेन ११४८ तमेशवीयवर्षे प्रारब्धा राजतरङ्गिणी ११५० तमेशवीयवर्षे समापितेति वर्षत्रयं तत्र कार्ये लग्नम् ।

कल्हणः परमशैवः सन्नपि धार्मिकदृष्टौ सहनशीलो बौद्धानामहिंसासिद्धान्ते धृतादरस्तन्त्रमार्गविमुखश्चासीत् ।

कल्हणो रामायणमहाभारतयोरन्यान्यसंस्कृतकाव्यानाञ्च निपुणं ज्ञाता ज्यौतिषशास्त्रनिष्णातश्चासीत्। कल्हणेन राजतरङ्गिण्यां ज्ञात्वाऽज्ञात्वा वा द्वारपादाग्रादीनां पारिभाषिकशब्दानामर्थंसूचनमन्तरेणैव प्रयोगः कृत इति क्वचित् क्वचित् दुरूहतादोषोऽप्यत्रागतः।

कल्हणेन इतिहासलेखनाय वर्त्तमानसाधनानां शिलालेखदानपत्रादीनां साधूपयोगं कृत्वैव स्वग्रन्थः प्रणीतः, तेनैव सावधानभावेन तस्य ग्रन्थो विशिष्य प्रामाणिकत्वं प्राप्तवान्। स हि स्वपूर्वजानामितिहासलेखकानां रचनास्वनवधानताप्रभवान् दोषान् दृष्टवान् स्पष्टमुक्तवांश्च--

'केनाप्यनवधानेन कविकर्मणि सत्यपि।
अंशोऽपि नास्ति निर्दोषः क्षेमेन्द्रस्य नृपावली॥'
(१।१३ राजतरङ्गिणी)

'विस्तीर्णाः प्रथमे पन्थाः स्मृत्यै संक्षिपतो वचः।
सुव्रतस्य प्रबन्धेन च्छिन्ना राजकथाश्रयाः॥'
(१।१२ राजतरङ्गिणी)

'बद्धा द्वादशभिर्ग्रन्थसहस्रैः पार्थिवावलिः।
प्राङ्महाव्रतिना येन हेलाराजद्विजन्मना॥'
(१।१७ राजतरङ्गिणी)

एषां श्लोकानां दर्शनेन ज्ञायते यदसौ सर्वमपि प्राक्तनमितिहासग्रन्थनिवहं निपुणं निरीक्ष्यैव राजतरङ्गिणीं प्रणीतवान्।

## राजतरङ्गिणीग्रन्थः

राजतरङ्गिणीग्रन्थो विशालकायोऽष्टभिस्तरङ्गैर्विभक्तो विद्यते। अत्र ग्रन्थे काव्यताया यावानंशो विद्यते तावानेवांश ऐतिहासिकताया अपि। कल्हणः प्राचीनकालादारभ्य तत्समयपर्यन्तस्येतिहासं लिखितुं प्रयत्नं कृतवान्। तत्र तेनादिभागस्येतिहासस्य वर्णने तादृशी सफलता न प्राप्ता, यादृशी सफलता पश्चात्कालिकेतिहासस्य वर्णने प्राप्ता। अस्य ग्रन्थस्येतिहासोपनिबन्धः विक्रमसंवत्प्रारम्भात् द्वादशशतकपूर्वकालभवस्य कस्यचन गोनन्दनामकस्य राज्ञ इतिहासात् प्रक्रमते। तस्य निर्देशः स्थूलदृष्ट्यैव कृतः, नैतावदेव, प्रथमतरङ्गत्रये निर्दिष्टानां राज्ञामुल्लेखः कालनिर्देशरहित एव कृतः। सर्वतः प्रथमः निर्दिश्यमाना तिथिः ८१३-८१४ ई० मिता वर्तते। ततः कालात् ११५० ई० पर्यन्तस्य घटनाः प्रामाणिकरूपेण वैज्ञानिकपद्धत्या निबद्धा विद्यन्ते। अष्टमतरङ्गस्य घटनास्तु कविना भूयसांशेन साक्षात्कृत्य निबद्धा इति तासां सत्यता असन्दिग्धा।

एतादृशा अप्यैतिहासिका दृश्यन्ते श्रूयन्ते च ये स्वदेशस्य प्रतिष्ठां वर्धयितुं स्वीयदेशेऽवर्त्तमानानपि गुणान् वर्णयितुं न सङ्कुचन्ति, परन्तु कल्हणः तादृशो नासीत्, स हि नितान्तनिष्पक्षपातया बुद्ध्या इतिहासं लिलेख, अत एव स आदावेव लिखति स्म--

'श्लाघ्यः स एव गुणवान् रागद्वेषबहिष्कृता।
भूतार्थकथने यस्य स्थेयस्येव सरस्वती॥'

इमामेव धारणां प्रमापयितुं कल्हणः काश्मोरभवानां भीरुताम्, मिथ्याभाषणप्रवृत्तिम्, सङ्ग्रामतः पलायनोन्मुखताम्, पक्षपातिताम्, क्षुद्रताम्, मानसिकीं दुर्बलताञ्च स्पष्टं निर्दिष्टवान् ।

अनयैव वस्तुवृत्तानुसारितया कल्हणः स्वं ग्रन्थं भूतकालस्यादर्शं विधातुं साफल्यमलभत ।

कल्हणः स्वमैतिहासिकापेक्षया कविमधिकं मन्यते, यथा तेनैवोक्तम्—

'कोऽन्यः कालमतिक्रान्तं नेतुं प्रत्यक्षतां क्षमः ।
कविप्रजापतींस्त्यक्त्वा रम्यनिर्माणशालिनः ॥'

कल्हणस्य कविता नितान्तहृद्या, यथा —

'प्रजापुण्योदयैस्तीव्रैश्चिरात्तस्मिन् क्षयं गते ।
बकस्तत्प्रभवः पौरैः सदाचारोऽभ्यषिच्यत ॥
तत्रापि पूर्वसंस्काराद्युक्तत्रासं दधे जनः ।
श्मशानविहिते लीलावेश्मनीव नृपास्पदे ॥
अतिसन्तापदाज्जातः स जनाह्लादकोऽभवत् ।
जलौघो जलदश्यामात्तपात्ययदिनादिव '।
लोकान्तरादिवायातं मेने धर्मं तदा जनः ।
अभयं च परावृत्तं प्रवासाद् गहनादिव ॥'

उपरिनिर्दिष्टश्लोकचतुष्टये कस्यचिद्दुष्टस्य राज्ञोऽवसाने सुचरितस्य तत्सुतस्य स्तुतिरुपनिबद्धा ।

एकस्य अवनिपालस्य शत्रुभिः पराजितस्य नगरं त्यक्त्वा वनगिरिप्रयाणं कीदृशेन करुणेन सन्दर्भेण वर्णयति कल्हण इति निम्नलिखितैः श्लोकैः प्रकाश्यते—

'राज्याच्च्युतस्य बहुशः परिवाररामा
कोशादि तस्य रिपवो व्रजतोऽपजह्रुः ।
उर्वीरुहो विगलितस्य नगेन्द्रशृङ्गा-
द्वल्लीफलादि रभसादिव गण्डशैलाः ॥'

'रम्यैः शैलापथैर्व्रजञ्श्रमवशाच्छायां श्रितः शाखिना-
मासीनप्रचलायितेन सुमहद्दुःखं विसस्मार सः ।
दूरात्पामरपूत्कृतैः श्रुतिपथप्राप्तैः प्रवुद्धस्त्वभूद्-
दृष्टो निर्झरवारिभिः सह मनःश्वभ्रे निमज्जन्निव ॥'

'नानावीरुत्तृणपरिमलैरुग्रगन्धा वनोर्वी-
रम्भः क्षोदप्रतिहतशिलाः पिच्छिलाश्चाद्रिकुल्याः ।
क्रान्त्वा श्रान्तैर्बिसकिसलयच्छायमुग्धाङ्गलेखै-
रभ्युत्सङ्गं निहिततनुभिर्मूर्च्छितं तस्य दारैः ॥

पर्यन्ताद्रितटाद्विलोक्य सुचिरं दूरीभवन्मण्डलं
द्रागामन्त्रयितुं जहत्सु नृपतेर्दारेषु पुष्पाञ्जलीन् ।
क्षोणीपृष्ठविकीर्णपक्षतिनमत्तुण्डं स्वनीडस्थितैः
सावेगं गिरिकन्दरासु पततां वृन्दैरपि क्रन्दितम् ॥
स्तनयुगतलनद्धस्रस्तमूर्धांशुकानां
त्रिकवलनविलोलं वीक्ष्य दूरात् स्वदेशम् ।
अवहृतरुदतीनां मौलिविन्यस्तहस्तं
पथि नृपवनितानामश्रुभिर्निर्झरारम्भः ॥'

अनेकभूपतीनामुत्थानपतने प्रत्यक्षं दृष्टवता कल्हणेन वीतरागेणेव राज्ञां वृत्तान्तमुपन्यस्तवता क्वचिदपि स्वाभिनिवेशो न दर्शितस्तेन चास्य ग्रन्थो नितान्तस्वाभाविकः समजायत । ऐतिहासिकवर्णनायां यावती काव्यात्मकता सम्भवति तावत्यनेनोत्पादिता । यदीतोऽप्यधिकां काव्यात्मकतामुत्पादयितुमयमचेष्टिष्यत तदा बाणभट्टस्य हर्षचरितमिव विल्हणस्य विक्रमाङ्कदेवचरितमिव च राजतरङ्गिण्यपि प्रभूतकाव्या हीनैतिहासिकभावा चाभविष्यत् ।

ईदृशानां काव्यग्रन्थानामुपयोगस्य विषयेऽयं स्वयमाह—

'भुजवनतरुच्छायां येषां निषेव्य महौजसां
जलधिरशना मेदिन्यासीदसावकुतोभया ।
स्मृतिमपि न ते यान्ति क्ष्मापा विना यदनुग्रहं
प्रकृतिमहते कुर्मस्तस्मै नमः कविकर्मणे ॥'

( राजतरङ्गिणीख्यातिः )

राजतरङ्गिणी स्वीयैर्गुणैः परां प्रसिद्धिं गता । नैतावदेव, काश्मीरदेशस्येतिहासतयाऽप्यस्या आदरोऽनन्तरभाविभिर्नृपतिभिरपि कृतः । १४२१ तः १४७२ पर्यन्तं काश्मीरान् शासितवता 'जैनउलआवीदीनं' नामकेन राजतरङ्गिण्याः प्रथमः पारसीकभाषानुवादः कारितः । सोऽयमनुवादः कठोरभाषायां कृत इति 'अकबरः' प्रचलितभाषायां राजतरङ्गिण्या द्वितीयमनुवादं 'अलबदाऊनी' द्वारा कारितवान् । जहांगीरस्य राजत्वकाले काश्मीरवासी 'हैदरमलिक' नामक उच्चकुलोत्पन्नो विद्वान् राजतरङ्गिण्याः संक्षिप्तमनुवादं विहितवान् ।

१८३५ तमेशवीयवर्षे 'बंगाल-एशियाटिक-सोसाइटी' द्वाराऽस्याः प्रथमं मुद्रणमक्रियत ।

१८९२ तमेशवीयवर्षे 'डा० स्टेन' ( Dr. Stein ) महोदयेनेयं प्रकाशिता संस्कृतानूदिता च ।

१९०० तमेशवीयवर्षे एव मुंबईस्थनिर्णयसागरमुद्रणालयोऽपि मुद्रितमस्याः दुर्गाप्रसादविदुषा संस्कृतञ्च रूपं प्राकाशयत् ।

१९३५ तमेशवीयवर्षे रणजीतपण्डितमहाशयोऽस्याः प्रामाणिकमाङ्ग्लभाषानुवादं प्रकाशितवान् ।

## आचार्यहेमचन्द्रस्य 'कुमारपालचरितम्'

प्रसिद्धो जैनाचार्यो गुर्जरदेशशासकानाञ्चरितानि वर्णयितुं कुमारपालचरितं नाम काव्यं प्रणीतवान्। आचार्यहेमचन्द्रस्य समयः १०८९तः ११७३ पर्यन्तं मन्यते। कुमारपालः ११४४ तमेशवीयवर्षे सिंहासनमारूढः, ११५३ तमेशवीयवर्षे च हेमचन्द्रस्तं जैनधर्मेऽदीक्षयत्।

इदं कुमारपालचरितम् द्व्याश्रयकाव्यनाम्नापि प्रथते। आदितो विंशतिः सर्गाः संस्कृते शेषाश्चाष्टौ प्राकृतभाषायां निबद्धा इति काव्यस्यास्य द्व्याश्रयताप्रथाया मूलम्। अत्र हेमचन्द्रेण स्वीयानां संस्कृतप्राकृतव्याकरणनियमानामुदाहरणान्यपि समावेशितानीत्यप्यस्य काव्यस्य द्व्याश्रयतायां निदानम्।

महाकाव्यदृष्ट्या यद्यप्यस्य काव्यस्य मूल्यं न तथाऽधिकं तथापि गुर्जरनृपतीनां चरितस्य प्रामाणिकरूपेण प्रकाशने बहुमूल्यमिदं काव्यम्।

## सोमेश्वरस्य 'कीर्त्तिकौमुदीकाव्यम्'

सोमेश्वरनामकेन ११७९-१२६२ ई० स्थितेन कविना कीर्त्तिकौमुदीनामकं काव्यमेकं प्रणीतं यत्र गुर्जरमहीपालयोर्वीरधवलवीसलदेवयोर्मन्त्री वस्तुपालतेजपालः कीर्तिशालितया स्तुतः। काव्यमिदं गद्यस्यापि क्रोडीकारेण विलक्षणप्रकारकम्।

## अरिसिंहस्य, 'सुकृतसङ्कीर्त्तनम्'

एकादशसर्गात्मकमिदं काव्यं वस्तुपालतेजपालस्य तीर्थयात्राधर्मकृत्यादीनां वर्णनायोपनिबद्धम्। पूर्वोक्त एवास्य समयः।

## बालचन्द्रसूरिणो 'वसन्तविलासः'

इदमपि काव्यं पूर्वोक्तमन्त्रिस्तुतिविषयकमेव। इदमपि तत्समयसम्भवमेव।

## नयनचन्द्रसूरिणो 'हम्मीरमहाकाव्यम्'

अथ चौहानभूपालस्य हम्मीरस्य वर्णने चतुर्दशभिः सर्गैः प्रचुरा साहित्यिकसामग्री प्रस्तुता। ऐतिहासिकसामग्री तु स्वल्पैव। अस्य काव्यस्य रचनाकालः १४ शताब्दी मन्यते।

## चन्द्रशेखरस्य 'सुर्जनचरितम्'

विंशतिसर्गैर्निबद्धेऽत्र काव्यग्रन्थे सुर्जनसिंहस्य चरितं प्रस्तुतम्। सुर्जनसिंहोऽकबरस्य सामन्तमुख्योऽभवद्योऽकबरेण बहुषु युद्धेषु नियुक्तः। अत्र काव्ये बूंदीनृपाणां हाड़ावंश्यानां चरितं प्रसादिक्या शैल्या निबद्धम्। ऐतिहासिकसामग्र्या सह साहित्यिकसामग्र्यपि प्रचुराऽत्र प्राप्यते। ई० षोडशशताब्दे निर्मितमिदमिति निश्चितम्।

## राजनाथडिण्डिमस्य 'अच्युतरायाभ्युदयम्'

इदमैतिहासिकं काव्यम् षोडशे ईशवीयशतके निर्मितम्। अत्र अच्युतरायनामकस्य विजयनगराधीशस्य राज्यकाले जाता घटनावली विस्तरेण वर्णिता।

### गङ्गादेव्याः 'मधुराविजयं' 'वीरकम्परायचरितं' वा

विजयनगरसाम्राज्यस्य आरम्भिककालिकघटनानां परिचयोऽत्र रोचकपद्धत्या प्रदत्तः। अस्य लेखिका कम्परायस्य भार्येति कृत्वाऽत्रत्या घटनावली सत्या मन्यते। अस्य रचनाकालः ईशवीयचतुर्दशशतकम्।

### सन्ध्याकरनन्दिनो 'रामपालचरितम्'

सन्ध्याकरनन्दी नाम कविः पालवंश्यनरेशरामपालस्य जीवनवृत्तं श्लिष्टद्यद्वारा प्रस्तुतवान्।

### अज्ञातकर्तृकं 'पृथ्वीराजविजयम्'

काव्यमिदमैतिहासिकानां महते उपयोगाय। अत्र पृथ्वीराजस्य विजयानां वर्णनमुपनिबद्धम्। खेदस्य विषयोऽयं यदस्य काव्यस्य अपूर्णा त्रुटिपूर्णा च एका एव प्रतिलिपिः प्राप्यते। अस्य रचयितुर्नामापि न ज्ञायते। १२०० तमेशवीये निर्मितायां जयरथकृतायाम् अलङ्कारविमर्शिन्याम् अस्योल्लेखस्य दर्शनात्तत्पूर्वकालिकत्वमस्य प्रमातुं शक्यते। १४४८ तमेशवीये काश्मीरोद्भवेन जानराजेनात्र टीकाऽपि लिखिता। एतेनास्य ग्रन्थस्य प्रणेतापि कश्चन काश्मीरदेशीय एवेति सम्भाव्यते।

### शम्भुकृतो 'राजेन्द्रकर्णपूरः'

काश्मीरनृपतेर्हर्षदेवस्य प्रशस्तिरत्रोपनिबद्धा।

### सर्वानन्दस्य 'जगडूचरितम्'

जगडूसाहो नाम कोऽपि श्रेष्ठी १२५६–१२५८ ई० समये जाते दुर्भिक्षे क्षुधाकष्टे निपतितानां प्राणिनां रक्षामकरोत्तस्यैव कीर्तिरत्रोपनिबद्धा। गुर्जरप्रान्ते जातस्य दुर्भिक्षस्यातीव हृदयद्रावकं वर्णनं तत्र प्रस्तुतम्।

एतदतिरिक्तान्यपि सोमपालविलासादीनि काव्यानि प्रथन्ते।

## शास्त्रकाव्यानि

व्याकरणसम्बन्धिपदप्रयोगनियमानां ज्ञानायान्यशास्त्रीयज्ञानसौलभ्याय च यानि काव्यानि प्रणीतानि तानि शास्त्रकाव्यान्युच्यन्ते।

### भट्टिस्वामिनो 'भट्टिकाव्यम्'

शास्त्रकाव्येषु भट्टिकाव्यं प्रसिद्धतरम्। 'दीपतुल्यः प्रबन्धोऽयं शब्दलक्षणचक्षुषाम्।'

काव्यमिदं भट्टिस्वामिना प्रणीतम्। तन्नाम्नैव चास्य प्रसिद्धिरपि जाता। इदं काव्यं रावणवधनाम्नापि प्रथते।

अत्र काव्ये द्वाविंशतिः सर्गा येषु संहत्य १६२९ मिताः श्लोका विद्यन्ते। अस्य काव्यस्य निर्माण उद्देश्यं मनोविनोदेन सह संस्कृतव्याकरणस्य ज्ञानम्। तदिदमुद्देश्यं पूर्वमपि भवति।

अस्य रचयितुः समयः भट्टिस्वामिना स्वग्रन्थे लिखितम्—

'काव्यमिदं लिखितं मया वलभ्यां श्रीधरसेननरेन्द्रपालितायाम् ।
कीर्त्तिरतो भवतान्नृपस्य तस्य क्षेमकरः क्षितिपो यतः प्रजानाम् ॥'

श्रीधरसेननामकाश्चत्वारो राजानः ५०० ई० तः ६५० ई० पर्यन्तमजायन्त, तेषु कतमस्य श्रीधरसेनस्य समये भट्टिरजायतेति निश्चेतव्यम् । श्रीधरसेन-द्वितीयस्यैकः शिलालेखः प्राप्यते, यत्र भट्टिनाम्ने विदुषे राज्ञा कृतस्य भूमिदानस्य वार्त्ता मिलति । यद्ययं भट्टिर्भट्टिकाव्यस्यैव प्रणेता तदा तस्य समयः ६१० ई० मन्तुं शक्यते । भिन्नभट्टेः कल्पनायामपि भट्टिः सप्तमशतकादूर्ध्वं नानेतुं योग्यः ।

भट्टिः काव्यमिदं किमपि प्राचीनमीदृशं काव्यमालोक्यैव प्रणीतवान् । पातञ्जलमहाभाष्ये कतिपयानि व्याकरणप्रयोगपराणि पद्यान्युद्धृतानि सन्ति तेन ज्ञायते यत् पतञ्जलेरपि समये किमपि तादृशं काव्यमासीत्, तदेव किमपि काव्यमाधारीकृत्य भट्टिना स्वं काव्यं विरचितं स्यात् ।

भट्टिकाव्यं यद्यपि व्याकरणलक्षणप्रयोगज्ञानाय निर्मितमिति प्रतिभाति तथापि काव्यस्यास्य साहित्यिकं किमपि वैशिष्ट्यं विद्वद्रञ्जकमेव विद्यते । अत्र कविना काव्यगुणा अपि प्रयस्य समावेशिताः । अस्य काव्यस्य दशमे सर्गे शब्दार्थालङ्काराणां निवेशेन एकादशे सर्गे माधुर्यगुणस्य समावेशेन चास्य गौरवमेधते ।

अस्य कवेर्वक्तृत्वनैपुण्यं विभीषणस्य भाषणेन शूर्पणखाया भाषणेन चावगम्यते । द्वितीयसर्गे शरदो, द्वादशे सर्गे प्रभातस्य च कमनीयं वर्णनं विद्यते ।

अस्य काव्यस्य शरद्वर्णनं नितान्तहृद्यम्—

'तरङ्गसङ्गाच्चपलैः पलाशैर्ज्वालाश्रियं सातिशयं दधन्ति ।
सधूमदीप्ताग्निरुचीनि रेजुस्ताम्रोत्पलान्याकुलषट्पदानि ॥'
'बिम्बागतैस्तीरवनैः समृद्धिं निजां विलोक्यापहृतां पयोभिः ।
कूलानि सामर्षतयेव तेनुः सरोजलक्ष्मीं स्थलपद्महासैः ॥'

एवमेव सूर्योदयवर्णनमपि—

'दुरुत्तरे पङ्क इवान्धकारे मग्नं जगत्सन्ततरश्मिरज्जुः ।
प्रनष्टमूर्त्तिप्रविभागमुद्यन् समुज्जहारेव ततो विवस्वान् ॥'

भट्टिकाव्यस्य निम्नलिखितः श्लोकस्तु एकावलीनामकस्यालङ्कारस्य प्रसिद्धमुदाहरणम्—

'न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद्यदलीनषट्पदम् ।
न षट्पदोऽसौ न जुगुञ्ज यः कलं न गुञ्जितं तन्न जहार यन्मनः ॥'

काव्यमिदं द्वाविंशतिसर्गात्मकं विद्यते । आदिमेषु चतुर्षु सर्गेषु प्रकीर्ण-विषयाः, तदनु त्रयोदशसर्गान्तमलङ्काराणां निवेशाः, ततो द्वाविंशं सर्गं यावल्ल-कारप्रयोगाश्चेति सर्वात्मना शास्त्रकाव्यमिदम् ।

## भट्टभीमस्य 'रावणार्जुनीयम्'

अस्मिन् रावणार्जुनीयनामके काव्ये अष्टाध्यायीसूत्रपाठक्रमेण पदानां निदर्शनं कृतमस्मादिदमपि शास्त्रकाव्येष्वन्यतमं मन्यते । 'सुवृत्ततिलके' नाम स्वग्रन्थे

क्षेमेन्द्रेण शास्त्रकाव्योदाहरणतया भट्टिकाव्येन सह रावणार्जुनीयम् अपि निर्दिष्टम् ।

यतः क्षेमेन्द्रः स्वग्रन्थे सुवृत्ततिलके रावणार्जुनीयं शास्त्रकाव्यं निर्दिशति, अतः रावणार्जुनीयप्रणेतुः भट्टभीमस्य समय एकादशशतकात् प्राक्तनः सिद्धयति ।

## हलायुधस्य 'कविरहस्यम्'

कविरहस्ये हलायुधो नानार्थधातूनाम् भिन्नेष्वर्थेषु प्रयोगस्य प्रपञ्चं प्रदर्शितवान् । अयं हलायुधो राष्ट्रकूटवंशीय-कृष्णराजतृतीयस्य ९४०-९५३ ई० वर्त्तमानस्य सभापण्डित आसीदिति तस्य समयो निर्णीत एव । हलायुधेन स्वाश्रयदातुः प्रशंसायामेव सकलान्युदाहरणानि प्रदर्शितानि, अतोऽपि तस्य तदाश्रितत्वं पुष्यति ।

## वासुदेवस्य 'वासुदेवविजयम्'

केरलेषु गृहीतजन्मनो वासुदेवस्य वासुदेवविजयं नाम काव्यमपूर्णमेव । अपूर्णमेव वासुदेवेन निर्मितम्, यस्य पूर्तिः केरलवासिनैव नारायणेन त्रिषु सर्गेषु धातुकाव्यं निर्माय कृता । अत्र धातूनां प्रयोगभेदान् दार्शयित्वा कंसवधवृत्तान्तो वर्णितः । समयोऽस्य निश्चित्य वक्तुं न शक्यते ।

## हेमचन्द्रस्य 'कुमारपालचरितम्'

ऐतिहासिककाव्यनिर्देशप्रकरणे वर्णितमिदं काव्यं शास्त्रकाव्यमपि, यतोऽत्रादितो विंशं सर्गं यावत् संस्कृतव्याकरणनियमानां ततोऽष्टसु सर्गेषु प्राकृतव्याकरणनियमानाञ्च प्रपञ्चः कृतः ।

## चिरञ्जीवभट्टाचार्यस्य 'विद्वन्मोदतरङ्गिणीकाव्यम्'

केनचित् वङ्गदेशीयेन ऊनविंशख्रीष्टशतकप्राग्भागसम्भूतेन चिरञ्जीवभट्टाचार्यविदुषा निर्मितमिदं काव्यं कथोपकथनरूपेण सकलदर्शनमतप्रतिपादनाय निबद्धम् । स्वल्पतनुरप्ययं ग्रन्थः सरसपदविन्यासतया हृदयाकर्षकः । प्रत्यक्षमात्रं प्रमाणं मन्यमानान् प्रति कवेरियमुक्तिः कीदृशं सारल्यं सरसत्वं च बिभर्त्ति—

'भर्त्रादृशे दूरविदेशमागते चरन्तु वैधव्यविधानमङ्गनाः ।'

## म० म० गङ्गाधरशास्त्रिणः 'अलिविलासिसंलापकाव्यम्'

ऊनविंशख्रीष्टशतकस्य चरमे विंशख्रीष्टशतकस्य प्रथमे च भागे वाराणस्यां स्थितेन म० म० गङ्गाधरशास्त्रिणा प्रणीतं सहस्राधिकपद्यसन्दृब्धमिदं काव्यं शास्त्रकाव्येषु मूर्धन्यं कथयितुं शक्यते । अत्र कविना ग्रथितानां वस्तूनां परिचयस्तच्छब्दैरेव दीयते—

'येऽलङ्कारगम्भीरचित्रमधुरोपन्यासशुश्रूषवो
ज्ञातुं भारतविश्रुतामरपुरीतीर्थानि वाञ्छन्ति ये ।
ये च द्वादशदर्शनीयस्थविषयव्युत्पत्तिजातादराः

संलापोऽलिविलासिनोर्मुहुरयं तैरास्थयाऽऽलोच्यताम् ॥'

स्वस्य परिचयं ग्रन्थनिर्माणसमयमपि च कविः स्वयमाह—

'श्रीमत्तातनृसिंहशास्त्रिचरणस्वर्वृक्षसंसेविनो
राजारामयतीन्द्रसद्गुरुकृपापीयूषपूतात्मनः ।
काश्यां वेदरसाङ्कभूपरिमिते सम्पादिता वैक्रमे
स्याद्गङ्गाधरशास्त्रिणः कृतिरियं विद्वज्जनानां मुदे ॥'

अस्य ग्रन्थस्य शास्त्रकाव्यत्वे सत्यपि कवितामाधुरी विस्मयावहैव । श्लेषस्यान्यान्यालङ्काराणाञ्च बन्धैर्बन्धुरा कविताऽत्र सर्वत्र निबद्धा । यथा—

'अनन्यसाधारणसौकुमार्यसौन्दर्यसौरभ्यसमष्टिभूमिः ।
सरोजिनी कुत्र ? मलीमसान्यपुष्टप्रिया चूतलता च कुत्र ?
प्रियान् विचेतुं विपिनं गतानां शुचाकुलानां पथिकाङ्गनानाम् ।
दृशोर्विकीर्यातुलधूलिमुष्टिरसौ हि पापानि समुच्चिनोति ॥'

## देवकाव्यानि

यथा शास्त्रकाव्यानि शास्त्रीयतत्त्वप्रख्यापनबुद्धया विरचितानि, तथैव प्रधानतया देवतानां कीर्तिं गातुं यानि काव्यानि रचितानि तानि देवकाव्यान्यभिधीयन्ते । माघकुमारसम्भवादीनि यथा कवित्वप्रदर्शनाय विरचितानि प्रतीयन्ते न तथा देवतानां कीर्त्तिं गातुमतस्तानि न देवकाव्यानि । देवकाव्यानि तान्येव यत्र प्राधान्यं देवकीर्त्तीनाम् । अतोऽत्र प्रकरणे तादृशान्येव कतिचित् काव्यानि परिचाययितुमुपक्रम्यते ।

### उत्प्रेक्षावल्लभगोकुलनाथस्य 'भिक्षाटनकाव्यम्'

ख्रीष्टीयचतुर्दशशतकात् पूर्वकालभवे भिक्षाटनकाव्ये शृङ्गारिकपद्धत्या शिवस्य चित्रणं क्रियते । शिवो भिक्षितुमिन्द्राणीप्रभृतीनां देवाङ्गनानां समीपमुपसर्पति, ताश्चास्य रम्यं रूपं दृष्ट्वा शृङ्गारमग्नान्तरा जायन्ते । इदमेव वस्त्वत्र विस्तरेण वर्णितम् ।

### नीलकण्ठदीक्षितस्य 'शिवलीलार्णवः'

शिवलीलार्णवे द्वाविंशत्या सर्गैः मदुरास्थितस्या सुरेन्द्रनाथशिवस्य ६४ प्रख्यातलीलानां वर्णनं निबद्धम् । सुरेन्द्रनाथशिवस्यैता लीलाः स्कन्दपुराणान्तर्गते हलास्यमाहात्म्ये उपनिबद्धाः । काव्यम् इदम् सरसया सरलया च भाषया निबद्धमतीव मनोहारि विद्यते । प्रारम्भे मङ्गलाचरणं यथा—

'पूतं स्वतः पूततरं ततो यद् गाङ्गं पयः शङ्करमौलिसङ्गात् ।
तत्पातु मातुः प्रणयापराधपादाहतेः पूततमं ततो नः ॥
अन्विष्य खिन्नं निगमानशेषानमी नमीनं प्रथमं स्मरामः ।
अन्विष्यमाणं निगमैरशेषैरम्ब स्तुमस्ते वयमक्षिमीनम् ॥'

नीलकण्ठदीक्षितोऽयं प्रख्यातदार्शनिकपण्डितस्य अप्पय्यदीक्षितस्य भ्रातुः अच्चादीक्षितस्य पौत्रस्तथा सप्तदशशतकप्रथमभागोद्भूतस्य मदुरानरपतेः तिरुमलनायकस्य सभायां मुख्यपण्डित आसीत् ।

शिवलीलार्णवात् स्वल्पपरिमाणं गङ्गावतरणं नाम काव्यमप्यनेन निर्मितम् ।

एतस्य 'नीलकण्ठविजयचम्पू'नामकस्य ग्रन्थान्तरस्य रचनाकालः १६३७ ई० मन्यते । अतोऽप्यस्य समयः सप्तदशख्रीष्टशतकप्राग्भागः निर्धारितो भवति ।

अनेन लोकशिक्षार्थं कलिविडम्बनम्, सभारञ्जनम्, अन्यापदेशशतकम् इत्यादीनि लघुकाव्यान्यपि लिखितानि ।

द्रविडकविषु ईदृशसरससरलकवितानिर्माता प्रतिभासम्पन्नश्च कोऽपि नासीदिति कथनमपि नात्युक्तिं स्पृशेत् ।

## जयद्रथस्य 'हरचरितचिन्तामणिः'

काश्मीरजातेन जयद्रथेन हरचरितचिन्तामणिर्नाम महाकाव्यं कृतं यत्रानुष्टुभैव सर्वे सर्गा अरच्यन्त । अयं जयद्रथोऽलङ्कारविमर्शिनीकर्त्तुः प्रसिद्धालङ्कारशास्त्रिणो जयरथस्य भ्राताऽऽसीत् । उभावपि भ्रातरौ १२०३-१२२६ ख्रीष्टाब्दभवस्य राजदेवनाम्नो भूपस्याश्रितौ आस्तामिति प्रसिद्धम् । अत एव चास्य समयस्त्रयोदशशतकस्यारम्भ इति दृढम् ।

हरचरितचिन्तामणेर्भाषा सरला, पुराणपाठ इवात्र पाठ्यमाने रसास्वादो जायते ।

## लोलिम्बराजस्य 'हरिविलासकाव्यम्'

अयं लोलिम्बराजः आयुर्वेदक्षेत्रे प्रसिद्धस्य वैद्यजीवनस्य कर्त्तृतया प्रसिद्धः । अस्य हरिविलासकाव्यं लघुकाव्यं सदपि गुणैर्महनीयम् । अस्य समयः ख्रीष्टीयैकादशशतकं मन्यते यतोऽयं भोजराजसमकालिकस्य कस्यचित् हरिहरनामकस्य दक्षिणभारतसम्राजः समकालीन आसीत् । अयमतीव सरसः कविरासीदतोऽस्य काव्यं कृष्णस्य बाललीलायाः सरसं शृङ्गारिकं च वर्णनमुपस्थापयितुमलम् ।

## वेदान्तदेशिकस्य 'यादवाभ्युदयम्'

इदं पाण्डित्यपूर्णं काव्यं बौद्धिकव्यायामप्रसूतमिति न तथा सरलं सरसञ्च । अस्य समयः—१२२५-१३२५ ई० ।

एतत्प्रसङ्गे एतदन्ये कवयस्तत्कृतयश्च निर्दिश्यन्ते—

| ग्रन्थनाम | कर्त्तृनाम | समयः |
|---|---|---|
| १. रुक्मिणीकल्याणम् | राजचूडामणिदीक्षितः | ख्री० १७ शतकपूर्वार्द्धम् |
| २. गोविन्दलीलामृतम् | कृष्णदासकविराजः | अज्ञातः |
| ३. बालभारतम् | अमरचन्द्रसूरिः | त्रयोदशशतकमध्यभागः |
| ४. पाण्डवचरितम् | देवप्रभसूरिः | ,, ,, |
| ५. सहृदयानन्दम् | कृष्णानन्दः | ,, ,, |

| | | |
|---|---|---|
| ६. नलाभ्युदयम् | वामनभट्टबाणः | १५ शतकम् |
| ७. उदारराघवम् | साकलमल्लः | १४ शतकम् |
| ८. नरनारायणानन्दम् | वस्तुपालः | १३ शतकम् |
| ९. सुरथोत्सवम् | सोमेश्वरः | १३ शतकम् |
| १०. हरिवंशसारचरितम् | गोविन्दमखी | १५ शतकम् |
| ११. रामचन्द्रोदयम् | वेङ्कटेश्वरः | अज्ञातः |
| १२. रघुवीरचरितम् | मल्लिनाथः | सन्दिग्धः |

## यमककाव्यानि

यथा शास्त्रकाव्यं देवकाव्यं च पृथक् पृथग् वर्गभेदे स्थापितं तथैव यमककाव्यं श्लेषकाव्यञ्चापि पृथग्वर्गमर्हत इति प्रथमं यमककाव्यानि ततः श्लेषकाव्यानि च दर्श्यन्ते ।

यमकानि बहुविधानि रीतिग्रन्थेषु दृश्यन्ते, तत्र कविभिरत्यल्पमात्रायामिमानि समाहृतानि कालिदासादिभिः । कतिपये स्वल्पकाव्येषु तेषामादरं तानि प्रयुज्य कृतवन्तस्तत्र साफल्यमलभन्त च । दण्डिना स्वीये काव्यादर्शे यमकं विस्तरेण प्रपञ्चितम् । द्विसन्धाननामकं किमपि काव्यमपि तादृशं दण्डिना स्मृतम् ।

### घटखर्परस्य 'यमककाव्यम्'

घटखर्परस्य वास्तविकं नाम न स्मर्यते, तेन हि—

'आलम्ब्य चाम्बुतृषितः करकोशपेयं भावानुरक्तवनितासुरतैः शपेयम् ।
जीयेय येन कविना यमकेन तेन तस्मै वहेयमुदकं 'घटखर्परेण' ॥'

इतीदृशी प्रतिज्ञा कृता, तदारभ्य तस्य घटखर्परसंज्ञयैव प्रथा जाता ।

इदं यमककाव्यं केवलैः द्वाविंशत्या श्लोकैः सम्पूर्णम् । अस्य कालिदासप्रणीतत्वं ये प्रतियन्ति ते भ्राम्यन्ति । अस्य ग्रन्थस्याष्टौ टीकाः प्रथन्त इतीदमीयः प्रचारोऽनुमातुं शक्यते । अत्र काचन विरहिणी वर्षारम्भे प्रियतमं सन्दिशति । अस्य रचनाकालो निर्धारयितुं न शक्यते ।

### नीतिवर्मणः 'कीचकवधकाव्यम्'

अस्य रचयिता पूर्वभारतवासी कश्चन कविः प्रतीयते । अत्र पञ्च सर्गाः, १७७ श्लोकाश्च सन्ति । आदिमेषु चतुर्षु सर्गेषु यमकप्रपञ्चो हृद्यतमः ।

### वासुदेवस्य 'नलोदयकाव्यम्'

केरलदेशवासिना वासुदेवेन रचितं नलोदयकाव्यं यमककाव्येषु प्रसिद्धतमम् । अत्र चतुर्षु सर्गेषु २१७ श्लोका निबद्धाः । अनेनैव कविना यमकमयं युधिष्ठिरविजयोदयं नाम काव्यान्तरमपि प्रणीतम् । अयं वासुदेवः कुलशेखरवर्मसमकालिकतया दशमशतकोत्पन्न इति कथ्यते । नलोदयकाव्यस्य यमकं नितान्तरमणीयम् । एकमुदाहरणं दृश्यताम्—

'योजनि ना गोपीतश्चचार यो वल्लवाङ्गनागोपीतः ।
भूर्येना गोपीतः कंसारेर्द्वेषमेव योनागोपीतः ॥'

## श्लेषकाव्यानि

### सन्ध्याकरनन्दिनो 'रामचरितम्'

अयं सन्ध्याकरनन्दी वंगवर्तिपुण्ड्रवर्धनस्थस्य पिनाकिनन्दिनः पुत्रः प्रजापतिनन्दिनश्च पौत्रोऽवर्त्तत । अस्य काव्यस्य पूर्त्तिः कविनानेन एकादश-शतकान्तभागोत्पन्नस्य राज्ञो मदनपालस्य समये कृतेति अस्य समयो निश्चितः । अत्र काव्ये पालवंशोद्भवस्य रामपालस्य भगवतो रामस्य च वर्णनं श्लेषमयभाषयाऽकारि । वंगदेशस्य मध्ययुगीनमितिहासं ज्ञातुमिदं काव्यमुत्तमं साधनम् ।

### धनञ्जयस्य 'राघवपाण्डवीयम्'

अस्य कवेः समयः ११२३-११४० ख्रीष्टीयो मन्यते । अत्र अष्टादशसु सर्गेषु रामायणमहाभारतयोः कथे महता चातुर्येण निबद्धे ।

### एतादृशानि अन्यकाव्यानि

| ग्रन्थाः | कर्त्तारः | समयः |
| --- | --- | --- |
| राघवपाण्डवीयम् | कविराजमाधवभट्टः | द्वादशशतकान्तभागः |
| राघवनैषधीयम् | हरदत्तसूरिः | अष्टदशशतकम् |
| पार्वतीरुक्मिणीयम् | विद्यामाधवः | द्वादशशतकमध्यम् |
| यादवराघवीयम् | वेङ्कटाध्वरी | सप्तदशशतकम् |
| राघवपाण्डवयादवीयम् | चिदम्बरकविः | १५८६-१६१४ ई० |
| रामकृष्णविलोमकाव्यम् | दैवज्ञसूर्यः | षोडशशतकपूर्वार्द्धम् |



# स्त्रीकवयः

बहोः कालादेव क्रमः प्रचरति यत् स्त्रियो मधुरान् कलात्मकांश्च भावानाद्रियन्ते। यदि क्वचन पर्वतशिखरे दम्पती गच्छतस्तदा पुरुषो भीषणं प्राग्भारं वन्यकरिणः अन्यान्यांश्च विस्मयावहान् पदार्थान् प्रति दत्तमना जायते, तदा तत्र वनिताः कलकलनादेषु निर्झरेषु, पक्षिणां मधुरेषु कूजितेषु च बद्धभावा भवन्ति। अत एव कोमला कान्तपदावली स्वोत्पत्तये स्त्रीणां वदनानि लभते स्थानानि। हेतोरस्मात् संस्कृतसाहित्येऽपि प्रारम्भकालत एव स्त्रीकवयः प्रथन्ते। ऋग्वेदे बहुभिः स्त्रीभिः कृता मन्त्राः प्रसिद्धा ये ऋषिकानाम्ना व्यवह्रियन्ते। कविताहष्ट्या ऋचामासां भूयसी प्रतिष्ठा।

वेदानन्तरकालभाविनि पालीसाहित्ये सांसारिकं विलासमवधूय धार्मिकीं शान्तिमाश्रिताभिः ललनाभिः कृता गाथाः थेरोगाथानाम्ना प्रसिद्धाः।

संस्कृतसाहित्येऽपि सूक्तिसंग्रहेषु चत्वारिंशतोऽन्यूनानां रमणीकवीनां कविताः सङ्गृहीताः सन्ति, यासु कतिचन प्रधानस्त्रीकवयोऽत्र निर्दिश्यन्ते।

## विज्जिका

मम्मटाचार्येण स्वीये शब्दव्यापारविचारे काव्यप्रकाशे च 'दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मद्गृहे दास्यसि,' 'धन्यासि या कथयसि प्रियसङ्गमेऽपि' इति पद्यद्वयमुद्धृतम्। अनयोः प्रथमं पद्यं धनिकेन दशरूपकावलोके मुकुलभट्टेन अभिधावृत्तिमातृकायां चोद्धृतम्। अतश्च तत्पद्यरचयित्र्याः समयः ८५० ई० मितः कथयितुं शक्यते।

विज्जिकाया एकं पद्यं प्रसिद्धम्—

'नीलोत्पलदलश्यामां विज्जिकां मामजानता।
वृथैव दण्डिना प्रोक्ता सर्वशुक्ला सरस्वती ॥'

अनेनापि दण्डिकालात्पूर्वकालिकत्वमस्याः प्रतीयते। एतदपि पूर्वकथितसमयकत्वमस्याः साधयति।

विज्जिकायाः विजया-नामककर्णाटराजप्रियया सह ऐक्यमपि कतिपये वर्णयन्ति। तथा सति तस्या गर्वोक्तिरियं विज्जिकाया एव गर्वोक्तिरूपतया पर्यवस्यति—

'एकोऽभून्नलिनात्परश्च पुलिनाद्वल्मीकतश्चापर-
स्ते सर्वे कवयो भवन्ति गुरवस्तेभ्यो नमस्कुर्महे।
अर्वाञ्चो यदि गद्यपद्यरचनैश्चेतश्चमत्कुर्वते
तेषां मूर्ध्नि दधाति वामचरणं कर्णाटराजप्रिया ॥'

विज्जिकया स्फुटमुक्तकान्येव प्रणीतानि, न किमपि प्रबन्धकाव्यमनया रचितम्। मुक्तककाव्यप्रणयनेनैव तस्याः प्रतिभाप्रकर्षः परिचीयते। विज्जिकया भावुककवीनां वर्णने प्रोक्तम्—

'कवेरभिप्रायमशब्दगोचरं स्फुरन्तमार्द्रेषु पदेषु केवलम् ।
वदद्भिरङ्गैः कृतरोमविक्रियैर्जनस्य तूष्णीं भवतोऽयमञ्जलिः ॥'

## सुभद्रा

सुभद्रायाः पद्यानि भूयसा न प्राप्यन्ते । अस्या एकमेव पद्यं वल्लभदेवस्य सुभाषितावल्यां प्राप्यते । अथापि सुभद्राया बहूनि पद्यानि प्रागप्रथन्तेति निश्चयेन वक्तुं शक्यते, यतो राजशेखरेण तद्विषयेऽभिहितम्—

'पार्थस्य हृदये स्थानं लेभे खलु सुभद्रया ।
कवीनां च वचोवृत्तिचातुर्येण सुभद्रया ॥'

यदि सा प्रसिद्धकवयित्री नाभविष्यत्तदा राजशेखरः कथमपि तत्स्तुतिं नाकरिष्यदतस्तस्याः कवित्वमसन्दिग्धम् । राजशेखरपूर्ववर्त्तितया समयोऽपि निर्णीतप्राय एव ।

## फल्गुहस्तिनी

आत्मन एकेनैव पद्येनानेन कवयित्रीयं कीर्तिमधिकरोति—

'सृजति तावदशेषगुणाकरं पुरुषरत्नमलङ्करणं भुवः ।
तदपि तत्क्षणभङ्गि करोति चेदहह कष्टमपण्डितता विधेः ॥'

अस्याः पद्यान्तराण्यपि यद्युपलब्धान्यभविष्यंस्तदाऽस्या वास्तविकं गौरवं प्रकाशमासासादयिष्यत् । 'त्रिनयनजटावल्लीपुष्पम्' इत्याद्येकं पद्यमपि फल्गुहस्तिनीकृतित्वेन शार्ङ्गधरपद्धतौ समुद्धृतम् ।

मोरिका इन्दुलेखा-मारुला-विकटनितम्बा-प्रभृतीनामन्यान्यस्त्रीकवीनामपि पद्यानि सुभाषितावलि-सूक्तिमुक्तावलि-शार्ङ्गधरपद्धति-प्रभृतिषु संग्रहग्रन्थेषु प्राप्यन्त इति तासां प्रसिद्धताऽनुमीयते ।

उपरि यासां नामानि निर्दिष्टानि ताः स्फुटपद्यानि प्रणीतवत्यः, प्रबन्धप्रणेतृस्त्रीकवीनां ग्रन्थास्तत्र तत्र परिचयं प्रापिता एव । यथा—रामभद्राम्बाविरचितं रघुनाथाभ्युदयकाव्यम्, गङ्गादेव्या वीरकम्परायचरितञ्च ।

कतिपया अन्याः स्त्रियो याः कवयन्ति स्म—

| नाम | कालः | रचना |
|---|---|---|
| १. लखिमा | चतुर्दशशतकम् | स्फुटकाव्यानि |
| २. वैजयन्ती | सप्तदशशतकम् | " |
| ३. त्रिवेणी | १८१७–१८८३ ई० | स्फुटकाव्यानि |
| ४. क्षमाराव | विंशशतकम् | सत्याग्रहगीता |
| ५. इन्दुलेखा | षोडशशतकम् | स्फुटकाव्यानि |

# खण्डकाव्यानि

खण्डकाव्यं महाकाव्यस्यैकदेशानुसारि भवति। अस्य काव्यप्रभेदस्येतिहासः कदा आरभते इति चिन्तायाम् ऋग्वेदकाल एव खण्डकाव्यस्य बीजमुप्तमिति सविश्वासं वक्तुं शक्यते। मनोहारिणि उषःसूक्ते वीररसप्रधाने बिपाशाशुतुद्रीसूक्ते सुदासविजयसूक्ते च खण्डकाव्यस्य प्राग्रूपं निहितमिव प्रतीयते।

'अभ्रातेव पुंस एति प्रतीची गर्त्तारुगिव सनये धनानाम्।
जायेव पत्ये उशती सुवासा उषा हस्रेव नि रिणीते अप्सः॥'

इयम् उषःसुन्दरी भ्रातृहीना भगिनीव स्वदायभागाय पितृस्थानीयं सूर्यमुपतिष्ठते, कदाचिच्च पतिं प्रेमपाशे बन्धुमध्यवसिता सुन्दरपरिधाना सुन्दरीव सूर्यस्य समीपमायाति।

अत्र एवं विधेऽन्यत्र च मन्त्रसमुदये यदाख्यानजातं निहितं तत्खण्डकाव्यस्यादिमं रूपं मन्तुं शक्यत एव। कालिदासेन तु मेघदूतर्तुसंहारौ प्रणीय खण्डकाव्यपरम्परायाः शिलान्यास इव कृतः।

अग्रवालमहोदयाः खण्डकाव्यस्य पञ्चप्रकारकतामातिष्ठन्ते—

१. ऋग्वेदकालिकं खण्डकाव्यम्। अत्र खण्डकाव्यानुकारैः सूक्तैर्ऋषयोऽव्याजमात्मभावान् व्यञ्जयामासुः, यथोषःसूक्तादिषु।

२. भक्तिरसमयं खण्डकाव्यम्। यस्य प्रभेदस्य निदर्शनानि बौद्धग्रन्थेषु उपनिषत्सु च प्राप्यन्ते।

३. ऐतिहासिकं खण्डकाव्यम्। अस्य प्रभेदस्योदाहृणं रामायणे भारते वा कृतं प्रकृतिवर्णनं बोध्यम्।

४. रूपकान्तर्गतं खण्डकाव्यम्। रूपकेषु यत्र तत्र पात्राणां वस्तुवर्णनपराणि प्रेमप्रकाशनपराणि वा पद्यानि एतदुदाहरणतया स्वीकर्त्तुं शक्यन्ते।

५. उत्तरकालभवानां कवीनां शृङ्गारप्रधानं सङ्कीर्णं वा खण्डकाव्यम्।

एषु पञ्चसु प्रभेदेषु पञ्चमः प्रभेद एव सर्वोत्कर्षं गतः, कालिदासामरुकभर्त्तृहरिजगन्नाथादिभिरस्य प्रभेदस्य साहित्यमूर्जितं कृतम्। अन्ये प्रभेदा बीजभावेन स्थिता अपि पोषकसाहित्याभावात्सुप्तकल्पा एव।

इदमेव खण्डकाव्यमत्याधुनिकाः गीतिकाव्यम् ( Lyric ) इति नाम्ना व्यपदिशन्ति। अत्र गीतिकाव्यप्रभेद एव दूतकाव्यमुक्तककाव्यवर्णनप्रधानकाव्यान्यायान्ति, तेन खण्डकाव्यनामाऽयं प्रकारो मेघदूतर्त्तुसंहारगीतगोविन्दभर्त्तृहरिशतकत्रयामरुकशतकभल्लटशतकभामिनीविलासादीन् अन्यान्यानि दूतकाव्यानि चाङ्गीकरोति। तत्र प्रथमं मेघदूतमवतारयामः—

## मेघदूतम्

अस्य रचयितुः कालिदासस्य परिचयादिकं प्रकरणान्तर उक्तम्।

## मेघदूतस्य मौलिकता

कालिदासेन मेघदूते विरहिणो लोकस्य मनःस्थितेर्वर्णना कृता, पूर्वमेघे आदितोऽवसानपर्यन्तं बाह्यप्रकृतिश्चित्रिता, एवमेव उत्तरमेघे अन्तःप्रकृतिः।

सन्देशप्रेषणस्य प्रवृत्तिस्तदाधारेण काव्यप्रणयने प्रवृत्तिश्चेयं पुराणेषु रामायणे महाभारते चापि प्राप्यते। नलचरिते हंसेन संवादप्रेषणे उपक्रतम्, युधिष्ठिरेण कृष्णद्वारा संवादः प्रेषितः, रामेण हनूमता संवादः प्रापितः। तदत्र कालिदासेन रामायणमनुसृत्य मेघदूतं प्रणीतमिति कथनं नासत्यम्। कालिदासः स्वयमपि तथ्यमिदं गोपयितुं नैच्छत्। यद्यसौ तथ्यमिदं गोपयितुमैषिष्यत्, तदा स्वकाव्ये--'इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा' इति पद्यं कथमपि नायोजयिष्यत्।

रामायणाधारेण कृतमपीदं खण्डकाव्यं स्वीयां मौलिकतां न जहाति। मौलिकता हि कथायाः प्रकारस्य वाऽनुकरणमात्रेण नापह्रीयते, सा हि पद्यानां निर्माणे कथाया उपस्थापने नवीनां पद्धतिमपेक्षते। माघेनापि पुराणेतिहास-प्रथितं वृत्तमादायैव शिशुपालवधं प्रणीतमथापि तस्य मौलिकत्वमक्षतमेव, तथैव मेघदूतस्यापि मौलिकता शैल्या नवीनतायां मनोभावानां चित्रणे नूतनतायां च निहिता।

कालिदासेन मेघो दूततां गमितस्तद्विषये भामहेनापत्तिः कृता–

'अयुक्तिमद्यथा दूता जलभृन्मारुतेन्दवः।
तथा भ्रमरहारीतचक्रवाकशुकादयः॥
अवाचोऽव्यक्तवाचश्च दूरदेशविचारिणः।
कथं दूत्यं प्रपद्येरन्निति युक्त्या न युज्यते॥'

अत्र प्रसङ्गे उत्तरमपि स्वयमेव तेन दत्तम्—

'यदि चोत्कण्ठया यत्तदुन्मत्त इव भाषते।
तथा भवतु भूम्नेदं सुमेधोभिः प्रयुज्यते॥'

कालिदासेनापि—'कामार्त्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु' इति कथयित्वा सकलाप्येतद्विषयाऽऽपत्तिः परिहृता।

## मेघदूतस्यापरकविभिरनुकरणम्

मेघदूतं निर्माय कालिदासेन मन्ये एको मार्ग इव प्रवर्त्तितः। प्रसिद्धकविर्भवभूतिरपि मालतीमाधवे नाम स्वरूपके मेघं दूतं कृत्वा—

'दैवात्पश्येर्जगति विचरन् मत्प्रियां मालतीं चेद्
आश्वास्यादौ तदनु कथयेर्माधवीयामवस्थाम्॥'

इति संवादं प्रेषितवान्।

घटकर्परनामा कविरपि घटकर्परकाव्यनाम्नैव प्रथिते खण्डकाव्ये मेघमेव दूतं कृत्वा स्वप्रियासमीपे संवादं प्रेषितवान्—

'निचितं समुपेत्य नीरदैः प्रियहीनाहृदयावनीरदैः ।
सलिलैर्निहितं रजः क्षितौ रविचन्द्रावपि नोपलक्षितौ ॥'

एवमन्येऽपि कवयो मेघदूतानुकरणेन खण्डकाव्यानि दूतकाव्यनाम्ना प्रथयितुं प्रावर्त्तन्त । एवं संस्कृतसाहित्ये सन्देशकाव्यस्यैका श्रेणी एव समजायत । सन्देशकाव्येषु धोयीकविप्रणीतं 'पवनदूतम्' मेघदूतस्यानन्तरकनिष्ठम् । अयं धोयीकविरेव गीतगोविन्दकृता जयदेवेन कविक्ष्मापतिशब्देन स्मर्यते । वेदान्तदेशिक-वामनभट्ट-बाण-रूपगोस्वामिप्रभृतयः कतिपये परे कवयः हंसदूतनामकानि काव्यानि रचितवन्तः । चातकदूत-कोकिलदूतादयोऽपि ग्रन्थाः प्रथन्ते । भागवताधारकं भ्रमरदूताख्यं काव्यं तु स्वगुणगौरवख्यातमेव ।

परवर्त्तिनो जैनकवयो मेघदूतस्य चरणानि समस्यारूपेणावलम्ब्य दूतकाव्यानि कृतवन्तः । तदयं सम्प्रदायः कालिदासप्रवर्त्तित एवेति कालिदासस्य परमं गौरवस्थानम् ।

## मेघदूतस्य काव्यशैली

प्रायः श्लोकशतकमितोऽयं ग्रन्थः किमपि अलौकिकं मादकं तत्त्वं रक्षति येन लोको 'माघे मेघे गतं वयः' इति साभिमानं वक्तुमुत्सहते । मम विचारे मेघदूते विरहशालिनो युवजनस्य मनःस्थितेस्तादृशं व्यक्तं चित्रं प्रस्तुतं तदधीयानो जनः स्वचित्रमिव प्रदर्श्यमानः कामपि आत्मविस्मृतिमिव प्रतिपद्यते । इदमेव हि मेघदूतस्य वैशिष्ट्यं यत्तत्र वर्णनप्रवृत्तानि पद्यान्यपि मनोगतान् विरहिजनभावानभिव्यञ्जयन्ति—

'वेणीभूतप्रतनुसलिलासावतीतस्य सिन्धुः
पाण्डुच्छायातटरुहतरुभ्रंशिभिर्जीर्णपर्णैः ।
सौभाग्यं ते सुभग विरहावस्थया व्यञ्जयन्ती
कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः ॥'

पद्येऽत्र सिन्धोर्दशा दूरं गच्छति, विरहिण्या दशैव पुर उपेत्य विरहिणो हृदये कामपि पीडामवतारयति, याऽध्येतृरसिकानां हृदये विप्रलम्भशृङ्गारं प्रवाहयति ।

कालिदासेन मेघदूते सौन्दर्यसृष्टेः पराकाष्ठा प्रकाशिता—

'तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी ।'

इति सर्वाणि विशेषणान्युपन्यस्याप्यपरितुष्यता 'या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातुः' इत्युक्त्वा प्रकर्षः प्रकटीकृतः, नैतावदेव, भौगोलिकं ज्ञानं वैज्ञानिकं च ज्ञानमत्र ग्रन्थे स्थितमित्यप्याधुनिका अभिप्रयन्ति ।

कालिदासेन रामायणं दृष्ट्वैव मेघदूतमुद्भावितमिति प्रागवोचाम् । वाल्मीकिना कथितोऽप्यर्थोऽनेन कथं चमत्कारिशैल्यां प्रकाशित इति निदर्श्यते—

रामायणे वाल्मीकिना सीतां सन्तोषयितुं धैर्यं धारयितुञ्च—

'कल्याणी वत गाथेयं लौकिकी प्रतिभाति मे ।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥'

इत्युक्तम् । अयमेवार्थः कालिदासेन कया पद्धत्योच्यते ? तद् दृश्यताम्—

'इत्यात्मानं बहु विगणयन्नात्मनैवावलम्बे
तत्कल्याणि त्वमपि सुतरां मा गमः कातरत्वम् ।
कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥'

सफलकाव्ये हि कङ्कालाङ्ग्यपि युवतिरूपतां यातीति कथनमेतादृगुक्तिदर्शनमूलकमेवेति ।

## ऋतुसंहारकाव्यम्

अत्र काव्ये लघुकायाः षट् सर्गा यत्र संहृत्य १५३ श्लोकाः षड्तुवर्णने निबद्धाः । प्रकृतेः सर्वावस्थासु परिवर्त्तितानि तानि तानि चित्राण्यत्र प्रस्तुतानि यानि प्रत्यक्षदृष्टानीव हृदयं रञ्जयन्ति । कालिदासोयमेवेदमपि काव्यम् ।

केचिदत्र मल्लिनाथस्य टीकामनालोक्यास्य कालिदासप्रणीतत्वं न स्वीकुर्वन्ति । केचित्पुनरत्र ग्रीष्मं प्रथमं वर्ण्यमानमपि दृष्ट्वा किमपि वितृष्णत्वमिव प्रकाशयन्ति । उभयमपीदं न युक्तम्, यतो मल्लिनाथः सर्वानेव ग्रन्थान् विवृणुयादेवेति कुतस्त्यो नियमः ? किञ्च वर्षादौ वसन्तस्य निपातेन तद्वर्णनं प्राथम्यमर्हतीति पञ्चाङ्गे युज्यते, न पुनः काव्ये । काव्ये हि कविरुचिः प्राधान्यं भजते । अतो नानया पद्धत्याऽस्य ग्रन्थस्य कालिदासकृतित्वं प्रतिषेद्धुं शक्यते । वस्तुतोऽयं ग्रन्थः कस्यचिदन्यस्य कालिदासस्य कोटिजिदपरनाम्नः । बहवो हि बभूवुः कालिदासाः श्रृङ्गारतिलक-ज्योतिर्विदाभरण-पुष्पबाणविलासादिकर्त्तारः । तदयं ग्रन्थोऽपि तदन्यतमस्यैव कस्यापि कृतिः स्यादिति सम्भवदुक्तिकम् । कीथ ( Keith ) महाशयोऽप्यर्थमिममुक्तवान् । कविताशैली पुनरस्य ग्रन्थस्य सरसा सरला च प्रतिभाति—

'मन्दानिलाकुलितचारुतराग्रशाखः पुष्पोद्गमप्रचयकोमलपल्लवाग्रः ।
मत्तद्विरेफपरिपीतमधुप्रसेकश्चित्तं विदारयति कस्य न कोविदारः ॥'
'गृहीतताम्बूलविलेपनस्रजः पुष्पासवामोदितवक्त्रपङ्कजाः ।
प्रकामकालागुरुधूपवासितं विशन्ति शय्यागृहमुत्सुकाः स्त्रियः ॥'

## जयदेवः

मधुरकोमलकान्तपदावलीनिर्माणरसिकः जयदेवो लक्ष्मणसेननामकस्य बङ्गीयस्य राज्ञः सभायामासीत् । लक्ष्मणसेनस्य संवत् वङ्गदेशे विहारप्रान्ते च सर्वत्र प्रचरति । लक्ष्मणसंवत्ख्रीष्टाब्दयोरन्तरं ११०९ मितं विद्यते, अतो लक्ष्मणसेननृपतेर्द्वादशशतकप्रारम्भ एव कालः । स एव कालो जयदेवस्यापि मन्यते । १२७५-१३२० ई० समये समुद्भूतेन महाराष्ट्रभाषाया महनीयकीर्तिना भास्करभट्टवोरीकरमहाशयेन निर्मिते शिशुपालवधनामके महाराष्ट्रभाषाकाव्ये

गीतगोविन्दस्य बहूनि पद्यानि भावतोऽनुकृतानि विद्यन्त इत्यपि जयदेवस्य पूर्वोक्तं समयं समर्थयति। गुर्जरप्रान्तशासकस्य शार्ङ्गदेवस्यैकत्रशिलालेखे मङ्गलश्लोकतया गीतगोविन्दप्रथमसर्गस्थ एकः श्लोक उल्लिख्यते, शार्ङ्गदेवस्य समयश्च १३४८-१३९१ मितोऽतोऽपि पूर्वोक्तसमयवर्त्तिता पुष्यति जयदेवस्य। जयदेवो वङ्गीयोऽथ च केन्दुबिल्वनामकग्रामवासी आसीत्। प्रसन्नराघवचन्द्रालोकादिप्रणेतारो गीतगोविन्दकाराज्जयदेवाद्भिन्ना एव।

## जयदेवस्य गीतगोविन्दम्

गीतगोविन्दं द्वादशसर्गात्मकं खण्डकाव्यम्। यद्यपि सर्वथेदं काव्यकोटौ नायाति यतोऽत्र चरितं न वर्ण्यतेऽथापि वर्णनपरकखण्डकाव्यत्वमस्य स्वीकर्त्तव्यमेव। केचिदाधुनिकास्तु गीतगोविन्दं गीतिनाट्यं मन्यन्ते, यथाह मैक्डोनेल (Macdonell) महोदयः—

'The transitional stage between pure lyric and pure drama, a lyrical drama though dating from the twelfthcentury is the earliest literary specimen of primitive type of play that still survives in Bengal and must have preceded the regular drama. The poem contains no dialogue in the proper sense.'

अर्थात् गीतगोविन्दं शुद्धगीतिकाव्यशुद्धनाट्ययोरन्तरे वर्त्तते, यद्यपीदं द्वादशशताब्द्यां निरमीयत, अथापीदं पक्वतामुपयास्यतो नाट्यस्योदाहरणस्वरूपतया प्रथमं निदर्शनं मन्तव्यम्, यदीया परम्परा वङ्गेषु सम्प्रत्यपि जीवति। इदं शुद्धनाट्यस्यानुगामि मन्तुं शक्यते यद्यपि संवादोऽत्र नास्ति।

गीतगोविन्दस्य द्वादशापि सर्गाः गीतमयाः। सर्गाणां कथां परस्परं याजयितुं कतिचन श्लोका अपि सन्ति। सरसमधुरकवितायाः पराकाष्ठाऽत्र निर्दशिता।

भक्तेः सरसकवितायाश्चैकत्र समावेशो यथा गीतगोविन्दे न तथा क्वापि परत्रेति कथनं नानुपयुक्तम्। स्वयमुक्तं जयदेवेन—

'यदि हरिस्मरणे सरस मनो यदि विलासकलासु कुतूहलम्।
मधुरकोमलकान्तपदावलिं शृणु तदा जयदेवसरस्वतीम्॥'

अपूर्वाणामुपमानामुत्प्रेक्षाणां च प्रयोगोऽत्र ग्रन्थे विलक्षणः—

'वहति च वलितविलोचनजलभरमाननकमलमुदारम्।
विधुमिव विकटविधुन्तुददन्तदलनगलितामृतधारम्॥'

कतिचन विद्वांसोऽत्र ग्रन्थे—'गोपीपीनपयोधरमर्दनचञ्चलकरयुगशाली' इत्यादिशृङ्गारप्रधानपद्यानि दृष्ट्वाऽश्लीलतां वदन्ति। वस्तुतस्तु अत्र ग्रन्थे श्रीकृष्णो नाम परमात्मतत्त्वं गोपिकाश्च जीवतत्त्वानि, तयोर्मेलनमत्र वर्णितमिति परे। केचित गाः पातीति गोपः शरीरम्, गोपी शरीरी आत्मा, पीनः पयोधरोऽज्ञानमेघो ज्ञानावरकत्वात्, तस्य मर्दने करयुगं सालम्बननिरालम्बनसमाधिरूपं प्रकाशक्षमम्, तच्छालीत्येवंविधमर्थं कृत्वाऽस्याश्लीलतामपनुदन्ति।

वयं तु पश्यामः—श्रीकृष्णस्य गोपीभिः सह लौकिक्यः क्रीडा एवं यदि वर्णितास्तदाऽत्र काऽश्लीलता ? कुमारसम्भवेऽष्टमे सर्गे, माघे एकादशादौ सर्गे, नैषधेऽष्टादशेऽन्यत्र च महाकाव्ये तत्र तत्र कामसूत्रमनुसृत्य वर्णिताः सम्भोग-प्रकाराः यदि क्षम्यन्ते तदाऽत्रत्यः शृङ्गारः कथं न क्षम्येत। ये पुनः शृङ्गार-कथामात्र एव कमपि विरसं गन्धमनुभवन्ति तेषां कथनमेव किं मूल्यं रक्षति ?

गीतगोविन्दस्य प्रभावो न केवलमुत्तरभारतीयसाहित्येऽपि तु गुर्जरकन्न-डादिदक्षिणप्रान्तसाहित्येऽपि प्रकटमुपलक्ष्यते। चण्डीदासविद्यापतिप्रभृतयस्तु कवयो गीतगोविन्दमुपजीव्यैव विश्ववन्द्यं पदमवापुः।

महाप्रभुश्चैतन्यदेवोऽस्य गीतगोविन्दस्य परमभक्त आसीत्। तच्छिष्या-न्यतमो षोडशशताब्दीसम्भूतो राजा प्रतापरुद्रः उत्कलीयमन्दिरेषु गीतगोवि-न्दस्य नियमितगानार्थं भूमिदानं कृतवान्।

अस्य ग्रन्थस्यानुकारे गीतगोपालगीतगोपीपतिप्रभृतयो बहवो ग्रन्था अरचिषत, इत्यप्यस्य लोकप्रियत्वे प्रमाणम्।

अत्रत्यानि गीतानि रागतालशुद्धानि परिष्कृतपदानि नितान्तमधुराणि च—

'चिन्तयामि तदाननं कुटिलभ्रुरोषभरेण।
शोणपद्ममिवोपरि भ्रमताऽऽकुलं भ्रमरेण॥'
'निन्दति चन्दनमिन्दुकिरणमनुविन्दति खेदमधीरम्।
व्यालनिलयमिलनेन गरलमिव कलयति मलयसमीरम्॥'

इत्यादीनि गीतानि सरसकविताया असमानि निदर्शनानि। न केवलं गीतनिर्माणेऽपि तु पद्यनिर्माणेऽपि परा प्रौढिरत्र प्रकाशिता—

'अत्रान्तरे च कुलटाकुलवर्त्मपातसञ्जातपातक इव स्फुटलाञ्छनश्रीः।
वृन्दावनान्तरमदीपयदंशुजालैर्दिक्सुन्दरीवदनचन्दनबिन्दुरिन्दुः॥'

## अमरुकः

यथैव अमरुककविताः प्रथिताः सन्ति, तथैव तदीयमितिवृत्तं तिरोहितं विद्यते। केवलमसौ नवमशतकतः पूर्वमवर्त्ततेति कथयितुं शक्यते, यतो ८५० ख्रीष्टीयकालिको ध्वनिकारः—'मुक्तकेषु हि प्रबन्धेष्विव रसबन्धाभिनिवेशिनः कवयो दृश्यन्ते। यथाऽमरुकस्य कवेर्मुक्तकाः शृङ्गारस्यन्दिनः प्रबन्धायमानाः प्रसिद्धा एव।' इत्युक्तवान्।

वामनेनापि ८०० ई० समुद्भूतेनास्य पद्यत्रयमुदाहृतम्, अतोऽस्य समयः अष्टमं शतकं मन्यते, ततः पूर्वमपि किञ्चित् कथयितुं शक्यते।

अनेन शृङ्गाररसानुकूलाः प्रणयव्यवहाराः कामिजनमनोभावाश्चैव केवलं वर्णिताः, परं तत्रैव तावत्याकर्षकतोत्पादिता यदयं सुधीसमाजे गौरवमभजत।

एतदीये अमरुशतके शतमेकं श्लोकानाम्, संस्करणभेदेन न्यूनाधिकभावोऽपि कियान् प्राप्यते।

अस्य ग्रन्थस्योद्धरणं प्रतिष्ठितैराचार्यैः कृतमतोऽस्य प्रियता प्रमातुं शक्यते।

१२१५ ई० समुद्भूतेनार्जुनवर्मणाऽत्र व्याख्या लिखिता, रविचन्द्रेणास्य शतकस्याध्यात्मिकी व्याख्या कृता, चतुर्दशशतकोत्पन्नेन वेमभूपालेन अस्य शतकस्य व्याख्या नायिकाभेदपरतया रचिता ।

रतिक्रीडा अङ्गना च मनुष्यजीवनस्यानुपेक्ष्योपादानविशेषौ तावधिकृत्य कृतोऽयं ग्रन्थः । अत्र का त्रुटिर्यामपनेतुं ब्रह्मज्ञानमत्र समावेशयितुं प्रयस्यन्ति सुधिय इति न जाने ।

अस्य कवेर्व्यञ्जनाशक्तिरतिप्रौढा—

'असद्वृत्तो नायं न च खलु गुणैरेव रहितः
प्रियो मुक्ताहारस्तव चरणमूले निपतितः ।
गृहाणेमं मुग्धे व्रजतु निजकण्ठप्रणयिता-
मुपायो नास्त्यन्यस्तव हृदयसन्तापशमने ॥'

अत्र पद्ये वृत्तगुणाहारादिपदेषु श्लेषमहिम्ना यमर्थं कविर्व्यञ्जयति स परमरम्यो मूलभित्तिश्चास्य रसपेशलस्य काव्यस्य ।

अन्येऽप्यस्य रम्याः—'प्रस्थानं वलयैः कृतम्' इत्यादयः श्लोकाः प्रसिद्धाः । अस्य सर्वोऽपि ग्रन्थः परवर्त्तिभिः कविभिरात्मसात्कृतो भाषाकविभिः बिहारिदासपद्माकरादिभिरनूदितकल्पश्च कृतः ।

## गोवर्धनाचार्यः

अयं गोवर्धनाचार्यो मैथिलः पण्डितो वङ्गीयस्य राज्ञो लक्ष्मणसेनस्य सभायां विद्यमान आसीत् । तथा चोक्तम्—

'गोवर्धनश्च शरणो जयदेव उमापतिः ।
कविराजश्च रत्नानि समितौ लक्ष्मणस्य तु ॥

श्रीजयदेवकविनापि स्मर्यतेऽयम्—

'शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्धनस्पर्द्धी कोऽपि न विश्रुतः·····'

तदयं द्वादशशताब्द्या आदौ विद्यमान आसीदिति निश्चीयते, यतो लक्ष्मणस्य समयः तत्प्रवर्त्तितेन सम्प्रति प्रचरितेन संवत्सरेणैव निश्चितः ।

अनेन कविवरहालविरचितां प्राकृतमयीं गाथासप्तशतीमाश्रित्य आर्यामयो मुक्तकरूपः शृङ्गारसर्वस्वभूतो ग्रन्थः आर्यासप्तशतीनाम्ना कृतो यो विद्वत्समाजे सुप्रसिद्धः ।

अस्य कवेरुक्त्यैव ज्ञायते यदस्य शिष्य उदयनो भ्राता च बलभद्रनामा आसीत्, याभ्यामस्य ग्रन्थो लिखितः परिष्कृतश्च—

'उदयनबलभद्राभ्यां सप्तशती शिष्यसोदराभ्यां मे ।
द्यौरिव रविचन्द्राभ्यां प्रकाशिता निर्मलीकृत्य ॥'

मङ्गलाचरणत एवायं स्वीयं शृङ्गारमयकवित्वं व्यञ्जयितुं प्रारभते—

'मा वम संवृणु विषमिदमिति सातङ्कं पितामहेनोक्तः ।
प्रातर्जयति सलज्जः कज्जलमलिनाधरः शम्भुः ॥'

'सन्ध्यासलिलाञ्जलिमपि कङ्कणफणिपीयमानमविजानन् ।
गौरीमुखार्पितमना विजयाहसितः शिवो जयति ॥'

वस्तुतोऽस्यार्यासु शृङ्गारस्य मार्मिकी व्यञ्जना विद्यते, तद्विषये स्वयमुक्तं गोवर्धनेन–'मदनाद्वयोपनिषदो विशदा गोवर्धनस्यार्याः ।'

न केवलं शृङ्गारस्य कामकलाकलाप एवानेन प्रस्तुतोऽपि तु प्रणयस्य सौम्यं सात्त्विकरूपमपि व्यञ्जितम्—

'अन्यमुखे दुर्वादो यः प्रियमुखे स एव परिहासः ।
इतरेन्धनजन्मा यो धूमः सोऽगुरुसमुद्भवो धूपः ॥'

इदं तु सत्यं यत् गाथासप्तशतीमनुकुर्वती अपि आर्यासप्तशती गाथासप्तशतीवत् जीवनस्यान्यानि रहस्यानि नोद्घाटयति, तथापि शृङ्गारवर्णनमात्रे कुतोऽपि ग्रन्थादस्यापकृष्टता वक्तुं न शक्यते । क्वचित् क्वचिदनेन लोकवृत्तस्यापि साधु समावेशः कृतो यथा—

'भोगाक्षमस्य रक्षां दृङ्मात्रेणैव कुर्वतोऽनभिमुखस्य ।
वृद्धस्य प्रमदापि श्रीरपि भृत्यस्य भोगाय ॥'

## पण्डितराजो जगन्नाथः

पितुः पेरुभट्टस्य मातुर्लक्ष्म्याश्च पुत्रो तैलङ्गदेशावयवमुनगुण्डाभिधग्रामवासी वेजिनतीजातीयो जगन्नाथो गोदावरीमण्डलस्य भूषणमासीत् । तस्याभिजनं नाम 'उपद्रष्टा' इत्यासीत् । स स्वाध्ययनविषये स्वयं लिखति—

'श्रीमज्ज्ञानेन्द्रभिक्षोरधिगतसकलब्रह्मविद्याप्रपञ्चः
काणादीराक्षपादीरपि गहनगिरो यो महेन्द्रादवेदीत् ।
देवादेवाध्यगीष्ट स्मरहरनगरे शासनं जैमिनीयं
शेषाङ्कप्राप्तशेषामलभणितिरभूत् सर्वविद्याधरो यः ॥' इति ।

जगन्नाथः शाहजहांनामकस्य मुस्लिमशासकस्य सभायामासीत् । शाहजहां १६२८ तः १६३८ ई० पर्यन्तं राज्यमकरोत् । अतो जगन्नाथस्य समयविषये कोऽपि संशयो नोदयते । शाहजहांनृपतेः पुत्रो दारासिकोहो जगन्नाथस्य पोषक आसीत् ।

जगन्नाथः कस्यांचन यवनयुवत्यामासक्तो जातिच्युतो भूत्वा तामुपयेमे इति प्रवादो जगन्नाथस्य नाम्ना प्रचारिताभिः कविताभिरपि पुष्टिं नीयते । तस्यां मृतायां जगन्नाथो राजाश्रयं परित्यज्य मथुरामायातो यत्र तस्य १६७४ ई० वर्षे मृत्युरभवत् । मृत्योः पूर्वं स प्रायश्चित्तं कर्त्तुमपि सन्नद्ध आसीत् परं तत्कालप्रसिद्धौ पण्डितौ भट्टोजिदीक्षिताप्पय्यदीक्षितौ नानुमेनाते । तत्र कारणं तयोर्जगन्नाथेन सह शास्त्रीयमतभेद एवोच्यते ।

### पण्डितराजस्य ग्रन्थाः

| | |
|---|---|
| १. गङ्गालहरी | द्विपञ्चाशत्पद्यबद्धा गङ्गास्तुतिः |
| २. सुधालहरी | द्वात्रिंशत्पद्यात्मिका सूर्यस्तुतिः |

| | | |
|---|---|---|
| ३. | अमृतलहरी | एकादशश्लोककाया यमुनाप्रशस्तिः |
| ४. | करुणालहरी | चतुष्षष्टिश्लोकमिता विष्णुस्तुतिः |
| ५. | लक्ष्मीलहरी | एकचत्वारिंशत्पद्यात्मिका लक्ष्मीस्तुतिः |
| ६. | यमुनावर्णनचम्पूः | नामव्याख्यातविषया |
| ७. | आसफविलासः | आसफखांमहोदयस्य प्रशस्तिः |
| ८. | प्राणाभरणम् | कामरूपाधीशस्य प्राणनारायणस्य प्रशस्तिः |
| ९. | जगदाभरणम् | उदयपुराधीशराणाकर्णसिंहसूनोर्जगत्सिंहस्य प्रशस्तिः |
| १०. | चित्रमीमांसाखण्डनम् | अप्पय्यदीक्षितकृतचित्रमीमांसानामकग्रन्थालोचना |
| ११. | मनोरमाकुचमर्दनम् | सिद्धान्तकौमुदीटीकाया मनोरमायाः खण्डनम् |
| १२. | रसगङ्गाधरः | अपूर्णोऽतिप्रौढोऽलङ्कारशास्त्रग्रन्थः |
| १३. | भामिनीविलासः | कवितासङ्ग्रहः |

## पण्डितराजस्य भामिनीविलासः

सरसकवितानिर्माणयशस्वी जगन्नाथः स्वीयानि पद्यरत्नानि 'भामिनीविलास'नाम्ना संगृहीतवान्, तदुक्तं तेन—

'दुर्वृत्ता जारजन्मानो हरिष्यन्तीति शङ्कया।
मदीयपद्यरत्नानां मञ्जूषैषा मया कृता ॥'

अत्र संगृहीताः श्लोका ग्रन्थान्तरेऽप्युदाहरणतया तेनोद्धृताः। वस्तुतो रसपेशलकविताधारायाः पण्डितराज एव समाप्तिर्जाता इति यद्युच्यते तदा सत्यं नापलप्यते। स्वयं दक्ष आलोचकः प्रकाण्डपण्डितो दार्शनिकचूडामणिश्चायं स्वं काव्यं तथा परिमार्जितं निर्मितवान् यथा तत्र रेखापि त्रुटेर्नान्विष्यापि द्रष्टुं शक्यते। स्वयं प्रशंसितापि तेन स्वकविता—

'मधु द्राक्षा साक्षादमृतमथ वामाधरसुधा
कदाचित् केषाञ्चिन् न खलु विदधीरन्नपि मुदम्।
ध्रुवं ते जीवन्तोऽप्यहह मृतका मन्दमतयो
न येषामानन्दं जनयति जगन्नाथभणितिः ॥'

भामिनीविलासे चत्वारः खण्डाः, १–प्रस्तावनाविलासः, २– शृङ्गारविलासः, ३–करुणविलासः, ४–शान्तविलासश्च। प्रस्तावनाविलासेऽन्योक्तयः प्रधानतयोक्ताः, शृङ्गारविलासे शृङ्गाररसकविताः, करुणविलासे पत्नीवियोगव्यथितस्य मर्मस्पृशः उक्तयः, शान्तविलासे भक्तिप्रधानाः कविताः सन्ति। क्रमश एकैकमुदाहरणं प्रदर्श्यते—

'आपेदिरेऽम्बरपथं परितः पतङ्गा भृङ्गा रसालमुकुलानि समाश्रयन्ते।
सङ्कोचमञ्चति सरस्वति दीनदीने मीनो नु हन्त कतमां गतिमभ्युपैतु ॥'

'तीरे तरुण्या वदनं सहासं नीरे सरोजं च मिलद्विकासम् ।
आलोक्य धावत्युभयत्र मुग्धा मरन्दलुब्धालिकिशोरमाला ॥'
'धृत्वा पदस्खलनभीतिवशात्करं मे यारूढवत्यसि शिलाशकलं विवाहे ।
सा मां विहाय कथमद्य विलासिनि द्यामारोहसीति हृदयं शतधा प्रयाति ॥'

पण्डितराजस्य कवितायाः अद्भुतं चमत्कारित्वं विद्यते यदन्वयः सातिशयः स्फुटो भवति, कुत्रापि अन्वयस्यावश्यकता न भवति, रसपरिपाकश्च स्फीतो भवति ।

यदि पण्डितराजस्य यमुनावर्णनचम्पूः प्राप्ता स्यात्तदा गद्यवर्त्मन्यपि नवः प्रकाश आहितः स्यादिति मम दृढो विश्वासः ।

## इतरे मुक्तककाराः

| | | |
|---|---|---|
| भर्तृहरिः | सप्तमं शतकम् | भर्तृहरिशतकत्रयम् |
| भल्लटः | अष्टमं शतकम् | भल्लटशतम् |
| मधुसूदनः | सप्तदशशतकम् | मधुसूदनशतकम् |
| हरिहरोपाध्यायः | सप्तदशशतकम् | हरिहरसुभाषितम् |



# स्तोत्रसाहित्यम्

यत्र ग्रन्थे देवतां काञ्चिदुद्दिश्य नतिर्निबध्यते तत्स्तोत्रम् । स्तोत्रप्रसङ्गे भावस्य प्रकाशनाय कविभिः प्रयासः क्रियतेऽतोऽस्यापि काव्यभेदरूपता पर्यवसिता । अस्य काव्यभेदस्यादिमं रूपं रुद्राध्यायादौ वेदे दृश्यते, तत्र हि नतिर्निबद्धैव, प्रार्थना अपि स्फुटाः, 'नमस्ते रुद्रमन्यवे', 'मानस्तोके तनये मान आयुषिमानो गोषु मानोऽश्वेषु रीरिषः' इत्यादि स्तोत्ररूपं वैदिकं साहित्यं सुप्रकाशम् ।

वेदतः परतः पुराणेषु इतिहासेषु च स्तोत्राणि प्राप्यन्ते । महाभारते रामायणे श्रीमद्भागवते च स्तुतिसाहित्यस्य उत्तमानि निदर्शनानि दृश्यन्ते । मार्कण्डेयपुराणस्थं भगवतीस्तोत्रमपि प्रशंसनीयम् ।

ततः परमपि कुमारसम्भवे स्तोत्रमुपनिबद्धं यन्महाकाव्याङ्गम् इति पृथक् स्तोत्रसाहित्यरूपेण नाङ्गीक्रियते ।

पौराणिकस्तोत्राणि विहाय लौकिकस्तोत्राणां क्रमनिर्धारणे प्रक्रम्यमाणे सर्वाधिकप्राचीनं महिम्नः स्तोत्रं स्यादिति सम्भाव्यते । यद्यपि तस्य कर्त्ता पुष्पदन्तः कुत्र कदा चाभवदिति न स्मर्यतेऽथापि कश्मीरेषु यदा शैवागमशास्त्रस्य महान् प्रचार आसीत्तदा कोऽपि कविः काल्पनिकेन वास्तविकेन वा पुष्पदन्त इति नाम्ना ग्रन्थमिमं चकारेति बाढं विश्वसिमि । दशमशतकात् पूर्वमेव शैवागमशास्त्रं पूर्णप्रचारवदासीदिति महिम्नः स्तोत्रस्यापि दशमे ततः पूर्वतने वा शतके निर्माणं सम्भाव्यते । अष्टमशतकमस्य समय इति केचित् ।

स्तोत्रस्यास्य प्रसङ्गे कथा प्रसिद्धा यत्पुष्पदन्तो हरस्य पार्श्वचरो गणः । स हि शिवशापवशात् गन्धर्वभावं गतः, स्तोत्रेणानेन शिवं प्रसाद्य च स्वं प्राचीनं गणस्थानं प्राप्तवान् । कथासरित्सागरे तु पुष्पदन्त एव कात्यायनरूपेणावतीर्णः स्तोत्रमिदमकृतेति कथा प्रथते । ततश्चास्य ईशवीयपूर्वचतुर्थशतके समुत्पन्नताऽऽपतति ।

भरद्वाजमहोदयास्तु भाषाक्रमेणास्य प्रणयनकालम् अष्टमशतकम् आमनन्ति ।

## महिम्नः स्तोत्रम्

स्वीयया पाण्डित्यपूर्णया मनोहरया भावप्रवणया च शैल्या स्तोत्रमिदमतीव ख्यातम् । अत्र लघुकायेऽपि स्तोत्रे विंशतिष्टीकाः प्रणीता येनास्य प्रकर्षः प्रतिभाति । मधुसूदनसरस्वतीकृता शिवविष्णूभयपक्षीया टीका शास्त्रीयार्थप्रकाशिका प्रौढा च ।

अत्रत्याः श्लोकाः गाढबन्धतायां कस्यापि काव्यग्रन्थस्य तुलामारोढुं क्षमाः ।

'मधुस्फीता वाचः परममृतं निर्मितवत-
स्तव ब्रह्मन् किं वागपि सुरगुरोर्विस्मयपदम् ।

मम त्वेतां वाणीं गुणकथनपुण्येन भवतः
पुनामीत्यर्थेऽस्मिन्पुरमथन बुद्धिर्व्यवसिता ॥'

कतिचन पद्यानि शास्त्रीयपद्धतिव्यञ्जकतया व्याख्यामन्तरा दुर्बोधानि । यथा—

'त्रयीं तिस्रो वृत्तीस्त्रिभुवनमथो त्रीनपि सुरा-
नकाराद्यैर्वर्णैस्त्रिभिरभिदधत्तीर्णविकृति ।
तुरीयं ते धाम ध्वनिभिरनुरुन्धानमणुभिः
समस्तं व्यस्तं त्वां शरणद गृणात्योमिति पदम् ॥'

एवं सत्यपि काव्यदृशाऽपि स्तोत्रस्यास्य कापि नवैव विच्छित्तिजनकता, यथा—

'हरिस्ते साहस्रं कमलबलिमाधाय पदयो-
र्यदेकोने तस्मिन्निजमुदहरन्नेत्रकमलम् ।
गतो भक्त्युद्रेकः परिणतिमसौ चक्रवपुषा
त्रयाणां रक्षायां त्रिपुरहर जागर्त्ति जगताम् ॥'

## कविवरो मयूरः

बाणो मयूरस्य समकालिकः सम्बन्धी चेति कथा प्रसिद्धा । अतोऽयं बाण-समकालिकः सम्भवति । उच्यते—

'अहो प्रभावो वाग्देव्या यन्मातङ्गदिवाकरः ।
श्रीहर्षस्याभवत्सभ्यः समो बाणमयूरयोः ॥'

अतोऽस्य षष्ठशतकं कालः इति पूर्वोक्तं समर्थितं भवति । केनापि कारणेन महारोगाक्रान्तोऽयं स्तुत्या सूर्यं प्रसाद्य तत्कृपया नैरुज्यमयासीदिति कथा प्रसिद्धा ।

## मयूरस्य सूर्यशतकम्

मयूरशतकं सूर्यशतकमिति वा प्रसिद्धमिदं स्तोत्रं नितान्तप्रौढरचनं प्रसिद्धम् । आनन्दवर्धनोऽपि ध्वन्यालोके मयूरस्य सूर्यशतकमुद्धरति, इदमेवास्य प्रौढेः प्रसिद्धेश्च प्रबलं प्रमाणम् । अस्य रचना शब्दार्थगुम्फे कस्यापि कवेः कवितामधरयति । माघः श्रीहर्षोऽपि वा सर्वात्मना सूर्यशतकगतां प्रौढिं प्रपन्नो न वेति सन्दिग्धमेव । पद्यद्वयमुदाह्रियते—

'दत्तानन्दाः प्रजानां समुचितसमयाकृष्टसृष्टैः पयोभिः
पूर्वाह्णे विप्रकीर्णा दिशि दिशि विरमत्यह्नि संहारभाजः ।
दीप्तांशोर्दीर्घदुःखप्रभवभवभयोदन्वदुत्तारनावो
गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु ॥'

'खं येऽत्युज्ज्वलयन्ति लूनतमसो ये वा नखोद्भासिनो
ये पुष्णन्ति सरोरुहश्रियमपि क्षिप्ताब्जभासश्च ये ।

ये मूर्धस्ववभासिनः शितिभृतां ये चामराणां शिरां-
स्याक्रामन्त्युभयेऽपि ते दिनपतेः पादाः श्रिये सन्तु वः ॥'

सूर्यशतकस्यैकादश टीकाः, यासु वल्लभदेवस्य सूर्यानुवादिनी प्राचीनतमा ।

## शङ्कराचार्यस्य स्तोत्राणि

शङ्कराचार्यविरचितत्वेन बहवः स्तोत्रग्रन्थाः प्रथन्ते। स्तोत्ररत्नाकरादिषु संग्रहग्रन्थेषु यावन्ति स्तोत्राणि सन्ति तानि यद्येकत्र सङ्कलितानि स्युस्तदा महाभारतस्य विशालता तत्रापतिता स्यात् । तेषां स्तोत्राणां विषयाः भाषाशैल्यश्च तथा भिन्ना यथा तेषामनेककर्तृकत्वं मन्तव्यमेव भवति। अतो भिन्नभिन्नशङ्कराचार्यकृतानि तानि मतानि। शङ्करभगवत्पादस्यासने ये प्रत्यग्रशङ्करा आरुढास्ते सर्वेऽपि स्वभक्तिप्रकटनाय स्तोत्राणि निबबन्धुः। सम्प्रति कतमं कस्य शङ्करस्य रचनाभूतं स्तोत्रमिति वक्तुमशक्यं यावद्भाषाशैलीप्रभृतिगुणजातं विशिष्य नालोचितं स्यात्। एवमनिर्णये सत्यपि सौन्दर्यलहरी प्रथमशङ्करभगवत एव कृतिरिति कथनं सर्वानुमोदितम्। यद्यपि सर्वेषां शङ्कराणां स्तोत्राणि सामान्यत उत्तमकोटिकानि, तथापि आद्यशङ्कराचार्यकृतायां सौन्दर्यलहरीनामकस्तुतौ यावान् काव्यगुणो लभ्यते तावानन्यत्र दुर्लभः। सौन्दर्यलहरीति नामकरणबीजमिदमेकं पद्यं तदीयसौन्दर्यप्रकटनाय पर्याप्तमिति निदर्शनान्तरमनुपहृत्य तन्मात्र निदर्श्यते—

'तनोतु क्षेमं नस्तव वदनसौन्दर्यलहरी-
परीवाहस्रोतःसरणिरिव सीमन्तसरणिः ।
वहन्ती सिन्दूरं प्रबलकबरीभारतिमिर-
त्विषां वृन्दैर्वन्दीकृतमिव नवीनार्ककिरणम् ॥'

इदं पद्यमप्पय्यदीक्षितेन कुवलयानन्देऽप्युद्धृतम् । अत्रोत्प्रेक्षा विलक्षणा ।

## कुलशेखरः

अयं त्रिवाङ्कुरराजो दशमे शतकेऽवर्त्तिष्टेति कथ्यते। वैष्णवधर्माचार्यान्यतमोऽयं 'मुकुन्दमाला' नामकं स्तोत्रमेकं विरचितवान्। स्तोत्रेषु काव्यगुणापेक्षयाऽऽत्मनिवेदनगुणोऽधिकोऽपेक्ष्यते। काव्यशक्तिप्रदर्शनार्थं यानि स्तोत्राणि व्यरच्यन्त तानि न तथाऽऽद्रियन्त। आत्मनिवेदनगुणोऽस्य मुकुन्दमालायां प्रकट इति कृत्वाऽस्य स्तोत्रं प्रथितम्—

'दिवि वा भुवि वा ममास्तु वासो नरके वा नरकान्तक. प्रकामम् ।
अवधीरितशारदारविन्दौ चरणौ ते मरणे विचिन्तयामि ॥'

इदं पद्यं नालङ्कारेण न शब्दचमत्कारेण न वा ध्वनिना तथा गौरवमाप्तुमर्हति, परमत्र काचिदपूर्वैव भावनानिवेदना यया हृदयं बलवदाकृष्यते।

स्तोत्रसाहित्ये वैष्णवस्तोत्राणां संख्या नातिलघीयसी। यामुनाचार्यस्य स्तोत्रम्, लीलाशुकस्य कृष्णकर्णामृतम्, वेङ्कटाध्वरिणो लक्ष्मीस्तवः, मधुसूद-

नस्य आनन्दमन्दाकिनी, माधवभट्टस्य दानलीलाप्रभृतयः स्तोत्रग्रन्था अत्र-प्रसङ्गे मुख्याः।

शैवस्तोत्राणि पृथगेव कमपि चमत्कारविशेषं रक्षन्तो विस्मर्तुं न शक्यन्ते। शैवस्तोत्रेषु महिम्नः स्तोत्रादनन्तरं काश्मीरकाणां शैवानां स्तोत्रग्रन्था आयान्ति। तेषु शिवस्तोत्रावली, स्तुतिकुसुमाञ्जलिश्चेति द्वौ ग्रन्थौ प्रसिद्धौ।

## उत्पलदेवस्य शिवस्तोत्रावली

उत्पलदेवस्त्रिकदर्शनाचार्याणामन्यतमो नवमशतके वर्त्तमान आसीत्। अनेन निर्मिता शिवस्तोत्रावली एकविंशतिसंख्यकानां शिवस्तोत्राणां सङ्ग्रह-रूपाऽस्ति। अत्रत्यानि पद्यानि प्रसन्नपदानि आत्मनिवेदनरूपस्तुतिरहस्य-युतानि चेति सातिशयस्वादुतामाकलयन्ति। एकमुदाहरणं यथा—

'कण्ठकोणविनिविष्टमीश ते कालकूटमपि मे महामृतम्।
अप्युपात्तममृतं भवद्वपुर्भेदवृत्ति यदि मे न रोचते॥'

## जगद्धरस्य स्तुतिकुसुमाञ्जलिः

काश्मीरको जगद्धरभट्टः यजुर्वेदोपरि वेदविलासनामकस्य भाष्यस्य रच-यितुर्गौरीधरस्य पौत्रः रत्नधरस्य पुत्रः पद्मपुरवास्तव्यश्चासीत्। जगद्धरस्य समयः १३५० ई० समीपे सम्भवति, यतो जगद्धरेण स्वपुत्रस्य यशोधरस्य पाठनाय कातन्त्रव्याकरणवृत्तिरेका रचिता, यस्यां राजानकशितिकण्ठेन व्याख्या प्रणीता। शितिकण्ठेन काश्मीरशासकस्य हुसनशाहस्य राज्यकाले १४७२—१४८४ ई० पूर्वोक्ता व्याख्या लिखितेति ततः पूर्वतनः पूर्वकथितश्च समयो जग-द्धरस्य प्रमाणितो भवति।

स्तुतिकुसुमाञ्जलौ ३८ स्तोत्राणि १४२५ श्लोकाश्च सन्ति। अत्र ग्रन्थे कवितायाः भिन्नानि वर्त्मान्याश्रित्य शिवस्य स्तुतिर्निबद्धा। क्वचिदलङ्कारच्छटा, क्वचिदन्यादृशी वाग्भङ्गिश्च ग्रन्थमिममादरं प्रापयतः। सर्वाधिकमादरं तु जन-यत्यस्य भक्तकवेः सरसपदनिर्माणसहचरी सरलकाव्यक्षमता।

'भृङ्गी विवेकरहितः पशुरुन्मदोऽयं
मत्वेति चेत् परिहरस्यतिकातरं माम्।
एतादृशोऽपि वृषभश्चरणार्पणेन
नीतस्त्वया कथमनुग्रहभाजनत्वम्॥'

'स्वैरेव यद्यपि गतोऽहमधः कुकृत्यैस्तत्रापि नाथ तव नास्म्यवलेपपात्रम्।
दृप्तः पशुः पतति यः स्वयमन्धकूपे नोपेक्षते तमपि कारुणिको हि लोकः॥'

सरलतया सहैव प्रयुक्ते श्लेषेऽनेनासाधारणं क्षमत्वं प्रदर्शितम्—

'चारुचन्द्रकलयोपशोभितं भोगिभिः सह गृहीतसौहृदम्।
अभ्युपेतघनकालशात्रवं नीलकण्ठमतिकौतुकं स्तुमः॥'

श्लेषेण सहैवात्र व्यतिरेकस्य चमत्कारोऽपि नितान्तरमणीयः।

## जैनस्तोत्राणि

संस्कृतसाहित्यस्यान्यान्याङ्गेषु यथा जैनैर्बौद्धैश्च स्वसहयोगो दत्तस्तथैव स्तोत्रसाहित्येऽपि तेषां योगः स्तुत्यः। जैनस्तोत्राणां संख्यापि भूयसी। केवलं काव्यमालायामेव त्रयोविंशतिजैनस्तोत्राणामेकत्र सङ्कलनं प्राप्यते। तेषु जैन-स्तोत्रेषु मानतुङ्गाचार्यस्य 'भक्तामरस्तोत्रम्', सिद्धसेनस्य 'कल्याणमन्दिरस्तोत्रम्' अतितरां प्रसिद्धे। अनयोर्मानतुङ्गाचार्यो बाणभट्टस्य समकालिकः कथ्यते। सिद्धसेनस्तु ततोऽपि शताब्दद्वयपूर्ववर्त्ती समाख्यायते—

'अल्पश्रुतं श्रुतवतां परिहासधाम त्वद्भक्तिरेव मुखरीकुरुते बलान्माम्।
यत्कोकिलः किल मधौ मधुरं विरौति तच्चारुचूतकलिकानिकरैकहेतु॥'

'आस्तामचिन्त्यमहिमा जिन, संस्तवस्ते
नामापि पाति भवतो भवतो जगन्ति।
तीव्रातपोपहतपान्थजनान् निदाघे
प्रीणाति पद्मसरसः सरसोऽनिलोऽपि॥'

इत्थं वयं पश्यामो यदेषु स्तोत्रेषु प्रकृष्टं साहित्यं लभ्यते।

वादिराजस्य एकीभावस्तोत्रम्, जम्बूगुरोः जिनशतकम्, सोमप्रभाचार्यस्य सूक्तिमुक्तावली, हेमचन्द्रस्य अन्ययोगव्यवच्छेदिका इत्यादयो ग्रन्था अप्यत्र प्रकरणे स्मर्यन्ते।

## बौद्धस्तोत्राणि

बौद्धानां महायानसम्प्रदाये ज्ञानस्य स्थाने भक्तेरुपयोगो मन्यतेऽतोऽत्र सम्प्रदाये बहवो ग्रन्थाः स्तोत्रविषयाः प्राप्यन्ते। महायानसम्प्रदायस्य भिक्षवः संस्कृतभाषायां प्रशस्तानि स्तोत्राणि रचितवन्तः। शून्यवादप्रतिष्ठापक आचार्यो नागार्जुनो यद्भक्तिपूर्णं स्तोत्रसाहित्यमसृजत् तदनतिचिरकालपर्यन्त-मप्राप्तमासीत्, सम्प्रति तदुपलब्धिर्जाता। नागार्जुनविरचितानां चतुर्णां स्तवानां संग्रहः चतुःस्तवनाम्ना प्रसिद्धः। एषां सर्वेषां तिब्बतीयभाषानुवादः प्राप्यते। सौभाग्यवशात् निरौपम्यस्तवः अचिन्त्यस्तवश्चेति द्वौ ग्रन्थौ प्राप्तौ मूलसंस्कृते।

नागार्जुनस्य स्तोत्रयोर्भाषा सरला प्रसादपूर्णा च प्रतिभाति—

'नामयो नाशुचिः काये क्षुत्तृष्णासम्भवो न च।
त्वया लोकानुवृत्त्यर्थं दर्शिता लौकिकी क्रिया॥'

तदेवमस्यातिविशालस्य स्तोत्रसाहित्यस्य स्थूलः परिचयोऽत्र प्रदत्तः। कतिचन एतादृशान्यपि स्तोत्राणि सन्ति यानि स्तोत्रापेक्षयाऽधिकमात्रायां काव्यान्येव। वयमत्र तान्येव स्तोत्राणि गणयितुमिच्छामो यानि काव्यानि पश्चात् पूर्वं स्तोत्राणि। यानि पुनः पूर्वं काव्यानि पश्चात् स्तोत्राणि तेषामत्र निर्देशो मया न कृतः। एतादृशेष्वेव स्तोत्रेषु अप्पय्यदीक्षितस्य वरदराजस्तवः,

पण्डितराजस्य लक्ष्मीलहर्यादिस्तवः, गोकुलनाथस्य शिवस्तुतिः, शङ्कराचार्यस्य 'न भूमिर्न तोय' मित्यादिका स्तुतिश्च गणनीया। एषु हि स्तोत्रेषु भक्तिं पृष्ठतः कृत्वा शास्त्रज्ञता वा कवित्वशक्तिः पुरतः कृता दृश्यतेऽतो मया एतानि प्रथमं काव्यानि मन्यन्ते ततः स्तोत्राणि। दृश्यताम्—

'त्वद्वक्त्रसाम्यमयमम्बुजकोशमुद्राभङ्गात्ततत्सुषममित्रकरोपक्लृप्त्या ।
लब्ध्वापि पर्वणि विधुः क्रमहीयमानः शंसत्यनीत्युपचितां श्रियमाशुनाशाम् ॥'

अस्मिन् अप्पय्यदीक्षितकृतवरदराजस्तवघटके पद्ये कवित्वं प्रथममादृतं भक्तिश्च पश्चात्कृता। यदि भक्तिः पुरोऽस्यास्यत्तदेदृशक्लिष्टकल्पनाया अवसर एव नाभविष्यत्। एवमेव पण्डितराजजगन्नाथकृतलक्ष्मीलहर्याम्—

'जगन्मिथ्याभूतं मम निगदतां वेदवचसा-
मभिप्रायो नाद्यावधि हृदयमध्याविशदिदम्।
इदानीं विश्वेषां जनकमुदरं ते विमृशतो
विसन्देहं चेतोऽजनि गरुडकेतोः प्रियतमे ॥'

इदं पद्यं भक्तेरुपहासार्थमिव निर्मितं प्रतीयते। एवमेव जगन्नाथस्यान्यान्यपि स्तोत्राणि कवित्वदृष्ट्या बहुमूल्यानि सन्त्यपि भक्तिभावनाविरहितानीवेति स्तोत्रसाहित्यस्य गौरवमवर्धयित्वा स्फुटकाव्यसाहित्यस्यैव गौरवं समेधयितुं क्षमन्त इति नात्र तेषां विषये किमपि विशिष्याभिहितम्।

गोकुलनाथोपाध्यायस्य शिवस्तुतिरपि दोषमिमं स्पृशत्येव—

'विषमनिगमकाननान्तशाखाततिषु निलीय परान्निरीक्षमाणः।
परिणतिविदलज्जगत्कपित्थग्रसनकपे सुचिरान्निरूपितोऽपि ॥'

'जगत्तिलपेषतैलिकोऽसि।'

'ग्रसितुमखिलमेव जन्तुजातं विजनयतो विदिता विडालवृत्तिः।'

इत्यादिकास्तदुक्तयः कामं परम्परितरूपकं द्रढयन्तु, वचोभङ्गीरभिनवा उपस्थापयन्तु, अयोनीनर्थानाख्याय कवये गौरवं वितरन्तु च, परं भक्तिपाकोऽत्र नावलोक्यते। भक्तानामार्त्तिरीदृशीनां कल्पनानां कठिनानि वर्त्मानि नावलम्बते, सा तु सद्यो निजप्रभोरन्तिकमुपसत्तुकामाऽनावृतचरणैवोपतिष्ठते विनैव च भूमिकां स्ववक्तव्यं समुपहरति। यथा—

'सविषैरिव भीमपन्नगैर्विषयैरेभिरलं परिक्षतम्।
अमृतैरिव सम्भ्रमेण मामभिषिञ्चाशु दयावलोकनैः ॥'

तदित्थं स्तोत्रसंज्ञयैव कस्यापि स्तोत्रता वास्तविकतां न प्रतिपद्यत इति विभाव्यं बुधैः।

स्तोत्रसाहित्यप्रसङ्गस्य समाप्तेरवसरे कतिचन शाक्तस्तोत्राणां चर्चा यदि न क्रियते तदा तेषां विषयेऽपराध इव जायते। आगमस्य तन्त्रस्य चात्र देशे पुरा प्रचुरः प्रचार आसीदतो भगवत्याः स्तुतयोऽपि कविभिर्बहवो मनोहराश्च

विरचिताः। तत्र प्रायो बीजोद्धारादि रहस्यं वस्तु विद्यते यत् काव्यकोटौ नायाति, केवलमुपासकास्तैरुपक्रियन्ते। अथापि तानंशान् विहायापि तत्र यद् रामणीयकं तदादरमर्हति। अस्मिन् प्रकरणे—महाकालकृतः कर्पूरस्तवः प्रथममुल्लेखमर्हति। एवमेव त्रिपुरास्तोत्रमपि शङ्कराचार्यस्य। भुवनेश्वरीस्तोत्रस्य कतिचन पद्यानि तु काव्यकोटावपि प्रामुख्यमधिगन्तुमीशते—

'नात्यायतं रुचिरकम्बुविलासचौर्य-
भूषाभरेण विविधेन विराजमानम्।
कण्ठं मनोहरगुणं गिरिराजकन्ये
सञ्चिन्त्य तृप्तिमुपयामि कदापि नाहम्॥"

तदिदं शिवविष्णुदुर्गागङ्गादिस्तोत्रशाखासु विततंस्तोत्रसाहित्यं संस्कृतसाहित्यस्यामूल्यं रत्नमिति।



# दृश्यकाव्यप्रकरणम्

## अवतरणम्

संस्कृतसाहित्यस्य दृश्यकाव्यात्मकमङ्गमपि प्रभूतसमृद्धिशालि। शाकुन्तलं नाम कालिदासीयं नाटकं संस्कृतसाहित्यस्य गौरवं विदेशेषु ख्यापयामास। काव्यापेक्षया नाटकानां प्रतिष्ठाऽधिका भवति, यतोऽर्थज्ञानविधुरोऽपि लोकवर्गः दृश्यभागाभिनयेनात्मानं विनोदयितुं प्रभवति। दृश्यवस्तुदर्शनजन्मानन्दः श्रव्यश्रवणजमानन्दमतिशेत इति प्रत्यक्षमेव सचेतसाम्। नहि नायिकारूपस्तुतिश्रवणं तथा मदयति युवानं यथा तदीक्षणम्। अत एवालङ्कारिकाः 'काव्येषु नाटकं रम्यम्' इत्युद्घोषयन्ति। काव्यगतरसानुभूतेः कृते यादृशस्य कवित्वमयस्य वातावरणस्यावश्यकता भवति, नहि तत्र सर्वे क्षमन्ते, अत एव सहृदया एव काव्यमास्वादयितुं प्रभवन्ति। अभिनये पुनर्वेशभूषाजवनिकादयः स्वयमेव रसानुकूलं वातावरणमुपपादयन्तः साधारणजनेभ्योऽपि रसानुभवावसरं ददति। अत एव तु नाटकान्तं कवित्वं प्रथते।

नाटकानामुद्देश्यमपि नितान्तमहत्त्वपूर्णं भवति। लोके यानिवृत्तानि घटन्ते तेषां चित्रणमेव नाटकं कथ्यते। तत्र विषयोऽप्यसीमतां भजते। लोकत्रितयगतानां घटनानां प्रदर्शनं रूपकमङ्गीकरोति। नाटकानामुद्देश्यमपि विशालमेव। तद्धि विनेयजनेभ्योऽपि सुखपिण्डदानद्वारा हिताभिधानमत्र सुखसाध्यभावेनावस्थितम्। नाटकावेक्षणेन केचनाशक्तयः शक्तिं लभन्ते, केचनोत्साहम्, अपरे धैर्यम्, केचन विवेकम्। अत एव 'नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम्' उक्तम्। किमप्येतादृशं वस्तु नास्ति यन्नाटकाभिनेयतां न यायादत एव नाट्यशास्त्रकारा आहुः—

'न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।
न स योगो न तत् कर्म नाट्येऽस्मिन् यन्न दृश्यते॥'

यद्यपि वेदाः सर्वविधज्ञानखनय आख्यायन्ते परन्ते त्रैवर्णिकमात्रलभ्याः, नाटकं पुनः सार्वजनिकतया ततो विशिष्यते।

## दृश्यकाव्यप्राचीनता

संस्कृतसाहित्ये दृश्यकाव्यानामुदयः प्राचीनकाल एवाजायत। वैदिकयुगे दृश्यकाव्यानामस्तित्वं प्रमाणितम्। ऋग्वेदीयसूक्तैः प्रतीयते यत् तदा दृश्यकाव्यमप्रथत। सोमविक्रयसमये क्रियमाणस्याभिनयस्य वर्णनं तत्काले दृश्यकाव्यस्य सद्भावं गमयति। संहिताब्राह्मणग्रन्थयोः शैलूषशब्दोपलब्धिरपि वैदिकयुगे दृश्यकाव्यस्यास्तित्वं प्रमापयति। महाव्रते वृष्टेः पशुसमृद्धेश्चोपलब्धौ सत्यां वह्नेः समन्ततः कुमारिकाणां नृत्यस्य वर्णनं दृश्यते, तदप्यत्रार्थे प्रमाण-

भावं भजते। ऋग्वेदगताः यमयमीसंवादाः सरमापणिसंवादाश्च तदानीं नाटकस्यास्तित्वं गमयितुं क्षमाः। सामवेदे गानप्रधाने ऋक्षु संवादात्मिकासु च सतीषु नाटकानामस्तित्वं तदातनमपलपितुमशक्यमेव।

रामायणकाले दृश्यकाव्यानामस्तित्वस्य स्फुटप्रमाणमिह उपलभ्यते। रामायणे 'शैलूष'-'नट'-'नर्त्तक'प्रभृतीनां दृश्यकाव्याङ्गानामुल्लेखो विद्यते। 'साँची'स्थाने प्राप्तासु मूर्तिषु कथकानां समूहस्य मूर्तयोऽप्युपलभ्यन्त यासु तच्चेष्टाभिरभिनयः प्रकाश्यते। महाभारताङ्गभूते हरिवंशे रामचरिताभिनयस्योल्लेखो लभ्यते। एभिः प्रमाणैस्तदात्वे दृश्यकाव्यसद्भावः प्रमापितो भवति।

पाणिनिप्रणीतायामष्टाध्याय्याम् 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' (४।३।११०) 'कर्मन्दकृशाश्वादिनिः' (४।३।१११ इति सूत्रद्वयं) दृश्यते। अतः सिद्धमिदं यत्तत्र समये नटानां शिक्षार्थं सूत्राणि विरच्यन्ते स्म। नटानां शिक्षा चाभिनयस्य प्ररूढप्रचारतां गमयति।

भगवतः पतञ्जलेर्महाभाष्यमपि तदीये समयेऽभिनयस्य सद्भावं प्रकटयति। तत्र हि—'ये तावदेते शोभनिका नामैते प्रत्यक्षं कंसं घातयन्ति, प्रत्यक्षं च बलिं बन्धयन्ति' इत्युक्तम्। प्रत्यक्षकंसवधबलिबन्धौ सम्भवतोऽभिनय एवेति सिद्ध्यति तदाभिनयप्रचारः।

द्वितीयशतकनिर्मिते वात्स्यायनीये कामसूत्रे लिखितम्—'पक्षस्य मासस्य वा प्रज्ञातेऽहनि सरस्वत्या भवने नियुक्तानां नित्यं समाजः। कुशीलवाश्चागन्तवः प्रेक्षकमेषां दद्युः'। नागरिकाणां मनोरञ्जनस्य साधनतयाऽभिनयः प्रमीयतेऽनया वात्स्यायनोक्त्या।

तदेवमुपरितनैरुल्लेखैः प्रमाणितं तद्वैदिककालादारभ्य विक्रमसमयं यावत् अभिनयस्यात्र देशे प्रचुरः प्रचारः आसीत्। विक्रमसमयात्परतस्तु जाते कालिदासादीनामुदये नाटकप्रचारोऽत्राविच्छिन्नप्रवाह एवाभूत्।

## नाटकानामुद्भवः

भारतीयनाटकानामुद्भवः कथमभूदिति विषये विचार्यमाणे प्रथमं पाश्चात्यपण्डितानां मतानि द्रष्टव्यानि। तत्र रिजवेमहोदयः वीरपूजामूलकं भारतीयनाटकानामुद्भवं प्राह। तन्मतेन मृतानां वीरपुरुषाणां सत्काराय समवेता लोका यत्तदीयचरितमनुचक्रुस्तन्मूलिकैव भारते नाटकप्रवृत्तिः। रामलीला कृष्णलीला चात्र निदर्शनभावं भजतः।

डा० कीथमहोदयस्तु—'प्राकृतिकपरिवर्त्तनानां मूर्त्तं रूपं साधारणजनसमक्षमवतारयितुमेव नाटकानामुदयो जातः। कंसवधनामके महाभाष्यनिर्दिष्टे नाटके कृष्णपक्षीया रक्तमुखाः कंसपक्षीयाश्च श्याममुखा भवन्ति। तत्र वसन्तस्य हेमन्तोपरि विजय एव दर्शयितुमभिलषितः। कृष्णविजयेन प्रकृतिप्रकोपं प्रति प्रकाश आधीयत' इत्याह।

डाक्टर-पिशेलमहोदयस्तु—पुत्तलिकानृत्यमूलं नाटकानामुदयमाह। नाटकेषु प्रचलिताः सूत्रधारव्यवस्थापकादिशब्दा एतन्मतमुपोद्वलयन्ति। सूत्रधारः सूत्रमादाय पुत्तलिकां नर्त्तयति, व्यवस्थापकश्च तामादाय यथास्थानं रक्षति। इमौ शब्दौ पुत्तलिकानृत्ये व्यवह्रियेते स्म, सम्प्रति नाटकेषु व्यवह्रियेते इति पुत्तलिकानृत्यमूला नाटकप्रवृत्तिः सम्भाव्यते।

कतिपये पाश्चात्त्यविद्वांसो भारतीयनाटकानामुदयं पोलनृत्याधारमाहुः। शीतप्रधाने पाश्चात्यदेशे मईमासोऽतिहृद्यो भवति। तस्मिन् मासे ध्वजाकारं वंशमेकमारोप्य तदधः स्त्रीपुंससमाजो नृत्यति स्म। एतदाधारैव नाटकानामुत्पत्तिः। अमुमाधारमगणयन्तो विद्वांसो विचारमिममक्षोदक्षमं मन्यन्ते।

अपरे भारतीया विद्वांसो नाटकानामुदयं वेदस्थितसूक्तमूलकमाहुः। ऋग्वेदेऽनेकानि कथनोपकथनप्रधानानि यमयमीसूक्त-सरमापणिसंवादसूक्तोर्वशीपुरूरवःसंवादसूक्तप्रभृतीनि सूक्तानि सन्ति, यान्याधारीकृत्य नाटकानि जातानि दृष्टान्तरूपेणोर्वशीपुरूरवःसंवादमूलं कालिदासीयं विक्रमोर्वशीयं नाम त्रोटकमुपस्थापयितुं शक्यते।

जर्मनविद्वान् डाक्टरश्रोदरमहोदयोऽपि विचारमिममनुमोदयति। स हि संवादसूक्तेष्वेषु गानमामनति। तदिदं गायनं नृत्येनाभिनीयते स्म, तदिष्यतेऽस्य संवादसूक्तनिवहस्य धार्मिकनाटकरूपता। एतन्मूलैव च भारतीयनाटकप्रवृत्तिः इत्याह।

डाक्टर-हर्टलमहोदयोऽपि श्रोदरमहोदयस्य विचारमनुमोदयति। अपरे पुनर्विद्वांसो विण्डिश-ओल्डेनवर्ग-पिशेल-मुख्या अभिप्रयन्ति यत् संवादसूक्तानि पुरा गद्यपद्यात्मकान्यासन्। पद्यभागोऽतिरोचकतया सम्प्रत्यवशिष्यते। गद्यभागस्तु केवलवर्णनपरतया लुप्तप्रायतां गतः। नाटके यदधुना गद्यपद्योर्मिश्रणं दृश्यते तदप्येतादृशसंवादसूक्तमूलकमेव। एते विद्वांसः ऐतरेयब्राह्मणगतं शुनःशेपोपाख्यानं शतपथब्राह्मणगतमुर्वशीपुरूरवउपाख्यानं चात्र साक्षिभावेनोपस्थापयन्ति।

नाटकानामुत्पत्तेर्विषये भारतीयं भरतानुसारिमतमधो निर्दिश्यते—

'महेन्द्रप्रमुखैर्देवैरुक्तः किल पितामहः।
क्रीडनीयकमिच्छामो दृश्यं श्रव्यं च यद्भवेत्॥
न वेदव्यवहारोऽयं संश्राव्यः शूद्रजातिषु।
तस्मात्सृजापरं वेदं पञ्चमं सार्ववर्णिकम्॥
एवमस्त्विति तानुक्त्वा देवराजं विसृज्य च।
सस्मार चतुरो वेदान् योगमास्थाय तत्त्ववित्॥
धर्म्यमर्थ्यं यशस्यं च सोपदेशं ससंग्रहम्।
भविष्यतश्च लोकस्य सर्वकर्मानुदर्शकम्॥

सर्वशास्त्रार्थसम्पन्नं सर्वशिल्पप्रदर्शकम् ।
नाट्यसंज्ञमिमं वेदं सेतिहासं करोम्यहम् ॥
एवं सङ्कल्प्य भगवान् सर्ववेदाननुस्मरन् ।
नाट्यवेदं ततश्चक्रे चतुर्वेदाङ्गसम्भवम् ॥
जग्राह पाठ्यमृग्वेदात्सामभ्यो गीतमेव च ।
यजुर्वेदादभिनयान् रसानाथर्वणादपि ॥
वेदोपवेदैः सम्बद्धो नाट्यवेदो महात्मना ।
एवं भगवता सृष्टो ब्रह्मणा ललितात्मकम् ॥
आज्ञापितो विदित्वाहं नाट्यवेदं पितामहात् ।
पुत्रानध्यापयं योग्यान् प्रयोगं चास्य तत्त्वतः ॥
एवं प्रयोगे प्रारब्धे दैत्यदानवनाशने ।
अभवन् क्षुभिताः सर्वे दैत्या ये तत्र सङ्गताः ॥
देवतानामृषीणां च राज्ञामथ कुटुम्बिनाम् ।
कृतानुकरणं लोके नाट्यमित्यभिधीयते ॥'

( भरतस्य नाट्यशास्त्रात् )

शारदातनयो निजे 'भावप्रकाशना'भिधेये ग्रन्थे स्वं विचारमत्र प्रसङ्गे निम्नलिखितरूपमाविष्कृतवान्—

'कल्पस्यान्ते कदाचित्तु दग्ध्वा लोकान् महेश्वरः ।
स्वे महिम्नि स्थितः स्वैरं नृत्यन्नानन्दनिर्भरम् ॥
मनसैवासृजद्विष्णुं ब्रह्माणं च महेश्वरः ।
नियोगाद्देवदेवस्य ब्रह्मा लोकानथासृजत् ।
सृष्ट्वा स देवदेवस्य पुरावृत्तमथास्मरत् ।
दिव्यं चरित्रमैशं मे कथमध्यक्षतामियात् ॥
इति चिन्तापरे तस्मिन्नभ्यगान्नन्दिकेश्वरः ।
स नाट्यवेदमध्या सप्रयोगं चतुर्मुखम् ॥
उवाच वाक्यं भगवान् नन्दी तच्चिन्तितार्थवित् ।
नाट्यवेदोपदिष्टानि रूपकाणि च यानि तु ॥
विधाय तेषामेकं तु रूपकं लक्षणान्वितम् ।
भरतेषु प्रयोज्यं तत्त्वया सम्यग् विजानता ॥
तस्मिन् प्रयुक्ते भरतैर्भावाभिनयकोविदैः ।
प्रावर्तनानि च कर्माणि प्रत्यक्षाणि भवन्ति ते ॥
एवं ब्रुवन्नन्तरधाद् नन्दी स भगवान् प्रभुः ।
श्रुत्वैतद्वचनं प्रीतो ब्रह्मा देवैः समन्वितः ॥

ततस्त्रिपुरदाहाख्यं रूपकं सम्यगभ्यधात् ।
अध्याप्य भरतानेतत् प्रयुङ्ध्वमिति चाब्रवीत् ॥
ततस्त्रिपुरदाहाख्ये कदाचित् ब्रह्मसंसदि ।
प्रयुज्यमाने भरतैर्भावाभिनयकोविदैः ॥
तदेतत् प्रेक्षमाणस्य मुखेभ्यो ब्रह्मणः क्रमात् ।
वृत्तिभिः सह चत्वारः शृङ्गाराद्या विनिर्गताः ॥'

उपरि निर्दिष्टोद्धरणाभ्यामिदमवगम्यते यत् भारतीया विचारका नाट्यं वेदाविर्भूतरूपं मन्यन्ते। अस्याः कलाया जन्म दुःखाकुले त्रेतायुगे जातम्, सुखमये सत्ययुगे कलेयं कलयापि नासीत्। भारतीया नाट्यकला प्रारम्भत एव स्वाभाविकी, पुरुषाणां भूमिकां पुरुषास्तथा स्त्रीणां भूमिकां स्त्रियो धारयन्ति स्म।



# भारतीयनाटकसाहित्योपरि ग्रीकनाटकानां प्रभावस्यालोचना

केचन पाश्चात्या विद्वांसोऽभिप्रयन्ति यत्—भारतीयं नाटकसाहित्यं ग्रीकनाटकैः प्रभावितम्। सिकन्दरनामको राजा नाटकप्रिय आसीत्, तस्य विनोदनाय नाटकानि प्रचुरमभिनीयन्ते स्म। भारते निवसतां ग्रीकदेश्यानामन्यभूपानामपि सभास्वभिनयस्य प्रचुरः प्रचार आसीत्। अस्य प्रभावः संस्कृतनाटकसाहित्यस्योपरि पतितः। भारतीया प्रतिभा ग्रीकनाटकानां प्रभावमात्मसात्कृतवती।

परमेतत्कथनं नितान्तभ्रममूलकम्। यदि भारतीयनाटकसाहित्यं वेदाधारकं मन्यते तदा ग्रीकप्रभावकल्पना किम्मूला? यदि विकासस्तन्मूलोऽभ्युपगम्यते तदा तत्र स्वतन्त्रेऽपि सम्भवति परकीयप्रभावकल्पनं किमर्थम्? ग्रीकनाटकैः समं भारतीयनाटकानां तुलनात्मकमध्ययनमपि भेदमेव प्रमापयति। तदस्यां स्थितौ भारतीयनाटकोपरि ग्रीकनाटकप्रभावस्य कल्पनं किञ्चित्कथनमात्रम्, न त्वंशतोऽपि सारवत्। केचन पण्डितम्मन्याः संस्कृतनाटकेषु 'जवनिका'शब्दप्रयोगं दृष्ट्वा तत्र 'यवनिका'शब्दं शुद्धं मन्यमाना भारतीयनाटकसाहित्यं 'यूनान'-देशीयनाटकसाहित्याधमर्णं मन्यन्ते। परमिदमतितुच्छम्, यवनशब्दसम्बन्धस्य दूरपराहतत्वात्। जवनिका हि द्रुतगामिवस्त्रखण्डघटिताया उपकार्याया नामान्तरम्। उपकार्या भारतीयसाहित्ये यूनानदेशसम्पर्कतः प्रागपि वर्ण्यते स्म। किञ्च यदि यवनसम्बन्धमूलोऽस्य शब्दस्य प्रयोगोऽभविष्यत् तदा चवर्गतृतीयादित्वं कथमघटिष्यत। वस्तुतो राजशेखरेण 'जवनिका'शब्दः प्रयुक्तः। तदीयं प्राकृतं संस्कृते परिणमयन्त इमे 'यवनिका'शब्दं कल्पयन्तो यवनसम्बन्धमुद्भावितवन्तः। तदिदमज्ञानमूलकं कथनमक्षोदक्षममेवेति विरम्यते।

## संस्कृतरङ्गमञ्चः

भारतीयरङ्गमञ्चस्य व्यवस्थापूर्णत्वमपि यूनानप्रभाववर्णनविपरीतम्। भारतीयरङ्गमञ्चस्य व्यवस्थापूर्णतयैवास्य प्रसारो यावा-सुमात्रा-प्रभृतिदेशेष्वपि पर्याप्तरूपेणोपलभ्यते। रङ्गमञ्चस्य पर्यायौ प्रेक्षागृहरङ्गशालाशब्दौ प्रथेते। नाटकानि प्रथमतो मुक्ताकाशेऽभिनीयन्ते स्म। यदवधि तथाकरणे विघ्नाः प्रारभ्यन्त ततो गृहस्य प्रयोजनमदृश्यत।

भरतोक्त्यनुसारेण प्रेक्षागृहस्य त्रयो भेदाः—१. विकृष्टम्, २. चतुरस्रम्, ३. त्र्यस्रञ्च। विकृष्टम् १०८ हस्तपरिमितं सर्वतो विशालं देवमात्रार्थम्। प्रायो गोलाकारम्।

चतुरस्रं ६४ हस्तपरिमितायामं ३२ हस्तमितपरिणाहञ्च। चतुरस्रत्वञ्चास्य स्वनामसिद्धम्। आदर्शभूतमिदं प्रेक्षागृहं राज्ञां कृते प्रसिद्धम्। त्र्यस्रं ३२ हस्त-

मितसकलभुजं लघुनाटकोपयोज्यं त्रिकोणम्। एषु प्रेक्षागृहेषु चतुरस्रं नाम प्रेक्षागृहं सर्वोत्तमम्। एतद्वर्णनावसरे भरतस्य वैज्ञानिकं वैदुष्यं प्रकाशते। आदर्शप्रेक्षागृहनिर्माणकाले दर्शका यथा सर्वमप्यभिनेयं द्रष्टुं गेयं च श्रोतुं प्रभवेयुस्तत्र प्रभूतं ध्यानं रक्ष्यते स्म। तथा च नाट्यशास्त्रम्—

'यश्चाप्यास्यगतो भावो नानादृष्टिसमन्वितः।
स वेश्मनः प्रकृष्टत्वाद् व्रजेदव्यक्ततां पराम्॥
यस्मात्पाठ्यं च गेयं च तत्र श्रव्यतरं भवेत्।
प्रेक्षागृहाणां सर्वेषां तस्मान्मध्यममिष्यते॥' (२।२३-२४)

रङ्गमञ्चस्य सर्वप्रथमो भागो रङ्गशीर्षपदेनाभिधीयते। रङ्गशीर्षस्य विस्तारो ८×४ हस्तमितो विधीयते स्म। तत्राभिनयविघ्नोपशान्तये देवानां पूजनं क्रियते स्म। तदनन्तरं तत्तुल्यपरिमाणं नेपथ्यगृहं निरमीयत।

नाट्यमण्डपस्य द्विभूमता दर्पणवत् समतलता च भारतीयनाट्यशास्त्रप्रसिद्धा। तथा च भरतः—

'कूर्मपृष्ठं न कर्त्तव्यं मत्स्यपृष्ठं तथैव च।
शुद्धादर्शतलाकारं रङ्गशीर्षं प्रशस्यते।
कार्यः शैलगुहाकारो द्विभूमिर्नाट्यमण्डपः।
मन्दवातायनोपेतो निर्वातो धीरशब्दवान्॥'

दर्शकानामुपवेशनस्य व्यवस्थाऽपि हृद्या विधीयते स्म। सम्प्रति यथा निम्नोन्नता आसनपरम्परा 'गैलरी'शब्दव्यवहार्या निर्मीयते तादृश्येवासनपरम्परा प्रागपि निर्मीयते स्म। तथा चोक्तम्—

'स्तम्भानां बाह्यतश्चापि सोपानाकृतिपीठकम्।
इष्टकादारुभिः कार्यं प्रेक्षकाणां निवेशनम्॥
हस्तप्रमाणैरुत्सेधैर्भूमिभागसमुत्थितैः।
रङ्गपीठावलोक्यं तु कुर्यादासनजं विधिम्॥'

तदित्थं प्राचीनो रङ्गमञ्चः सुव्यवस्थितरूपो भारतीयनाट्यकलायाः स्वोपज्ञतां प्रकाशयति। भारतीयो रङ्गमञ्चः स्वीयेन वैज्ञानिकबुद्धप्रभवत्वेन सुव्यवस्थाशालित्वेन च विश्वस्य सर्वमपि रङ्गमञ्चमधःकुरुते स्वाधमर्णतां वा प्रापयतीति कथनं न मृषा।

## नाटककाराः

संस्कृतभाषायां नाटकानां संख्या न तथा लघ्वी नाप्यतिभूयसी, तथापि शताधिका नाटककारा गणयितुं शक्यन्ते। तेषु नाटककारेषु प्रसिद्धकृतीनां कतिपयनाटककाराणां यथोपलब्धं वृत्तमत्र निर्दिश्यते।

संस्कृतनाटककारेषु कः प्रथम इति प्रश्ने यदि भासः कालिदासो वा प्रथमो नाटककार उच्यते तदा सत्यं नापलभ्यते। तत्परतश्च परे नाटककारा अभवन्।

## अश्वघोषः

अश्वघोष एव प्रथमो नाटककार इति कथनं लूडर्सनमहाशयस्य मतं स्वाधारीकरोति। तेन हि तुरफाननगरेऽश्वघोषकृतं नाटकत्रयं प्रकाशं नीतम्। तत्राद्यम्—'शारिपुत्रप्रकरणम्' षड्भिरङ्कैरुपेतम्। अत्र शारिपुत्रस्य मौद्गल्यायनस्य बुद्धोपदेशग्रहणं वर्णितम्। अत्र भरतवाक्यप्रयोगविरहेऽपि नान्दीप्रस्तावनासूत्रधारादिव्यवस्था नाट्यशास्त्रानुकूला। विभिन्नप्राकृतभाषाप्रयोगोऽप्यस्य शास्त्रानुसारो। अश्वघोषस्यान्यन्नाटकद्वयं त्रुटितं विद्यते। तत्रैकं प्रबोधचन्द्रोदयवत् रूपकमेव यत्र बुद्धिधृतिकीर्त्तिप्रभृतीनां कल्पितपात्राणां चित्रणं कृतम्। इतरच्च मृच्छकटिकसमानम्। एषां नाटकानां भाषा संस्कृतप्राया। एतेनापि प्राचीनतमनाटकरूपतयैषां स्वीकरणं प्राप्तकल्पम्।

यद्यपि कतिपये विद्वांसो भासं नामादिनाटककारमाहुः, परमिदं मह्यं न रोचते, तत्र हेतून् भासकृतिनिर्देशावसरे निवेदयिष्यामि।

## कालिदासः

संस्कृतसाहित्ये यावन्तो नाटककाराः प्रथन्ते तेषु कालिदासस्य स्थानं सर्वोच्चमिति निश्चयेन वक्तुं पार्यते। कालिदासस्य तिस्रा नाटककृतयः प्रसिद्धास्तत्रापि शाकुन्तलमप्रतिस्पर्द्धिभावेनावस्थितम्—'काव्येषु नाटकं रम्यं तत्र रम्या शकुन्तला।' पाश्चात्त्या विद्वांसोऽपि शाकुन्तलं मुक्तकण्ठं प्रशंसन्ति।

कालिदासो महाभारतीयां कथामाश्रित्य शाकुन्तलं नाम नाटकं प्रणीतवान्। महाभारतीया शकुन्तलाकथा निम्नलिखितस्वरूपा—मृगयागतो दुष्यन्त आश्रमं प्रविशति, शकुन्तलां प्रत्यक्षयति, द्वयोर्हृदययोः प्रेमाङ्कुर उत्पद्यते, शकुन्तला प्रौढस्त्रीव दुष्यन्तेन सह विवाहं तदैव कर्त्तुं तत्परा भवति यदा दुष्यन्तस्तत्पुत्रं राज्येऽभिषेक्तुमनुमनुते, द्वयोः परिणयपूर्वकः सङ्गमः प्रवर्त्तते, कियत्कालानन्तरं राजा स्वां राजधानीमागच्छति, राज्यकार्यासक्तश्च स शकुन्तलां विस्मरति। प्रसूतपुत्रां शकुन्तलां कण्वो राजान्तिकं प्रेषयति, राजा तयोर्ग्रहणं नानुमन्यते, अत्रैव समये जातायाम् 'तत्रैवायं पुत्रः' इत्याकाशवाण्यां राजा तद्ग्रहणं प्रतिपद्यते। इयमीदृशी कथा नितान्तनिष्प्राणा। यदि राजा कामार्त्तो यत्किञ्चित् प्रतिज्ञाय शकुन्तलामङ्कशायिनीं करोति, परतश्च स्वजनभयात्तदपलपति, जातायां पुनराकाशवाण्यां प्राप्तबल इव तां पुनरादत्ते, तदात्र किं रामणीयकम्?

कालिदासस्तु तामेव कथां क्वचिल्लघूकरोति, यथा—शकुन्तला स्वपुत्रराज्यं न प्रतिज्ञापयति, राजा स्वयं न विस्मरति। कविरत्र दुर्वाससः शापं मध्येकृत्य तस्यास्मृतिं रचयति। जाते च शापापगमे राजा तां स्मृत्वोन्मनीभवति। शकुन्तलायाः शीलस्य रक्षार्थं कालिदासेन प्रियंवदानुसूये नाम सख्यौ कल्पिते, ये राजानं शकुन्तलामनोभावं कथयतः। शकुन्तलाप्रत्याख्यानतत्तपश्चरणपुनर्मिलनानि कालिदासकल्पितानि नाटकं चमत्कारि कुर्वन्ति। चरित्रचित्रणं कालिदासस्य शिल्पम्। महाभारतकथायां या शकुन्तला रूक्षप्राया स्वपुत्रस्य भाविना

राज्याभिषेकेणात्मानं विक्रीतवती; सैव शकुन्तला कालिदासेन केवलप्रणय-मूर्त्तिश्चित्रिता। महाभारतस्य दुष्यन्तः प्रियामपि शकुन्तलां लोकभयाद्विस्मृतां प्रत्याययति, जातायां चाकाशवाण्यां तां स्वीकरोति, परं कालिदासस्य दुष्यन्तः शापवशात्तां विस्मरति, शापापगमे च तदर्थं खिन्नमनास्तपःपूत इव तां पुनराप्नोति, दुष्यन्तस्य प्राथमिकः प्रणयो भावोद्रेकोदितो राजसः शापकृतविस्मरण-वशाच्छोधित इवावसाने सात्त्विकत्वं प्राप्य चरममुत्कर्षं भजत इत्येव कालिदासेन निर्दशितम्।

कालिदासः स्वीये शाकुन्तले सौन्दर्यभावनायां रससिद्धौ च परां सिद्धिं प्राप्तवान्। प्रकृतिक्रोडे व्यतिगतबाल्यायाः शकुन्तलायाः स्वरूपे वर्ण्यमाने—

'अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम्॥'

पद्यमिदं पठन् सहृदयः बाह्यकृतेरन्तःप्रकृत्या सामञ्जस्यं प्रतियन् शकुन्तलां कमनीयलतारूपां प्रत्यक्षीकुरुते। सौन्दर्यभावनायां सौकुमार्यमावेदयितुं कविरयं यत्र तत्र कृतप्रयासः—

'पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम्।'

रससिद्धौ पुनरयमाचार्य एव। यथावसरं भावानां बोधनेन रसः पुष्यत इत्यस्य कवित्वे प्रत्यक्षदृश्यम्। शकुन्तलायाः प्रतिगृहप्रयाणावसरे—

'यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया,
कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम्।'

अत्रोक्तौ कीदृशं हृदयद्रावकं स्वाभाविकं च वर्णनम्।

शकुन्तलायाः प्रस्थानकाले कण्वस्य रोदनं सर्ववेद्यम्, सखीनां बाष्पोदयः सर्वानुमेयः, परमचेतनायाः प्रकृतेः शोकावेगस्तु कालिदासेनैवावेक्षितः—

'उद्गीर्णदर्भकवला मृगी परित्यक्तनर्त्तना मयूरी।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः॥'

यत्र कालिदासीयनाटकेषु पात्राणि जीवनशक्तिसम्पन्नानि, उपमाः स्थानीय-शोभावर्धनायेव विन्यस्ताश्च भवन्ति, तत्रैव हृदयपक्षोऽपि नानादरभाजनतां नीयते।

कालिदासस्य त्रीणि रूपकाणि प्रसिद्धानि—१. अभिज्ञानशाकुन्तलम्, २. मालविकाग्निमित्रम्, ३. विक्रमोर्वशीयञ्च।

### १. अभिज्ञानशाकुन्तलम्

अस्य कथानकमतिप्रथितम्। राजा दुष्यन्तो मृगयार्थं वनं गतो यावत्कण्वा-श्रममादरावलोकयितुमुपैति, तावत्तत्र बालपादपान् सिञ्चन्तीं शकुन्तलामालोक्य तस्यै स्निह्यति, तदीयं जन्म मनसा जिज्ञासते, जाते परिचये गान्धर्वेण विवाहेन तामुपयच्छति, कार्यानुरोधाच्च राजधानीं प्रति परावर्त्तते। राजपरिणीता तद्वियोगखिन्ना च शकुन्तला आश्रमागतस्य दुर्वाससः समुचितमातिथ्यमविधाय

तच्छापभाजनं भवति, कण्वेन यथावसरं पत्युः समीपं प्रेषिताऽपि शकुन्तला शापव्यवहितस्मृतिना पत्या दुष्यन्तेनापरिगृहीता मरीचेराश्रमे सुतमसूत तत्रैव चातिष्ठत्। अथ जातेऽङ्गुलीयकदर्शने सञ्जातशकुन्तलास्मृतिर्देवकार्यानुरोधेन दिवं गत्वा ततः परावृत्तश्च राजा मुनिगौरवादाश्रमं गतो यावच्छकुन्तलां पश्यति तावदेत्र सा सपुत्रा राज्ञा स्वीकृताऽविराममानन्दमाससादेति।

इयमियती कथा कालिदासस्य नाटकरचनाप्रावीण्येन तां मनोहरतामापादिता यया शाकुन्तलस्य मनोहरत्वं परां कोटिमभजत। उत्तमनाटकेऽपेक्षितानां कथोपकथनचरित्रचित्रणप्रकृतिवर्णनरससृष्टीनां प्रागुण्येन नाटकमिदमतिप्रशंसाभाजनमजनि। तत्र जर्मनविदुषा गेटेमहाशयेन कृतस्य शाकुन्तलस्तवस्य संस्कृतरूपं बलदेवोपाध्यायेनोद्धृतं मया ततः प्रत्युद्ध्रियते—

'वासन्तं कुसुमं फलञ्च युगपद्ग्रीष्मस्य सर्वं च यत्
यच्चान्यन्मनसो रसायनमतः सन्तर्पणं मोहनम्।
एकीभूतमभूतपूर्वमथवा स्वर्लोकभूलोकयो-
रैश्वर्यं यदि वाञ्छसि प्रियसखे शाकुन्तलं सेव्यताम्॥'

### २. मालविकाग्निमित्रम्

लघुकायेऽस्मिन्नाटके विदर्भराजदुहितुर्मालविकायाः मालवेन्द्रेण सह प्रणयस्य कथा मनोहरया शैल्योपनिबद्धा। नाट्यकलाप्रदर्शनाय रङ्गमवतीर्णाया मालविकया वर्णने कविना नाट्यशास्त्ररहस्यज्ञानमपि प्रकटीकृतम्। इदं नाटकं कालिदासस्याद्या कृतिरिति ग्रन्थान्तरवदत्र प्रौढिर्नावाप्यते। अत्र रूपके भूम्ना लौकिकी कथोपनिबद्धा।

### ३. विक्रमोर्वशीयम्

कुबेरमाराध्य प्रतिनिवृत्तोर्वशी मध्येमार्गं केशिनाम्ना राक्षसेन बलादाह्रियमाणा श्रुतरमणीरुदितोपस्थितेन राज्ञा पुरूरवसा राक्षसत्रासान्मोचयित्वा स्वरथेऽत्रस्थाप्याप्सरोनिकेतं नीयमाना जातप्रबोधमात्रैव तस्मिन्नासक्तिमभजतेति कथाबीजम्।

अत्र नाटके प्रायशो दिव्यानि पात्राणि, उर्वशी स्ववेश्या तत्सहचर्योऽप्सरसः, पुरूरवा अपि दिव्यादिव्य इति भूयसा दिव्यपात्राण्यत्रावतारितानि।

तदेवं त्रिष्वपि रूपकेषु कालिदासेन स्वीयपाण्डित्यप्रकर्षो दर्शितः। ग्रन्थानां प्रातिस्विकं विशदञ्चालोचनं ग्रन्थगौरवभयान्मुच्यते।

## विशाखदत्तः

विशाखदत्तस्यैकमेव 'मुद्राराक्षसं' नाम नाटकमस्य स्थानं नाटककारेषु प्रधानं प्रमापयति। स्वग्रन्थप्रस्तावनायां दत्तेन परिचयेन कवेरस्य राजवंशोद्भवत्वं प्रकाश्यते, अत एव चास्य राजनीतिनिपुणत्वं स्वाभाविकम्। विशाखदत्तो राजनीतौ निपुणो दर्शने ज्योतिषे च कृताधिकारः प्रतीयते।

मुद्राराक्षसस्य रचनाकालसम्बन्धे मतत्रयं विद्यते। भरतवाक्ये पाठभेदेन 'दन्तिवर्मा,' 'अवन्तिवर्मा,' 'चन्द्रगुप्तः' इति पाठैस्त्रीण्यपि मतानि पुष्यन्ति।

दन्तिवर्मा दक्षिणदेशे पल्लवनरेशो हि ७२०तमे ख्रीष्टाब्दे भुवं शशास (अस्मिन् समये म्लेच्छोपद्रवो नासीदिति भरतवाक्यमत्र नान्वेति) द्वितीय-चन्द्रगुप्तः ३७५–४१३ ख्रीष्टाब्दकाले आसीदिति तत्रैव काले विशाखदत्तस्य समयः इति जायसवालः (इदमपि मतं न तथ्यं, यतः चन्द्रगुप्तकालात् ५० वर्षतः परतो हूणानामाक्रमणमजायतातो न भरतवाक्यसङ्गतिः)। 'अवन्तिवर्मा' एकः काश्मीरकः, अपरश्च कान्यकुब्जशासिता मौखरिवंश्यः। अस्यैव पुत्रो ग्रहवर्मा महाराजहर्षवर्धनस्य भगिनीं राज्यश्रियं नाम परिणीतवान्। अस्यैव समये विशाखदत्तो मुद्राराक्षसं विरचितवानिति मतमेव इतिहाससमर्थितं यतोऽत्रैव काले हूणानामुपद्रवः पश्चिमोत्तरभारतेऽजायत। इयं घटना ५८२ ख्रीष्टाब्दसमीपे जाता, अतो मुद्राराक्षसस्य प्रणयनकालः षष्ठशताब्दी सिद्ध्यति।

## मुद्राराक्षसस्य विशिष्टता

असत्यामपि शृङ्गारकथायामसत्यपि च प्रणयव्यापारकलापे नाटकमिद-मलौकिकेन सरसत्वेनामूलमाचूलं चाप्यायितं वर्त्तते। ओजोगुण एवात्र तथा समृद्धो यथा सामाजिकमनोरञ्जनाय वस्त्वन्तरं नापेक्षते। स्त्रीपात्रस्याभावे विदूषकस्य चाभावे सत्यपि यदिदं नाटकमेतावत्सरसं जातं तदस्य रचयितुः काव्यकलाप्रवीणतायाः परमं प्रमाणम्।

यद्यपि वेणीसंहारनामकं नाटकमपि भूयसा प्रोक्तगुणशालि, परं तत्र युद्धस्य वातावरणं दर्शकानां मनसि किमपि विचित्रं भीतिमिश्रं वैरस्यं सृजति। अस्मिंस्तु 'विनैव युद्धादार्येण जितं दुर्जयं परबलमि'ति परा तृप्तिः।

यथाऽऽधुनिकेषून्यासेषु गहनः कथातन्तुर्वाचकानाकर्षति, मध्ये विरन्तु-मवसरं न ददाति, तथैवात्र पाठकानां जिज्ञासा कदापि मध्ये न विश्रान्ति-मासादयति। कुतूहलवर्धकमाख्यानं नाटचस्य जीवितं तदत्र पर्याप्तभावेनाव-स्थितमिति चमत्कारि नाटकमिदम्। सुघटितकथावस्तुयोजनायां व्यक्तित्व-पूर्णपात्रचरित्रचित्रणे, ओजस्विवातावरणोपन्यासे च नाटकमिदमद्वितीयमिति सर्वसम्मतम्।

## मुद्राराक्षसे नायकः

अस्य नाटकस्य नायकश्चन्द्रगुप्तश्चाणक्यो वेति विचारविषयः। केचित् प्रधानफलाश्रयतया चन्द्रगुप्तं नायकं मन्यन्तेऽपरे कथातन्तुसञ्चालनप्रधानया चाणक्यमेव नायकं स्वीकुर्वन्ति। वस्तुतत्त्वे चिन्त्यमाने चाणक्य एव नायकः सिद्ध्यति। मुद्रया निगृहीतो राक्षसो यत्र तन्मुद्राराक्षसमिति व्युत्पत्तौ मुद्रा-प्रवर्त्तकस्य नायकत्वं सिद्धिप्रायम्। सत्यव्रतसिंहद्विजेन्द्रनाथावपि मतमिदं समर्थयतः।

## विशाखदत्तस्य देवीचन्द्रगुप्तं नाम नाटकान्तरम्

विशाखदत्तकृतं देवीचन्द्रगुप्तनामकं नाटकान्तरमपि प्राप्यते। रामचन्द्रगुणचन्द्रकृते नाटकदर्पणे नाम ग्रन्थेऽस्य विस्तृतमुद्धरणं प्राप्यते। भोजस्य सरस्वतीकण्ठाभरणे अभिनवगुप्तस्य अभिनवभारत्यां चास्योल्लेखो दृश्यते। अत्र नाटके शकराजस्य कारागारात् रामगुप्तस्य महिष्या ध्रुवदेव्याः चन्द्रगुप्तकृत उद्धारो वर्णितः। एतन्नाटकेतिवृत्तमादायैव जयशङ्करप्रसादेन हिन्दीभाषायां 'ध्रुवस्वामिनी' नाम नाटकं प्रणीतम्।

## मुद्राराक्षसे काव्यगुणाः

मुद्राराक्षसस्य शैली विलक्षणतमा, अलङ्काराणां प्रयोगोऽपि हृद्यतमः। आदावेव—

'आस्वादितद्विरदशोणितशोणशोभां सन्ध्यारुणामिव कलां शशलाञ्छनस्य।
जृम्भाविदारितमुखस्य मुखात्स्फुरन्तीं को हर्त्तुमिच्छति हरेः परिभूय दंष्ट्राम्।'

इति पद्यमोजोगुणगुम्फिततया नितान्तमनोरमम्। अत्रत्यं शरदृतोर्वर्णनमतिरमणीयम्—

'आकाशं काशपुष्पच्छविमभिभवता भस्मना शुक्लयन्ती
शीतांशोरंशुजालैर्जलधरमलिनां क्लिन्दती कृत्तिमैभीम्।
कापालीमुद्वहन्ती स्रजमिव धवलां कौमुदीमित्यपूर्वा
हासश्रीराजहंसा हरतु तनुरिव क्लेशमैशी शरद्वः॥'

## भवभूतिः

संस्कृतभाषायां नाटकानां प्रणेतृषु प्रधानान्यतमस्य भवभूतेर्वास्तविकं नाम श्रीकण्ठ इत्यासीत्। 'गिरिजायाः स्तनौ वन्दे भवभूतिसिताननौ' इति पद्यप्रणयनमूलकमस्य भवभूतिनाम्ना प्रथमं श्रूयते। विदर्भदेशवासी श्रोत्रियविप्रवंश्यश्चायं विविधागमशास्त्रपारदृश्वाऽऽसीत्।

हर्षचरिते बाणभट्टः भवभूतेर्नाम कीर्त्तयति, अष्टमशतकोत्पन्नो वामनश्च तदीयग्रन्थतः स्वग्रन्थे उदाहरणं ददाति। राजशेखरोऽपि भवभूतिं स्वपूर्वभवं प्रख्यापयति--

'स्थितः पुनर्यो भवभूतिरेखया स राजते सम्प्रति राजशेखरः।' इति।

राजतरङ्गिण्याम्—

'कविर्वाक्पतिराजश्रीभवभूत्यादिसेवितः।
जितो ययौ यशोवर्मा तद्गुणस्तुतिवन्दिताम्॥'

इति निदिशन् कल्हणो भवभूतेर्यशोवर्मकालिकतां प्रत्येति, यशोवर्मा च ७३६ मिते ख्रीष्टाब्दे ध्रियते स्म। एभिः साक्ष्यैर्भवभूतेः समयः सप्तमशतकासन्नः प्रतिपन्नः।

अस्य कृतित्रयमधुना प्राप्यते—१. महावीरचरितम्, २. उत्तररामचरितम्, ३. मालतीमाधवञ्च। कृतित्रयमपि रूपकप्रकारान्तर्गतमेव। तत्र प्र...

कृतिः महावीरचरितमित्यालोचका निश्चपयन्ति । यदा महावीरचरितस्य कट्वी आलोचना तत्कालभवैरालोचकैः प्रस्तुता तदाऽयं महाकविस्तान् धर्षयन्निवा-वोचत—

'ये नाम केचिदिह नः प्रथमन्त्यवज्ञां जानन्तु ते किमपि तान्प्रति नैष यत्नः ।
उत्पत्स्यतेऽस्ति तु मम कोऽपि समानधर्मा कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥'

इति ।

'यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः ।' इति च ।

अस्य महाकवेः स्वकवित्वे महानादर आसीत् । अयं हि स्वं वाग्देवताया अधिष्ठातारं मन्यते स्म, तदुक्तं तेनैव–'यं ब्रह्माणमियं देवी वाग्वश्येवाऽन्ववर्त्तत ।'

करुणरसप्रधानकाव्यनिर्माणे कवेरस्य प्रसिद्धिः । तथा चोक्तम्—

'भवभूतेः सम्बन्धाद् भूधरभूरेव भारती भाति ।
एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रावा ॥'

१. महावीरचरितम्

महावीरचरितन्नाम नाटकं रामायणीयां रावणवधान्तां कथामाश्रित्य विरचितम् । कथ्यते—भवभूतिना कवित्वाभ्यासकाले नाटकमिदं रचितम् । अत्र रामायणकथायां नाटकोपयुक्तं परिवर्त्तनं कृतम् । मालतीमाधवगतं कल्पनासौष्ठवं तथोत्तररामचरितगतो रसपरिपाकश्चात्र यद्यपि नास्ति, तथाप्यत्रत्यं कथानकैक्यं नितान्तरमणीयम् । अत्र राजनीतेर्विवेचनाऽकारणविस्तृता कियतांशेनोद्वेगमिव जनयति । पात्राणां दीर्घदीर्घैर्भाषणैः कथावस्त्वन्तरितमिव प्रतीयते । चरित्रचित्रणदृष्ट्या रूपकमिदं न तथा प्रशंसनीयं यथेदमीयं रूपकान्तरम् ।

२. उत्तररामचरितम्

'उत्तरे रामचरिते भवभूतिर्विशिष्यते' इति स्तूयमानसौष्ठवमुत्तररामचरितन्नाम भवभूतेर्द्वितीयं रूपकं तस्य प्रौढा कृतिः । कवित्वे प्रौढिमासाद्यैव तेनैतद्रूपकं रचितमिति स्वयमेव तत्रोक्तं तेन—

'शब्दब्रह्मविदः कवेः परिणतप्रज्ञस्य वाणीमिमाम् ।'

'उत्तररामचरित' नामकरणेन प्रतीयते यद् रामायणोत्तरकाण्डगता रामकथाऽत्र ग्रथिता, परन्तु नाटकोपयुक्तं परिवर्त्तनं कृतम् । तत्र मुख्यानि परिवर्त्तनानि यथा—१. प्रथमतश्चित्रदर्शनम्, २. अदृश्यया सीतादेव्या वासन्तीरामचन्द्रयोः कथालापश्रवणम्, ३. वासन्तीसमक्षं रामेण स्वहृदयानुरागस्य सीतामात्रविषयकत्वप्रकटनम्, ४. लवचन्द्रकेतुयुद्धम्, ५. वसिष्ठादेः प्राचेतसाश्रमगमनम्, ६. रामसमक्षं तदीयचरितस्यैवाभिनयनञ्चेति ।

य एव शोकः सीताया वियोगे रघुवंशनायकं रामचन्द्रं व्यथयामास स एव शोकोऽत्रोत्तरचरितेऽपि रामं व्यथयति, परन्तु यद्यपि रघुवंशस्य 'वैदेहिबन्धोर्हृदयं धरद्रे' तथापि धीर इवासौ भ्रातॄन् समाहूय सीतापरित्यागप्रकारं विधिवदादिश्य चान्तरेव व्यथां नियमयति । मन्ये कालिदासः शोकं व्यञ्जनया प्रकाश-

यति, भवभूतिस्तु रामं तथा रोदयति यथा तद्रुदितेन पाषाणहृदया अपि रुदन्ति। रघुवंशस्य रामः प्रथमं राजा तदनन्तरं मनुष्य इति स राजोचितमाचारं पालयति, भवभूतेस्तु रामः प्रथमं मनुष्यस्ततो राजेति स मानवीयामधीरतां शोकाश्रुप्रवाहरूपेणाविष्कुरुते।

कालिदासस्य रामः सत्यपि दृढे सीतानुरागे लोकाचारं पालयति, परं लोकाचारपालनप्रवृत्तः पूर्वं दोलाचलचित्तवृत्तित्वं प्रतिपद्यते—

'किमात्मनिर्वादकथामुपेक्षे सीतामदोषामुत सन्त्यजामि।
इत्येकपक्षाश्रयविक्लवत्वादासीत् स दोलाचलचित्तवृत्तिः॥'

भवभूतेस्तु रामः किमप्यविचार्यैव कर्त्तव्यमवधारयति, बाढं तेन स्वाचरणेनाजीवनं पुटपाकप्रतीकाशं सन्तापमनुभवति—

'स्नेहं दयां च सौख्यं च यदि वा जानकीमपि।
आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा॥'

रामस्य कर्त्तव्यज्ञानमक्षुण्णमेव सत्यपि कष्टाधिक्ये।

भवभूतिः वाल्मीकिकालिदासयोः कवित्वं मनसा परिशील्यैव स्वकवितालतां सिक्तवानित्यत्र नास्ति संशयः, परन्तु कुत्रापि तादृशं साम्यं नासाद्यते, येन भावापहारकृतं लाघवं दृष्टौ पतेत्। यत्र कालिदासः प्रकृतेर्ललितं कोमलं च पक्षं स्वकविताया विषयतां नयति तत्र भवभूतिः प्रकृतेर्विकटमुग्रं चांशं स्वकविताया विषयतां प्रापयति। कालिदासः—

'कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी,
पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः।'

इति वर्णयति तत्र भवभूतिः—

'निष्कूजस्तिमिताः क्वचित्क्वचिदपि प्रोच्चण्डसत्त्वस्वनाः
स्वेच्छासुप्तगभीरभोगभुजगश्वासप्रदीप्ताग्नयः।
सीमानः प्रदरोदरेषु विलसत्स्वल्पाम्भसो यास्वयं
तृष्यद्भिः प्रतिसूर्यकैरजगरस्वेदद्रवः पीयते॥' इति।

अनयोः पद्ययोः पर्यालोचनेन रुचिवैसादृश्यं स्पष्टं प्रतिभासते।

कस्य कवित्वं कीदृशमिति विचारो दृष्टिकोणभेदमाधारीकरोति। केचन वर्णनपक्षं प्रशंसन्ति, परे हृदयपक्षम्। वर्णनपक्षे प्रौढिरभ्यासपाण्डित्याभ्यामासाद्यते, हृदयपक्षे प्रौढिस्त्वन्तस्तत्त्वपरीक्षणे निपुणैः सूक्ष्मतमानुभवैरवाप्यते। माघस्य काव्ये वर्णनस्य प्राचुर्ये सत्यपि हृदयपक्षो रिक्त इव। भवभूतेः कवित्वमुभयसामञ्जस्येन पूर्णम्। असौ यद्येकतः—

'गुञ्जत्कुञ्जकुटीरकौशिकघटाघूत्कारवत्कीचक-
क्रन्दत्फेरवचण्डधात्कृतिभृतप्राग्भारभीमैस्तटैः॥'

अथवा

'लोकालोकालवालस्खलनपरिपतत्सप्तमाम्भोधिपूरं
विश्लिष्यत्पर्वकल्पत्रिभुवनमखिलोत्खातपातालमूलम्।

पर्यस्तादित्यचन्द्रस्तवकमवपतद्भूरिताराप्रसूनं
ब्रह्मस्तम्बं धुनीयामिह तु मम विश्वावस्ति तीव्रो विषादः ॥'

ईदृशं कम्पोत्पादकं वर्णनं कर्तुं क्षमते, तद्वद्परतः—

'अनिर्भिन्नो गभीरत्वादन्तर्गूढघनव्यथः ।
पुटपाकप्रतीकाशो रामस्य करुणो रसः ॥'

अथवा

'व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥'

ईदृशान्यनुभवैकलभ्यानि हृदयमर्मस्पृंशि वर्णनानि कर्त्तुमपि क्षमते ।

गुणगौरवेण भवभूतेरन्यद्रूपकद्वयमतिक्रम्य वर्त्तते तदीयमुत्तररामचरितमित्युक्तमपि केनचित्–'उत्तरे रामचरिते भवभूतिर्विशिष्यते' । अत्र नाटके पात्राणां चरित्राणि नितान्तोज्ज्वलानि चित्रितानि । यद्यपि कतिपये समालोचका अत्रापि क्रियावेगस्याभावं कथयन्ति परन्तु तन्नात्र तथा प्रकटम् । अन्तिमाङ्के भवभूतिना यो नाटकान्तरसमावेशः कृतस्स तु कालिदासकृतीनामपि मुखं मलिनयति ।

### ३. मालतीमाधवम्

इदं दशभिरङ्कैर्विरचितमेकं विशालं प्रकरणम् । कविकल्पनाप्रसूतो मालतीमाधवयोः प्रेमाऽतिसुन्दरप्रकारेणात्रावतार्य वर्णितः । यौवने उन्मत्तस्य प्रेम्णोऽत्र प्रगाढं निदर्शनम् । माधवेन मालतीवियोगे क्रियमाणा विलापाः विक्रमोर्वशीयं नाम कालिदासीयं रूपकं स्मारयन्ति । नवमेऽङ्के प्रियतमां प्रति सन्देशं प्रेषयितुं माधवेनानुरुध्यमानो मेघो मेघदूतकाव्यस्मरणाय वाचकान् बलवत् प्रेरयति ।

"ओजःसमासभूयस्त्वमेतद्-गद्यस्य जीवितम्' इति ब्रुवाणो रीतिकारो भवभूतिनाऽत्र प्रकरणे दीर्घसमासां गद्यावलिं प्रयुज्य बहु सम्भावितः । अत्र हास्यरसस्य सर्वथाऽभावो यद्यपि वैरस्यावहस्तथापि घोरभीषणातिमानुषवस्तुजातवर्णनाकर्णनाक्षिप्तहृदयो वाचकस्तन्न चेतयते ।

### ४. भवभूतेः काव्यशैली

भवभूतिरतिभावुकः कविः । यदि भवभूतेः कृतिषु कालिदाकृतिसुलभं सौन्दर्यं माधुर्यं च दुरापं तर्हि परिमितैः पदैर्वस्तुस्वरूपस्य वर्णने भवभूतिः कालिदासमप्यतिशेते ।

जगति भीषणस्य विशालस्यात एवालौकिकस्य च वस्तुनो वर्णनेऽस्य महानभिनिवेशः । एतत्कृतानि उत्तुङ्गपर्वतानां निबिडाटवीनां च वर्णनानि नितान्तहृद्यानि ।

मनोगतस्य भावस्य वाचि यथावद्विनिवेशनमस्य वैशिष्ट्यम् ।

मनोभावानां कायिकप्रतिफलनस्य चित्रणे त्वयमद्वितीय एव । यथा—

'अलसवलितमुग्धस्निग्धनिस्पन्दमन्दैः' एतेन पात्राणां स्वाभाविकचित्रणाय बहु प्रयतितं साफल्यं चाधिगतम् ।

'कञ्चुकी—रामभद्र (इत्यर्धोक्ते) महाराज····। रामः—ननु रामचन्द्र इत्येवोपचारो मां प्रति शोभते तातपरिजनस्य ।' इत्यादिकमत्रोदाहर्तुं शक्यते ।

भवभूतिः सरलानां सरसानां च हृदयमर्मोद्घाटकानां पद्यानां निर्माणे सफल इतीह दिङ्मात्रमुदाह्रियते—

'किमपि किमपि मन्दं मन्दमासत्तियोगा-
दविरलितकपोलं जल्पतोरक्रमेण ।
अशिथिलपरिरम्भव्यापृतैकैकदोष्णो—
रविदितगतयामा रात्रिरेव व्यरंसीत् ॥'

सत्स्वपि सर्वविधेषु वृत्तेषु सफलेषु कविरयं शिखरिण्यां पर्याप्तां सफलतामापदिति विचार्येव केनचिदुक्तम्—

'भवभूतेः शिखरिणी निरर्गलतरङ्गिणी ।'

## हर्षनृपतिः

### समयो जीवनवृत्तं च

महाराजहर्षवर्द्धनः प्रभाकरवर्द्धनाद् यशोमत्यामजनि । अस्य भ्राता राज्यवर्धनः कनिष्ठा भगिनी च राज्यश्रीः आस्ताम् । पञ्चनदप्रदेशे बहूपद्रवतो हूणान् पराजेतुं प्रेषिते भ्रातरि तमनुगच्छन्नयं मध्येमार्गं पितुरस्वास्थ्यं श्रुत्वा राजधानीं परावृत्तः सन् पितुर्मरणे जाते तदौर्ध्वदेहिकं कृत्वा यावद् भ्रातुरागमनं राज्यं शशास, आगते च तस्मिंस्तद्राज्यं भरतो रामायेव तस्मै प्रतिपादयामास । दुर्दैववशाद्राज्यवर्धनः शशाङ्कनामकेन वङ्गीयनृपतिना छलेन निहतः । तदनन्तरं हर्षवर्धनो राजा बभूव । अस्य राजधानी स्थाण्वीश्वरनामकं स्थानमासीत् । अस्य राज्यकालः ६०६–६४७ ख्रीष्टाब्दमासीदिति प्रनीतम् ।

अस्यैव राजत्वकाले प्रसिद्धचीनयात्री 'ह्वेनसांगो' नाम भारतमाजगाम, योऽनेन सत्कृतः । तस्यैव संसर्गेण हर्षो बौद्धधर्मस्यादरकरः संवृत्तः । सर्वमपीदं वृत्तं बाणकृतहर्षचरित-ह्वेनसांगयात्राविवरणाभ्यां ज्ञायते ।

हर्षवर्द्धनस्य रूपकत्रयं प्रथते—१. रत्नावली, २. प्रियदर्शिका, ३. नागानन्दञ्च । आदिमे द्वे नाटिके, चरमञ्च नाटकलक्षणयोगि ।

केचन ग्रन्थानामेषां कर्त्तारं धावकं नाम कविं मन्यन्ते । तेषामयमाशयः—धावको नाम कविरर्थक्रीतः सन् हर्षनाम्ना रूपकत्रयं निरमात्, वस्तुतो हर्षो नासीत् कविः । तेषामस्यां धारणायां मम्मटभट्टस्य 'श्रीहर्षादेर्धावकादीनामिव धनम्' एतादृशः काव्यप्रकाशगतो लेख एव मूलम् । क्वचित्पुस्तके धावकस्य स्थाने बाणस्योल्लेखः, तत्पाठानुसारिभिर्बाणस्यैव तद्रूपकत्रितयकर्तृत्वं मन्यते । परं सर्वमपीदं भ्रान्तिमूलकम्, बाणभट्टेन 'राज्ञां सम्भाषणेषु परित्यक्तमपि. मधु

चर्षन्तम्, काव्यकथास्वपीतामृतमुद्वमन्तम्,' 'अस्य कवित्वस्य वाचो न पर्याप्तो विषयः' इत्थं प्रशस्यमानवैदुष्यकवित्वस्य तस्य राज्ञः स्वयमेव तद्ग्रन्थप्रणयन-शक्तत्वात्। धावकाय बाणाय वाऽसौ बहुधनं दत्तवानिति कथनेन तदीयं विद्वत्प्रियत्वमात्रं सिद्ध्यति न परकीयकृतिकर्तृत्वम्।

यच्च केचिद्राजकार्यासक्तस्य तस्य ग्रन्थप्रणयनक्षमसमयालाभं हेतुमुपस्थापयन्तस्तद्रचितग्रन्थानपलपन्ति, ते तु दयनीयाः। यदि वर्त्तमानयुगस्य प्रधान-मन्त्रिणो ग्रन्थान् लिखितुं समयं लभन्ते, तदा तस्य युगस्य राजा समयं न लभेतेति कथनस्यामूलकत्वात्। तस्मात् ते ग्रन्थास्तत्कृता एव। किञ्च यदि ते ग्रन्था धावकरचिता अभविष्यंस्तदा तदतिरिक्ता काचन धावककृतिरवश्यं प्रथिताऽभविष्यत्। बाणेन यदि ते ग्रन्था रचिता अभविष्यंस्तदा बाणस्य शैली तेषु ग्रन्थेषु प्राप्स्यत। अतः सिद्धमिदं यत्ते त्रयोऽपि ग्रन्था हर्षनृपतिप्रणीता एव।

इतिहासे बहवो हर्षनामानो नृपतयः श्रुतास्तत्कतमोऽयं रूपकत्रितयप्रणेता हर्ष इति सम्भवति प्रश्नः। तत्र १११३-११२५ ख्रीष्टाब्दवर्त्ती कश्मीरराजः हर्षोऽमीषां रूपकाणां प्रणेतेति कथनं न सम्यक्, यतः अष्टमशतकान्तभागे वर्त्तमानेन नृपतियपीडमन्त्रिणा दामोदरेण स्वीये कुट्टिनीमते रत्नावलीश्लोक उद्धृतोऽतो रत्नावलीकर्त्तुरष्टमशतकपूर्ववर्त्तित्वं निश्चितम्। इतिसङ्क्लेख-साक्ष्येण च शीलादित्यापरनामकस्य हर्षस्यैव तत्कर्तृत्वं सिद्ध्यतीति वृथा कल्पनान्तरम्।

## त्रयाणामपि रूपकाणामेककर्तृकत्वम्

त्रिष्वपि रूपकेषु प्रस्तावनायां हर्षस्य नाम स्मर्यते, एतेनैषामेककर्तृकत्वं सिद्धम्। पद्यमेकं रत्नावलीप्रियदर्शिकयोः समानम्, पद्यद्वयं च प्रियदर्शिका-नागानन्दयोः समानमिति समाना शैली, कथावस्तुसादृश्यं चेति सर्वं मिलित्वा त्रयाणामपि रूपकाणामेककर्तृकत्वं व्यवस्थापयति।

## कथावस्तु

रत्नावल्याः कथावस्तु उदयनसागरिकयोः प्रणयमाधारीकरोति पोतभङ्गेन दुरवस्थतां गमिता रत्नावलीनाम्ना स्वमप्रख्याप्य सागरिकानाम्ना उदयनराज-भवने प्रविश्य तन्महिष्या वासवदत्ताया दासी बभूव। उदयनसागरिकयोरनुरागे विदिते पतिसुखकामनया स्वसुखं विहाय वासवदत्ता तयोर्विवाहमनुमेने।

अस्याः कथाया आधार इतिहासो जनश्रुतिर्वेति न ज्ञायते। इयं कथा कालिदासकृतस्य मालविकाग्निमित्रस्य कथामनुहरति।

प्रियदर्शिकायामुदयनारण्यिकयोः प्रणयकथा वर्णिता विद्यते। अङ्गराजस्य दृढवर्मणः सुता प्रियदर्शिका उदयनस्य वाग्दत्ता वधूरासीत्। तयोर्विवाहात् प्रागेव दृढवर्मा कलिङ्गराजेन वन्दीकृत इति प्रियदर्शिका आरण्यिकेति कल्पित-नाम्नोदयनराजभवनं समागत्य नानाघटनापरिवर्त्तनानन्तरं जाते परिचये राज्ञा परिणीता। कथानकमिदं रत्नावलीकथानकच्छायानुहार्येव।

नागानन्दे जीमूतवाहनस्य यशो गीतम्। पञ्चाङ्कोपनिबद्धेऽत्र नाटके प्रथमेऽङ्के जीमूतकेतावाश्रमं गते जीमूतवाहनोऽपि पितृप्रदत्तं राज्यं विहाय तत्रैव तत्सेवायां गच्छति, तत्रैव गौरीमन्दिरे वीणावादनपरायां मलयवत्याम-नुरज्यते च। द्वितीयेऽङ्के जीमूतवाहनमलयवत्योर्विवाहः प्रस्तूयते। तृतीयेऽङ्केऽपि तदनुबन्ध एव। चतुर्थेऽङ्के समुद्रतीरं गतो जीमूतवाहनः शैलशिखरं गच्छति, तत्र गत्वा जानाति यत् गरुडः प्रतिदिनमेकं नागमत्ति, अद्य शङ्खचूडस्य पर्यायः, निषेधत्यपि शङ्खचूडे दयापरवशोऽसौ तस्य स्थाने स्वं गरुडभोज्यमुप-कल्पयति, तदीयेन त्यागेन पुष्पवृष्टिर्जायते, गौरीप्रसादात् सर्वे जीवनं प्रतिपद्यन्ते येन रुदत्याः प्रियायाः विलपतोर्जननीजनकयोश्च नयनानि जीमूतवाहनः स्वदर्शनेन शिशिरयति।

नाटकेऽस्मिन् बौद्धहिन्दुधर्मयोरतिमधुरा संसृष्टिरस्ति।

## रत्नावल्याः प्रसिद्धिः

रत्नावली स्त्रीयेन गुणगणेन प्राचीनकालादेव प्रसिद्धा। शास्त्रीयपद्धति-माश्रित्य प्रणीतमिदं रूपकमिति हेतुना दशरूपकेऽतीवादरोऽस्या जातः। साहित्यदर्पणेऽपि सन्धितदङ्गानां निरूपणस्य प्रसङ्गे रत्नावली प्रचुरमाहृता। श्रीहर्षः आदर्शभूतं कथानकमाश्रित्य भव्यं रूपकमिदं कृतवान् यदुदाहरन्ति यथाप्रसङ्गं रीतिकृतः।

## श्रीहर्षस्य काव्यशैली

श्रीहर्षस्य काव्यशैली सरला सुबोधा वैदर्भीपरिष्कृता। वर्णनस्य स्वाभा-विकता विशदता च हृदयमाकर्षतः। यद्यप्यस्य कृतौ सूक्ष्मेक्षिकाया उत्प्रेक्षा-याश्च वैरल्यमेव, तथापि प्रसादगुणो नितान्तहृदयावर्जकः।

रोमाञ्चकदृश्यकाव्यस्य यावन्ति कमनीयान्युपकरणानि सम्भवन्ति तेषां सर्वेषां प्रयोगेऽयं सदा जागरूकः। वर्णनचातुरी चास्य सर्वमनोहरा। दृश्यताम्—

'यातोऽस्मि पद्मवदने समयो ममैष सुप्ता मयैव भवती प्रतिबोधनीया।
प्रत्यायनामयमितीव सरोरुहिण्याः सूर्योऽस्तमस्तकनिविष्टकरः करोति॥'

'किं पद्मस्य रुचिं न हन्ति नयनानन्दं विधत्ते न किं
वृद्धिं वा झषकेतनस्य तनुते नालोकमात्रेण किम्।
वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरुज्जृम्भते
दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे॥'

निम्ननिर्दिष्टं चन्द्रोदयवर्णनं कवेः सूक्ष्मनिरीक्षणं व्यञ्जयति —

'उदयतटान्तरितमियं प्राची सूचयति दिङ् निशानाथम्।
परिपाण्डुना मुखेन प्रियमिव हृदयस्थितं रमणी॥'

श्रीहर्षनृपतिरयं रूपकरचनायां कालिदासमनुकुर्वन्निव प्रतीयते। भवभूति-रस्य गर्भाङ्कयोजनामनुहरतीति गौरवमप्यस्य महत्त्वं गमयति।

## भट्टनारायणः

स्वीयेन एकमात्रेण वेणीसंहारनाम्ना नाटकेन भट्टनारायणः संस्कृत-साहित्येऽतितरां प्रख्यातः। किंवदन्ती प्रसिद्धा यद् गौडदेशशासकेन आदिशूरेण ब्राह्मणधर्ममुन्नेतुं कान्यकुब्जदेशादानीय निवासितेषु ब्राह्मणेष्वयमप्येक इति। आदिशूरः पालवंशोत्थानतः पूर्ववर्त्ती राजेति तस्य समयः सप्तमशताब्द्या उत्तरार्धमास्थातुं युक्तम्। दशमशतकोत्पन्नो धनिको वेणीसंहारमुद्धरति, आनन्दवर्धनोऽपि ध्वन्यालोके 'कर्त्ता द्यूतच्छलानामि'त्यादि पद्यमुद्धृतवान्, वामनोऽपि महताऽऽदरेण वेणीसंहारगतं पद्यम्—'पतितं वेत्स्यसि क्षितौ' इति समुद्धृत्य मीमांसां चक्रे। एतत्सर्वमालोचयन्तो विद्वांसो भट्टनारायणस्य समयमष्टशतकमध्यभाग निर्णयन्ति।

धर्मकीर्त्तिकृताया रूपावतारस्य नीवीनामिकायाष्टीकाया हस्तलिखितप्रतेरे-कस्या अवगम्यते यद् बाणप्रेरणया भट्टनारायणः कस्यचिद् बौद्धभिक्षोः शिष्यो जातः। तदनन्तरं भट्टनारायणो धर्मकीर्त्तिश्च मिलित्वा रूपावतारमलिखताम्। एतेनापि भट्टनारायणस्य बाणभट्टसमकालिकत्वं प्रतीयते।

अस्य कान्यकुब्जाभिजनत्वं प्रति तु न कस्यापि विमतिः।

## वेणीसंहारम्

नाटकमिदं महाभारतीयं कथावस्त्वाश्रित्य विरचितम्। दुःशासनापमान-सन्तप्ता द्रौपदी घोरां प्रतिज्ञामकृत, यद् 'अहं दुःशासने निहत एव केशसंय-मनं करिष्यामि।' अस्या एव घटनायाः पूर्त्तौ महाभारतस्य या कथा साऽत्र वर्णिता।

अत्र नाटके षड् अङ्काः सन्ति। प्रथमोऽङ्कः कृष्णचन्द्रस्य दौत्यात् प्रारभ्यते यत्र विफले भगवति कृष्णे कुपिते च युधिष्ठिरे समरदुन्दुभिरताड्यत। द्वितीयेऽङ्के दुर्योधनभानुमत्योः संवादः। तृतीये प्रवेशकेन धृष्टद्युम्नकृतद्रोणवधावगमः, कुपितस्याश्वत्थाम्नः सकलराजन्यकनिन्दा, कर्णाश्वत्थाम्नोर्वाक्कलहश्च प्रधानं वस्तु। चतुर्थेऽङ्के सुन्दरकद्वारा युद्धस्थितौ दुःशासनभीषणवधपर्यन्तायां निवेदि-तायां दुर्योधनस्य खेदः। पञ्चमेऽङ्के धृतराष्ट्रगान्धार्यौ दुःखितत्वेन दुर्योधनं पाण्डवैः सह सन्धिं विधातुमागृह्णीतः, परं नासौ मन्यते। षष्ठेऽङ्के चार्वाकमुनि-वञ्चनया यावद्युधिष्ठिरो वह्निप्रवेशमभिलष्यति तावदेव सत्ये विदिते सर्वे आनन्द-न्ति, द्रौपदी च दुःशासनासृजा केशान् संयमयति।

संस्कृतनाट्यशास्त्रानुसारेण वेणीसंहारं शास्त्रीयदृष्ट्याऽऽदर्शभूतम्।

यद्यप्यत्र नाटके नाटकीयवस्तूनां विन्यासस्तथा सुश्लिष्टतया घटितो यथा नाटकीयवस्तूदाहरणायैव निर्मितमिदं नाटकमिति सन्देहः सम्भवति, परन्तु नेयं वस्तुस्थितिः, सिद्धनाटककारप्रतिभोद्भूते रूपके नाटकीयवस्तूनि स्वतो यथास्थानं निविशन्ते यान्युदाहरति नाट्यरीतिकारः।

## पात्रसमीक्षा

वेणीसंहारस्य पात्राणीतिहासप्रसिद्धचरितानि। तेषां केवलं रञ्जनमत्र कृतम्। भीमसेनस्य चरितं व्यापकं प्रभावपूर्णञ्च। दृढप्रतिज्ञो भीमो निजां प्रतिज्ञां पूरयति, द्रौपद्यपमानदीपस्तदीयहृदये यावत्प्रतिज्ञापूर्त्तिस्तावदतन्द्रभावेन प्रज्वलति। भीमः स्वबलावलिप्त इति तत्कृतविकत्थनाभिः प्रतीयते।

दुर्योधनोऽत्रात्मविश्वासिभावेन चित्रितः। युद्धे प्रवृत्ते तस्य भानुमत्या सह शृङ्गारप्रथनमीषदुद्वेजकम्। जाते कुलक्षये केवलमात्मनो रक्षार्थमसौ पाण्डवैः सह सन्धि नानुमन्यत इति तस्य वीरत्वप्रशस्तिः।

अश्वत्थामात्र पुत्रकृत्ये सावधानः पितरि निहते कुपितोऽकेशवं जगद्विधातुमिच्छति। कर्णस्यात्मश्लाघयाऽसौ नितान्तं क्षुभ्यति। अप्राप्तविकासं तस्य शौर्यं तस्मिन्नेव लीयते।

## शैली

यद्यपि भट्टनारायणेनात्र वेणीसंहारे पात्राणां चित्रणं साधु कृतम्, पात्राणां व्यक्तित्वं च विशदीकृतम्, परन्तु कथायां कापि मन्दतेव प्रतिभासमाना नाटकोपयुक्तं क्रियावेगं विघटयति। वीररसस्यौजसश्चात्र प्रवाहः। भवभूतिरिव भट्टनारायणोऽपि संस्कृते प्राकृतेऽपि च दीर्घसमासं वाक्यजातं प्रायुङ्क्त। भट्टनारायणो निशावर्णनं साधु कृतवानिति निशानारायण आख्यायते। काव्यदृष्ट्या भट्टनारायणस्य कृतिरियं वीररसं समेधयितुं प्रयतते। भट्टनारायणो वैष्णवः कविरिति स नान्द्यामेव राधाकृष्णयोः केलिं वर्णयति। स हि कृष्णचन्द्रस्य भगवद्भावं महत्त्वं चैभिः शब्दैः प्रकाशयति—

'आत्मारामा विहितमतयो निर्विकल्पे समाधौ
सत्त्वोद्रेकाद्विघटिततमोग्रन्थयः सत्त्वनिष्ठाः।
यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्तात्
तं मोहान्धः कथमयममुं वेत्तु देवं पुराणम्॥'

वर्ण्ये वीरभावे कीदृशी शब्दावली प्रयुज्यते इत्यस्मिन्नयं सिद्धहस्तः।

'चञ्चद्भुजभ्रमितचण्डगदाभिघात-
निष्पीडितोरुयुगलस्य सुयोधनस्य।
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि भीमः॥'

नाटकदृष्ट्या नितान्तनिर्दोषं काव्यदृष्ट्यापि परमरमणीयमिदं नाटकम्, अत एव चैकेनैवानेन ग्रन्थेन भट्टनारायणोऽमरो जातः।

## शूद्रकः

संस्कृतसाहित्ये शूद्रकस्य महती प्रसिद्धिः। वेतालपञ्चविंशतिकायां दशकुमारचरिते बाणस्य कादम्बर्यां राजतरङ्गिण्यां कथासरित्सागरे चास्य नामानुश्रूयते।

अस्य कालनिर्णये बहवो मतभेदाः—

(१) स्कन्दपुराणमतेन विक्रमादित्यात् पूर्ववर्त्ती नृपोऽयम्।

(२) अनेके विद्वांसो राज्ञा शिमुकेनान्ध्रभृत्यकुलोत्पन्नेन सहास्याभेदं कल्पयन्तोऽस्य समयं विक्रमप्रथमशतकं कल्पयन्ति।

(३) वामनः स्वग्रन्थे शूद्रकं स्मरति। वामनपूर्ववर्त्ती दण्डी स्वीये काव्यादर्शे 'लिम्पतीव तमोऽङ्गानी'ति शूद्रकपद्यमुद्धरति। एतेन सप्तमशतकपूर्ववर्त्तित्वमायाति।

(४) मृच्छकटिके मनुस्मृतेर्दण्डविधानमनुसृतं दृश्यते, मनुस्मृतिश्च द्वितीयशतकस्य कृतिरिति शूद्रकस्यातत्पूर्ववर्त्तित्वमास्थातव्यम्।

(५) मृच्छकटिकस्य नवमेऽङ्के बृहस्पतिर्मङ्गलविरोधितया स्मर्यते, वराहमिहिरश्च तयोर्मैत्रीमाह। एतेनास्य ग्रन्थस्य वराहमिहिरकालपूर्वभवत्वे सिद्धे वराहमिहिरस्य षष्ठशतकोत्पन्नतायां प्रतीतायां शूद्रकस्य तत्पूर्वकालिकत्वं मन्तव्यम्।

चन्द्रबली पाण्डेयोऽमून्येवैतिहासिकतत्त्वान्याश्रित्य शूद्रकं वासिष्ठीपुत्रं श्रीपुलुमाविनाऽभिन्नं प्रतीत्य १३०–१५५ खीष्टाब्दकालिकं प्रमापयति।

## मृच्छकटिकस्य कथाभागः

अत्र रूपके चारुदत्तवसन्तसेनयोः प्रणयकथायाः सरसं चित्रणं कृतं, परं तेनैव सह तात्कालिकसमाजस्य चित्रमप्यङ्कितम्। एतत्प्रकरणगतकथा भागद्वयविभक्ता। प्रथमो भागश्चारुदत्तवसन्तसेनयोः प्रेमकथामङ्कितां निनीषति, द्वितीयश्च भाग आर्यकस्य राज्यप्राप्तिं प्रगुणयति। प्रथमोंऽशो भासकृतस्य दरिद्रचारुदत्तनामकस्य रूपकस्य शब्दसोऽर्थशश्चानुकरणं करोति। द्वितीयोंऽशश्च कविप्रतिभासृष्टः। द्वयोरंशयोर्योजने कवेश्चातुर्यं स्फुटम्। दशाङ्कनिबद्धेऽत्र रूपके कविना क्वचन गुणवति वदान्यतया दरिद्रे च विप्रे चारुदत्ते वैश्यकुलोत्पन्नाया वसन्तसेनाया वेश्याया निरुपधिः प्रेमा, शकारस्य तत्रानुरागोदयस्तस्यामनुरागमनवदधत्यां द्वेषस्तन्मूला तद्वधप्रवृत्तिः, ततश्च न्यायालये चारुदत्तस्य प्राणदण्डः, भाग्यवशात्तदुज्जीवनम्, राज्यपरिवर्त्तनेनार्यकस्य राज्यप्राप्तिश्चारुदत्तवसन्तसेनयोर्विवाहश्चेत्यादयोऽर्था निपुणं वर्णिताः।

## चरित्राणि

वसन्तसेना उज्जयिन्या वेश्या याऽत्र प्रधाननायिका। वेश्यापि सा प्रेम कर्त्तुं जानाति, मात्राऽऽगृहीतापि सा शकारे नानुरागं भजते। शकारे तद्वधप्रवृत्तेऽपि सा स्वगुणैरेव जीवति। तस्यां न केवलं प्रेमप्रकर्षः, परं स्त्रियामपेक्षिता दयादाक्षिण्यादयोऽपि प्रचुरमात्रायामुपलभ्यन्ते।

धूता पतिपरायणा। सा हि स्वपतिप्रीतये कष्टसहनोद्यता। सा हि स्वपतिकलङ्कप्रक्षालनाय स्वीयान्यमूल्यान्याभरणान्यपि वसन्तसेनायास्तुच्छानामाभरणानां परिवर्त्ते दातुमुद्यता।

शकारो नितान्तगर्वी चारुदत्तस्याकारणशत्रुश्च। स हि वसन्तसेनायाः कण्ठं मर्दयति तद्दोषं च चारुदत्तस्य शिरसि न्यस्यति, तथापि चारुदत्तस्तस्मै क्षमां ददाति।

अन्येषामपि पात्राणां साधु चित्रणमत्र कृतमिति रूपकमिदं सजीवमिव सम्पन्नम्।

अत्रत्यानि पात्राणि न कल्पितस्वरूपाण्यपि तु सर्वत्र सुलभानीति विशेषः।

## तात्कालिकी समाजदशा

शूद्रकस्यैवेयं मृच्छकटिकं नाम कृतिस्तात्कालिकसमाजदशायाः प्रस्फुटितं चित्रं प्रकटीकरोति। तस्मिन्समये उज्जयिनी भारतस्य समृद्धा नगरी, फलतस्तत्र चौर्यद्यूतयोः प्ररूढः प्रचारोऽवर्त्तत। वेश्यालयस्य प्राचुर्यं विलासितायाः प्रमाणम्। मनुस्मृतिर्न्यायालयेष्वाद्रियमाणाऽऽसीत्। ब्राह्मणा अपि व्यापारार्जितविभवाः श्रेष्ठिनः कथ्यते स्म। राज्ञां प्रभुत्वमधिकं परं ते मन्त्रिणां सहयोगमपेक्ष्यैव कार्यं चालयन्ति स्म। चैत्यानि विहाराश्च भूयसा निरमीयन्त यत्र रोगिणां शुश्रूषाऽपि व्यधीयत। क्रीतदासप्रथाऽवर्त्तत। राजशक्तेर्दुर्बलतायाः प्रधानं प्रमाणं कियतैव कालेन राज्यपरिवर्त्तनं दृश्यते। बौद्धधर्मो यद्यपि सम्पन्नदशस्तथापि तत्र दोषाः समाविष्टा आसन्।

## काव्य-शैली

शूद्रकस्य काव्यशैली सरलतमा, दीर्घः समासो गाढो बन्धश्च नानेनादृतः। नवानां भावानामुद्भावने जागरूकमतेरस्य काव्ये शृङ्गारस्य पुष्टं रूपं दृश्यम्। वर्षाया वर्णनं नितान्तहृद्यम्। शूद्रकेण राजन्यायभवनस्य यद् वर्णनं कृतं तदतिहृद्यम्। दृश्यताम्—

'चिन्तासक्तनिमग्नमन्त्रिसलिलं दूतोर्मिशङ्खाकुलं
पर्यन्तस्थितचारनक्रमकरं नागाश्वहिंस्राश्रयम्।
नानावाशककङ्कपक्षिरुचिरं कायस्थसर्पास्पदं
नीतिक्षुण्णतटं च राजकरणं हिंस्रैः समुद्रायते॥'

हासप्रयोगेऽपि कवेरस्य साफल्यम्। यज्ञोपवीतस्योपयोगे विचार्यमाणे—

'यज्ञोपवीतं हि नाम ब्राह्मणस्य महदुपकरणद्रव्यं विशेषतोऽस्मद्विधस्य, कुतः—

एतेन मापयति भित्तिषु कर्ममार्गा—
नेतेन मोचयति भूषणसम्प्रयोगान्।
उद्घाटको भवति यन्त्रदृढे कपाटे
दष्टस्य कीटभुजगैः परिवेष्टनञ्च॥'

सर्वांशतो विचारेण नाटकमिदमतिसफलम्। आधुनिकयुगेऽप्यस्य चमत्कारित्वमक्षुण्णमत एव पाश्चात्त्या आलोचका नाटकमिदं प्रशंसन्ति।

## भासः

भासस्य काले निर्णये प्राचां कवीनां लेखकानाञ्च लेखा अवलम्बनानि। तत्र—

१. कालिदासेन 'प्रथितयशसां भाससौमिल्लकविपुत्रादोनाम्' इत्यादरातिशयेन सह तदीया प्रचुरा प्रसिद्धिरुक्ता।

२. 'गौडवहो' नामकप्राकृतप्रबन्धे वाक्पतिना 'भासम्मि जलनमित्ते' इत्यभिधाय कथामेकां प्रतीङ्गितं कृतम्। सा च—भासो व्यासश्च प्राचोनमुनी 'विष्णुधर्म' नामकं ग्रन्थं स्वस्वविनिर्मितं प्रकर्षपरीक्षार्थं पावके प्रचिक्षिपतुः। वह्निश्च विष्णुधर्मं भासकृतं नाधाक्षीत्। एषैव भासस्य ज्वलनमैत्री।

३. उक्तमेवार्थं द्वादशशताब्दीसम्भूतो जयानको नाम कविः स्वोये 'पृथ्वीराजविजय' नामके काव्ये—

'सत्काव्यसंहारविधौ खलानां दीप्तानि वह्नेरपि मानसानि।
भासस्य काव्यं खलु विष्णुधर्मं सोऽप्याननात् पारदवन्-मुमाच॥'

इति निबबन्ध।

४. अभिनवगुप्तः स्वकृतेऽभिनवभारतीग्रन्थे भासं स्मरन् पद्यमिदं तन्नाटकादुद्धृतवान्। महाकविना भासेनापि स्वप्रबन्धे उक्तम्—

'त्रेतायुगं तदिह हन्त न मैथिली सा
रामस्य रागपदवी मृदु चास्य चेतः।
लब्धा जनस्तु यदि रावणमस्य कायं
प्रोत्कृत्य तन्न तिलशो न वितृप्तिगामी॥'

५. बाणभट्टः स्वीये हर्षचरिते भासस्य विषये 'सूत्रधारकृतारम्भैः' इत्याद्युक्तवान्।

६. दण्डिनापि भासः 'सुविभक्तमुखाद्यङ्गैः' इत्यादिनाऽवन्तिसुन्दरीकथायां स्मृतः।

७. प्रतिमानाटके बृहस्पतेरर्थशास्त्रं स्मृतं न चाणक्यस्य। एतेन चाणक्यात् प्राचीनता भासस्यापतिता। भासस्य —

'नवं शरावं सलिलैः सुपूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम्।
तत्तस्य माभून्नरकं स गच्छेद्यो भर्तृपिण्डस्य कृते न युध्येत्॥'

पद्यमिदमुद्धरता चाणक्येनापि सा समर्थिता।

८. राजशेखरः स्वकविविमर्शे लिखितवान्—

'भासो रामिलसौमिलौ वररुचिः श्रीसाहसाङ्कः कवि-
र्मेण्ठो भारविकालिदासतरलास्कन्धः सुबन्धुश्च यः।
दण्डी बाणदिवाकरौ गणपतिः कान्तश्च रत्नाकरः
सिद्धा यस्य सरस्वती भगवती के तस्य सर्वे वयम्॥'

'कारणं तु कवित्वस्य न सम्पन्नकुलोनता।
धावकोऽपि हि यद् भासः कवीनामग्रिमोऽभवत्॥'

९. आचार्यहेमचन्द्रेण दण्डिकृतकविहृदयव्याख्यायां स्वकृतायां लिखितं भासप्रसङ्गे –

'सम्प्रति परां काष्ठामारूढेनापि भासेन भूतपूर्वा स्वीयदशा न विस्मृता। यतोऽनेन पूर्वचरितं घटखर्परेणोदकवहनमेव प्रतिज्ञातम्। प्रतिज्ञां चेमामसहमानाः परे कवयः परिहसितुमनसो विक्रमार्कसभ्यमेनं भासं तज्जातिस्मारकघटखर्पर-नाम्ना व्यवजह्रुः। क्रमेण च स एव व्यपदेशो भासमहाकवेः सुप्रसिद्धः सम्पन्नः।'

१०. भरतप्रवर्त्तितनाटकीयनियमानां समादरो भासेन स्वकृतौ न कृतः, यथा स्थापनायां न कविनामनिर्देशः, अवतरणस्य स्थापनानाम्ना निर्देशो न प्रस्तावनानाम्ना। नान्दीपाठात् परतः सूत्रधारप्रवेशः। विनापि भरतवाक्यं ग्रन्थसमाप्तिः, मृत्युनिद्रायुद्धानां रङ्गमञ्चेऽवतारणा च। एतेन तस्य भरतप्राचीनताऽख्याता।

११. भासेन पाणिनिप्रवर्त्तितनियमानामनुरोधो नाचरितस्तेन तस्य पाणिन्यपेक्षया प्राचीनत्वम्।

१२. रसपरिपाकमहिम्ना भाषाप्रवाहसाम्येन भासस्य व्यासवाल्मीकिसमयवर्तित्वमातिष्ठन्ते कतिपये।

एभिर्द्वादशभिरपि कारणैर्भासस्य प्राचीनता सिद्धा भवति। सा च प्राचीनता कालिदासादपि प्राचीनमिमं साधयन्ती १०० ई० पूर्वमितं कालं भासस्य बोधयति।

(क) 'प्रोफेसर वर्नेट' महाशयो 'मत्तविलास' नामकग्रन्थेन सहैषां भासकृतत्वेन प्रथमानानां रूपकाणां सम्बन्धविशेषं दृष्ट्वा ख्रीष्टसप्तमशतकं भासस्य कालमाह।'

(ख) 'स्टेनकोनो' 'विन्टरनिज' महाशयौ तु प्राकृतभाषापर्यालोचनया कालिदासाश्वघोषयोः प्राकृतयोर्यौ कालौ तदन्तरालवर्त्ती कोऽपि कालो भासप्राकृतस्येति निश्चित्य ख्रीष्टद्वितीयचतुर्थशतकयोरन्तराले कदाचिद् भासो बभूवेति तर्कयतः।

(ग) महामहोपाध्यायो रामावतारशर्मा शूद्रककृतस्य मृच्छकटिकस्य कुत्सितं संक्षेपमात्रं चारुदत्तमिति दुर्बलमाधारं समाश्रित्य ख्रीष्टद्वादशशतकभवत्वं भासस्योक्तवान्।

सर्वमिदं विभावयन् जनः कामपि सन्देहदोलामिवाधिरोहति।

तत्रेदं विचारणीयम्—प्राकृतभाषाविचारेण केवलेन कालो निर्णेतुमशक्य एव, भासस्य रूपकाणां केरलेऽश्वघोषरूपकस्य च वाह्लीकेषु उपलम्भात्।

ख्रीष्टद्वितीयशतकोत्कीर्णेषु रुद्रदामशिलालेखेषु दृश्यमाना कृत्रिमा काव्यशैली भासरूपकेषु न दृश्यते, प्राचीनाः पाणिनिनाऽविचारिताः प्रयोगाश्च दृश्यन्ते। पञ्चरात्रस्य कथा सम्प्रत्युपलभ्यमाने महाभारते नास्ति।

अतिप्राचीन आलङ्कारिको भामहो भासकृतस्य प्रतिज्ञायोगन्धरायणस्यालोचनां कृतवान्।

प्रागुन्यस्तास्तर्का भासस्य कालः ख्रीष्टपूर्वं चतुर्थशतकमिति बोधयितुमलम्। परमियं भासकालस्य पूर्वसीमा। अपरा सीमा ख्रीष्टद्वितीयं शतकम्, यतोऽनेन कौटिल्यार्थशास्त्रमस्मृत्वा बार्हस्पत्यं तत्स्मृतं, पाणिनिविरुद्धः प्रयोगः कृतः, कालिदासश्चामुं स्वग्रन्थे स्मृतवान्।

एवञ्च ख्रीष्टपूर्वचतुर्थशतकस्य ख्रीष्टद्वितीयशतकस्य च मध्ये कदाचित् भासो जात इति स्थूलरूपेण वक्तुं शक्यम्।

मृच्छकटिकचारुदत्तसाम्यमूलकस्तर्कस्तु चारुदत्ते तत्तदशुद्धिदर्शनान्मृच्छकटिकस्यैव पूर्वभवचारुदत्तानुकृतिरूपत्वं प्रमापयतीति सर्वं पूर्वोक्तनिर्णयानुकूलमेव।

यस्य समये निर्णये इयती विगीतिस्तस्य चरितं कथं निश्चीयतामिति तद्विषये मौनमेव शरणम्।

## भासस्य रूपकाणि

महाकविभासस्य त्रयोदश निम्नलिखितानि रूपकाणि प्रसिद्धानि—

१. प्रतिज्ञायौगन्धरायणम्
२. अविमारकम्
३. स्वप्नवासवदत्तम्
४. प्रतिमानाटकम्
५. अभिषेकनाटकम्
६. मध्यमव्यायोगः
७. पञ्चरात्रम्
८. दूतवाक्यम्
९. दूतघटोत्कचम्
१०. कर्णभारः
११. ऊरुभङ्गम्
१२. बालचरितम्
१३. दरिद्रचारुदत्तम्

गोण्डलनिवासी राजवैद्यजीवरामकालिदासमहोदयः १९४१ ख्रीष्टाब्दे 'यज्ञफल' नामकं रूपकमेकं प्रकाशितवान्, तदपि भासकृतित्वेनाख्यायते। एवं सति भासस्य चतुर्दश रूपकाणि जातानि।

एषु प्रतिज्ञायोगन्धरायणस्वप्नवासवदत्ताविमारकाणि त्रीणि बृहत्कथाऽऽधाराणि। प्रतिमानाटकमभिषेकश्चेति द्वे रामायणमूले। मध्यमव्यायोगपञ्चरात्रदूतघटोत्कचकर्णभारोरुभङ्गयज्ञफलदूतवाक्यानि सप्त महाभारताश्रयाणि, बालचरितं भागवताश्रयम्, दरिद्रचारुदत्तं च कल्पितकथमिति विवेकः।

१. मध्यमव्यायोगे—हिडिम्बानामकराक्षस्या सह भीमस्य प्रणयः, घटोत्कचनामकपुत्रद्वारा चिरविरहितयोस्तयोः सङ्गश्च वर्णितः।

२. दूतघटोत्कचे—हिडिम्बाभीमयोरात्मजस्य घटोत्कचस्य महाभारतीयं चरितम्।

३. कर्णभारे—कर्णस्योदात्तं चरितम्, तेन हीन्द्राय कवचकुण्डले दत्ते।

४. ऊरुभङ्गे—भीमेन प्रियापरिभवप्रतप्तेन दुर्योधनस्य जङ्घे भग्ने। संस्कृतसाहित्ये शोकान्तनाटकस्येदमेकं निदर्शनम्।

५. दूतवाक्ये—दूतभूतस्य श्रीकृष्णस्य सदाशयतया सहैव दुर्योधनस्याभिमानित्वं वर्णितम् ।

६. पञ्चरात्रे—कल्पिता कथा । द्रोणेन कौरवाणां यज्ञे आचार्यत्वं कृतम्, दक्षिणायां स पाण्डवानां राज्यं याचितवान् । पञ्चदिनाभ्यन्तरेऽन्वेषणे क्रियमाणे लभ्यं तदिति दुर्योधनस्याश्वासने द्रोणेन तथा कृतम्

७. बालचरिते—कृष्णस्य बाललीला भागवताधारेण कृता ।

८. अविमारके—या कथा सा सम्भवतो गुणाढ्यकृतवृहत्कथातो गृहीता । राजकुमारस्याविमारकस्य कुन्तिभोजकुमार्या कुरङ्ग्या सह प्रणयोऽत्र वर्णितः ।

९. प्रतिज्ञायौगन्धरायणे—मन्त्रिणो यौगन्धरायणस्य नीतिरुदयनवासवदत्तयोः प्रणयकथा चात्रोपनिबद्धा ।

१०. प्रतिज्ञायौगन्धरायणे—मन्त्री यौगन्धरायणः पद्मावत्या मगधराजभगिन्या सहोदयनस्य विवाहं कारयित्वा राजशक्ति वर्द्धयितुमैच्छत् । ध्रियमाणायां च वासवदत्तायां न सम्भवतीदमिति कदाचिदुदयने मृगयार्थं गते मन्त्रिसम्मतया वासवदत्ता दग्धेति प्रचार्यते । राज्ञा चिरं विषद्यापि न तत्प्रेमणि मालिन्यमानीयते पश्चात् पद्मावत्यां परिणीतायां स्वप्नक्रमेणेव वासवदत्ता लभ्यते ।

११. दरिद्रचारुदत्ते—वसन्तसेनाचारुदत्तयोः प्रणयकथा वर्णिता । अस्य चत्वार एवाङ्का उपलभ्यन्ते ।

१२. अभिषेके—रामायणोक्ता वालिवधादारभ्य रामराज्याभिषेकान्ता कथा वर्णिता ।

१३. प्रतिमानाटके—रामायणप्रोक्तं रामस्य पूर्वचरितमुपनिबद्धम् ।

१४. यज्ञफले—कथाभागोऽत्यल्प एव युधिष्ठिरयज्ञसम्बन्धी ।

## सर्वेषामेषां रूपकाणामेककर्तृकत्वम्

उपरिनिर्दिष्टनामानि रूपकाणि समानकर्तृकाणि यत एषु आश्चर्यजनकं साम्यं प्रतिभासते । यथा—

१. सर्वाण्यपीमानि नाटकानि—'नान्द्यन्ते ततः प्रविशति सूत्रधारः' एभिरेव शब्दैः प्रारभ्यन्ते ।
२. एषु रूपकेषु क्वापि रचयितुर्नाम परिचयादिकं नोपलभ्यते ।
३. प्रायः सर्वत्र प्रस्तावनायाः स्थाने स्थापनाशब्दप्रयोगः कृतः । कर्णभारमात्रे प्रस्तावनाशब्दप्रयोगः ।
४. एषु सर्वत्र भरतवाक्यं समानम् ।
५. एषां रूपकाणां भाषाऽऽश्चर्यजनकं साम्यं वहति ।
६. सर्वेष्वप्येषु रूपकेषु पताकास्थानस्य मुद्रालङ्कारस्य च समानः प्रयोगः ।
७. अप्रधानपात्राणां नामसाम्यम्, व्याकरणलक्षणहीनप्रयोगप्राचुर्यम्, समानं वाक्यम्, सर्वत्र बाहुल्येन लभ्यते ।

८. भरतकृतनाट्यशास्त्रीयनियमानां सर्वत्र समभावेनानादरः।

९. नाट्यनिर्देशस्य अभावः समानः।

१०. एषां सर्वेषां रूपकाणां नामानि केवलमन्त एव ग्रन्थस्य लभ्यन्ते नान्यत्र क्वापि।

## भासस्य द्विरवतारः

यद्यपि बहवो विद्वांसो गणपतिशास्त्रिणा प्रकाशितानि सर्वाण्यपि रूपकाणि प्राचीनभासकृतानीत्युक्तवन्तः प्रमाणानि चोपस्थापितवन्तः, परन्तु जातेन बहुविधानुसन्धानेनैषां कर्त्ता प्राचीनो भासो न सिद्धयति, यतो भासकृतत्वेनोदाहृतानि पद्यानि लभ्यमानग्रन्थेषु नासाद्यन्ते, अतः सर्वाण्यपीमानि रूपकाणि केरलदेशीयेन केनचित् कविना कृतानीति सुवचम्। म० म० रामावतारशर्माऽपि लभ्यमानरूपकाणामंशविशेषा एव भासकृता इति मन्यते। अत एव चैषां केरल एवोपलब्धिरिति समुपन्यस्यति तदुपोद्बलकं प्रमाणम्। केरलीया नटा अद्यापि भासनाटकान्यभिनीय लोकान् रञ्जयन्ति।

अस्यां स्थितौ युक्तमिदं यद् भासद्वयं मन्यताम्, तत्रैकः प्राचीनो भासो यो महाकविकालिदासादिना स्मृतः। अपरश्च केरलीयो नवां द्वादशशताब्दीसमुद्भवो भासो यस्य रूपकाणि चतुर्दश म० म० गणपतिशास्त्रिभिः प्राकाश्यं नीतानि।

## भासस्य नाटकनिर्माणनैपुण्यम्

बहूनां रूपकाणां लेखको भासो जीवनस्य विविधानि क्षेत्राणि दृशोः पात्रतां नीतवानिति वक्तुं सुशकम्, अत एव चास्य रूपकेषु विविधता समायाता। एतदीयकृतिषु कतिचन नाटकानि पूर्णविकसितानि नाटकानि, यथा—स्वप्नवासवदत्तम्, प्रतिज्ञायौगन्धरायणम्, प्रतिमानाटकञ्च। मध्यमव्यायोगदूतघटोत्कचदूतवाक्यकर्णभारोरुभङ्गानि एकाङ्करूपकाणि कथयितुं शक्यन्ते। भासस्य रूपकेषु अभिनययोग्यतैवासाधारणभावेन स्थिता सती तानि प्रख्यापयति। अभिनेयताहेतवश्च—एषां रूपकाणामादितोऽन्तं यावदभिनये सौकर्यम्, सुबोधा सरला संक्षेपवती च वाक्यावलिः, वर्णनविरहः, अविस्तृतानि पात्राणां कथनोपकथनानि, इत्यादिकाः सर्वेषु रूपकेषु दृश्यन्ते। भासः संवादतत्त्वाभिज्ञ इति तदीयाः कृतयः संवादसौष्ठवं बिभ्रति सर्वत्र सुलभम्। भासो निजेषु रूपकेषु स्वाधारभूताः कथास्तथैवोपन्यस्यापि केवलेन सरलत्वकथनोपकथनचातुर्यादियोजनेन तानि रमणीयतां प्रापयतीति भासस्य नाटकनिर्माणनैपुण्यं सुखमवगन्तुं शक्यम्।

## भासकृतिभिरन्यकविकृतिसाम्यम्

भासस्य कृतयोऽन्येषां कृतिभिः सह साम्यं बिभ्रति। यथा—शाकुन्तले चतुर्थेऽङ्के वृक्षलतादीन् प्रति शकुन्तलाया यः कोमलो मनोभावः—'पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या' इत्यादिना वर्णितस्तत्तुल्य एव भास-

स्याभिषेके 'यस्यां न प्रियमण्डनापि महिषी देवस्य मन्दोदरी' इत्यादौ मनोभावो वर्ण्यते। यथा शाकुन्तले आश्रमवासिनां पीडनं परिहर्त्तुमादिश्यते तथैव स्वप्नवासवदत्ते—'न परुषमाश्रमवासिषु प्रयोज्यम्' इत्यादिश्यमानं दृश्यते। यथैव शाकुन्तले –'तव सुचरितमङ्गुरीय नूनं प्रतनु ममेव विभाव्यते फलेन' इति दुष्यन्तेनाङ्गुरीयकं प्रत्युच्यते, तथैव स्वप्नवासदत्ते--'श्रुतिसुखनिनदे कथं नु देव्याः स्तनयुगले जघनस्थले च सुप्ता' इति वीणादौर्भाग्यमाक्रुश्यते।

एवमेव शूद्रकस्य मृच्छकटिकेन सह चारुदत्तस्य सर्वांशगतं सादृश्यमासाद्यते।

तदत्र केन कस्याधमर्ण्यं गृहीतमिति विचारे क्रियमाणे कालिदासशूद्रकौ एवोत्तमर्णौ भास एव तयोः अधमर्ण इति मम विश्वासस्तत्रायं भासो द्वितीयो भास इति च। प्रथमो भासः कालिदासादीनां पथि पदर्शकः सम्भवति, परं तदीयाः कृतयो नोपलभ्यन्ते, यश्चायं केरलीयो रूपकसमूहः स तु नवस्य भासस्य। एवं हि मन्यमाने सर्वमप्युपपन्नं भवतीति।

## राजशेखरः

राजशेखरः स्वनाटकप्रस्तावनासु स्वजीवनसम्बन्धे यदुक्तवांस्तदाधारेण यायावरवंशेऽस्य जन्माऽऽसीत्, यो वंशोऽकालजलदसुरानन्दतरलकविराजादीनां जन्मग्रहणेन गौरवान्वितः कथ्यते। (अयं राजशेखरो महाराष्ट्रदेशीयः अकालजलदस्य पौत्रः दर्दुकस्य शीलवत्याश्च पुत्र आसीत्) अयं क्षत्रियचौहानवंशोद्भवाम् अवन्तिसुन्दरीं नाम ललनामुपयेमे। इयमवन्तिसुन्दरी महाविदुषी बभूव। राजशेखरः पाकपरिभाषाविषये तन्मतमप्युपन्यस्तवान्। यथा—'आग्रहपरिग्रहादपि पदस्थैर्यपर्यवसायः, तस्मात्पदानां परिवृत्तिवैमुख्यं पाक इति वामनः। 'इयमशक्तिर्न पुनः पाकः' इत्यवन्तिसुन्दरी। हेमचन्द्रदेशीयनाममालायाम् अवन्तिसुन्दरीकृतं 'देशीयशब्दकोषम्' स्मृतवान्, तथाऽवन्तिसुन्दर्या कृतं कतिपयशब्दानां नवस्यार्थस्य चर्चामपि कृतवान्। अवन्तिसुन्दर्याः प्राकृतकविताप्रियतायाः प्रमाणमिदं यत्तदनुरोधेनैव राजशेखरः कर्पूरमञ्जरीसट्टकं प्राकृतभाषामयं निर्मितवान्।

महाराष्ट्रदेशोद्भवोऽयं कान्यकुब्जराजस्योपाध्यायपदमलमकृत। एतदाश्रयदातुर्नाम महेन्द्रपाल इत्यासीद्यः प्रतिहारवंश्यनृपेषु गौरवशाली समाख्यातः। एतदादेशेनैव बालरामायणं प्रथममभिनीयते स्म। कियतः कालस्य कृतेऽयमन्यं कञ्चन नृपमप्याश्रयत्। यदादेशेन विद्धशालभञ्जिकाया अभिनयो जातः। महेन्द्रपालानन्तरमयं पुनस्तत्तनयस्य महीपालस्य सभ्यभावेन स्थितो यदादेशेन बालभारतस्याभिनयः प्रथमं पदमधत्त।

एषां राज्ञां कालस्य पर्यालोचनया राजशेखरस्य कालः ख्रिष्टनवमशतकस्यावसानभागो दशमशतकस्य पूर्वभागश्च सिद्ध्यति। यं महेन्द्रपालमयं स्मरति तेन कारितौ शिलालेखौ ९०३, ९०७ खीष्टाब्दयोरुत्कीर्णौ, नवमशतकोत्पन्न-

मानन्दवर्धनमयमुद्धरति, मुञ्ज (९७५-९९३) कृताश्रयेण धनञ्जयेन चायं स्मर्यते, सर्वमपीदम्मदुक्तमनुमोदयति।

## राजशेखरस्य ग्रन्थाः

बालरामायणगतं 'विद्धि नः षट् प्रबन्धान्' इति वचनमाधारीकृत्य राजशेखरेण षट् ग्रन्था रचिता इति वक्तुं शक्यते—१. काव्यमीमांसा, २. बालरामायणम्, ३. बालभारतम्, ४. कर्पूरमञ्जरी, ५. विद्धशालभञ्जिका, ६. हरविलासः। एषु प्रथमे पञ्च प्राप्ताः प्रकाशिताश्च। षष्ठस्य हरविलासस्योद्धरणं हेमचन्द्रेण काव्यानुशासनविवेके दत्तम्। तावतैव तस्य सत्त्वमनुमीयते।

१—काव्यमीमांसा कविकर्त्तव्यतत्स्वरूपादिप्रतिपादनाय रचितः साहित्यविद्याविषयको हृद्यो ग्रन्थः। अत्र कविताविषयकं बहु ज्ञातव्यं निर्दिष्टम्।

२—बालरामायणे रामायणस्य कथा नाटकीयरूपमापादिता। एतत्प्रणयने कविः सर्वमपि स्वं पाण्डित्यं प्रदर्शितवान्। भवभूतेः कवित्वमनुध्याय प्रवृत्तोऽप्ययं वर्णनबाहुल्येन तमतिशेतुमयतिष्ट। अत्रत्या कथा तदङ्कनामभिरप्याख्यातेति तानि निर्दिश्यन्ते—१. प्रतिज्ञापौलस्त्यः, २. रामरावणीयः, ३. विलक्षलङ्केश्वरः, ४. भार्गवभङ्गः, ५. उन्मत्तदशाननः, ६. निर्दोषदशरथः, ७. असमपराक्रमः, ८. वीरविलासः, ९. रावणविद्रावणः, १०. सानन्दरघुनन्दनः।

३. बालभारतस्य द्वावेवाङ्कौ लभ्येते, मन्ये तत्रापि महाभारतस्य कथोपनिबद्धा स्यात्।

४—कर्पूरमञ्जरीसट्टके कर्पूरमञ्जर्या सह राज्ञः चण्डपालस्य प्रेमकथाङ्किता। सेयं कथोदयनकथासम्बद्धरत्नावल्यादिसुप्रसिद्धनाटकादीनि स्मारयति।

५—विद्धशालभञ्जिकाऽपि प्रेमकथावर्णनपरैव चतुरङ्का नाटिका।

## राजशेखरस्य कवित्वम्

यद्यपि स्वविषये राजशेखरेण—

'बभूव वल्मीकभवः पुरा कविस्ततः प्रपेदे भुवि भर्तृमेण्ठताम्।
स्थितः पुनर्यो भवभूतिरेखया स राजते सम्प्रति राजशेखरः॥'

इत्युक्तं, येन तस्य कवित्वगौरवं व्यक्तीभवति, तथाप्यसौ यावत् शब्दचयने वीरतावर्णने च सिद्धो न तावत् मधुरभावचित्रणे। अयं यदि नाटकस्थाने महाकाव्यं निरमास्यत्तदा साफल्यमविक्रमध्यगमिष्यदिति कथनं सत्यपि कटुत्वे सत्यसमीपगतम्।

[राजशेखरः संस्कृतप्राकृतपैशाच्यपभ्रंशाभिधासु चतसृष्वपि भाषासु निपुणो विद्वानत एव तस्मिन् कविराज इति संज्ञाऽन्वर्था। तन्मतानुसारेणैकाधिकभाषायां सफलकविरेव कविराज इति कथ्यते] राजशेखरस्य शब्दगुम्फनव्यग्रता तस्य शब्दकवित्वं प्रकाशयति। वर्णननैपुण्यं पुनस्तस्य तत्राप्यव्याहतमेव, यथा कर्पूरमञ्जर्याम्।

'परं ज्योत्स्ना उष्णा गरलसदृशश्चादनरसः
क्षतक्षारो हारो रजनिपवना देहतपनाः।
मृणाली बाणाली ज्वलयति च जलस्तनुलतां
वरिष्ठा यद् दृष्टा कमलवदना सा सुनयना॥'
(प्राकृतपद्यानुवादोऽयम्)

सीतारूपवर्णने कविचमत्कारो दृश्यताम्—

'इन्दुर्लिप्त इवाञ्जनेन जडिता दृष्टिर्मृगीणामिव
प्रम्लानारुणिमेव विद्रुमलता श्यामेव देहद्युतिः।
पारुष्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतं
सीतायाः पुरतश्च हन्त शिखिनां बर्हाः सगर्हा इव॥'

डॉ० कोथमतानुसारेण यद्यनुप्रासः कवितायाः प्रमाणं मन्यते तदा राजशेखरस्य महाकवित्वं सिद्धम् भवति।

संस्कृतप्राकृतच्छन्दसां नानाविधानां सम्यक्प्रयोगे कवेरस्य महान् संरम्भो दृश्यते। अयं कविर्लोकभाषाशब्दान् संस्कृते प्रयुङ्क्ते। अन्त्यानुप्रासस्यापि कविनाऽनेन प्रयोगः प्राचुर्येण कृतः।

शार्दूलविक्रीडितच्छन्दसः प्रयोगे प्रसिद्धिरस्य, तथा चोक्तं सुवृत्ततिलके—

'शार्दूलक्रीडितैरेव प्रख्यातो राजशेखरः।
शिखरीव परं वक्रैः सोल्लेखैरुच्चशेखरः॥'

राजशेखरेण स्वस्य नाटककलायामक्षमत्वं स्वयं ज्ञायते स्म, अत एवासौ स्वनाटकेषु भणितिगुणानेवोक्तवान्न पुनर्नाट्यगुणान्। तथा च बालरामायणम्—

'ब्रूते यः कोऽपि दोषं महदिति सुमतिर्बालरामायणेऽस्मिन्
प्रष्टव्योऽसौ पटीयानिह भणितिगुणो विद्यते वा न वेति।'

राजशेखरकृतेषु रूपकेषु गतिशीलताया अभावेऽपि पात्राणां सजीवता न हीयते। रसपरिपाकः हृदयभावाविष्कारपाटवं, प्रकृतिमनुष्ययोः स्वरसवाही परिचयश्चात्र नास्तीति अस्य कवित्वशक्तावक्षतायामपि रूपकाणि समधिककाव्यलक्षणयोगीनीव प्रतीयन्ते।

## मुरारिः

'मुरारिपदचिन्ता चेत्तदा माघे रतिङ्कुरु।
मुरारिपदचिन्ता चेत्तदा माघे रतिङ्कुरु॥'
'मुरारिपदचिन्तायां भवभूतेस्तु का कथा।
भवभूतिमनादृत्य मुरारिमुररीकुरु॥'

इत्यादिना प्रशंसितपाण्डित्यस्य मुरारेः कः काल इति विचारे प्रस्तुते—
(क) भवभूतेः पद्यद्वयस्योद्धरणात्ततोऽर्वाचीनो मुरारिः। (ख) काश्मीरनृपस्यावन्तिवर्मणः (८५५-८८४) काले वर्तमानः तत्कृपोपजीवी च हरविजयकर्त्ता रत्नाकरः—

'अङ्कोत्थनाटक इवोत्तमनायकस्य नाशं कविर्व्यधित यस्य मुरारिरित्थम्' इत्यादिना मुरारिं स्मृतवानिति ततोऽयं प्राचीनः। ११३५ ख्रीष्टाब्दे वर्त्तमानोऽथ श्रीकण्ठचरितरचयिता मङ्खः मुरारिं राजशेखरात् प्राचीनं मन्यते। इदं सर्वं विचार्य ख्रीष्टनवमशतकपूर्वार्द्धे मुरारिरजायतेति प्रतीयते।

## मुरारिपाण्डित्यम्

संस्कृतकविषु मुरारेर्महती प्रतिष्ठा विद्यते। भाषाप्रौढिर्व्याकरणपाटवं चास्य विपश्चितो रञ्जयति। स हि बालवाल्मीकिर्महाकविश्चाख्यायते। तस्य प्रशंसा न केवलमितरैः कृताऽपि तु स स्वयमप्याह—

'देवीं वाचमुपासते हि बहवः सारं तु सारस्वतं
जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः।
अब्धिर्लङ्घित एव वानरभटैः किन्त्वस्य गम्भीरता-
मापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः॥'

अस्य रचनायामतिशयोक्तेः प्राचुर्यं दृश्यते। असत्यामपि उपमाचमत्कृतौ सत्यामपि क्लिष्टतायां बन्धदार्ढ्येन सङ्गीतकृतमाधुर्येण चास्य कवित्वं रमणीय-शैलीसम्पन्नं मन्वते।

## मुरारेरनर्घराघवम्

मुरारेरेकमेव नाटकं यत् कथया भवभूतेर्महावीरचरितमनुकरोति। यदि भवभूतेः कविता सरला मनोहरा च कथ्यते तदाऽस्य कविता प्रौढा साऽलङ्कारा झङ्कारशालिनी च कथ्यताम्।

मुरारेः कवितायाः कठिनता तद्रसानुभवपरिपन्थिनीति सत्यं भवितुमर्हति, परन्तु तस्यां श्रूयमाणायां सत्यामेव कोऽपि हर्षमिश्रोऽवधानसम्मुखीभावः प्रादुर्भवति। दृश्यताम्--

'क्रियाणां रक्षायै दशरथमुपस्थाय विमुखे
मुनौ विश्वामित्रे भगवति गते सम्प्रति गृहान्।
तपोलेशक्लेशादुपशमितविघ्नप्रतिभये,
प्रवृत्ते वा यष्टुं रघुकुलकथैवास्तमयते॥'

कीदृशी प्रसन्नपदता, कीदृशं च वाक्यपाटवम्!

रामे वनवासप्रस्थानकाले गङ्गां तरति सति कविनोक्तम्—

'तीर्त्वा भूतेशमौलिस्रजममरधुनीमात्मनाऽसौ तृतीय-
स्तस्मै सौमित्रिमैत्रीमयमुपहृतवानातरं नाविकाय।
व्यामग्राह्यस्तनीभिः शबरयुवतिभिः कौतुकोदञ्चदक्षं
कृच्छ्रादन्वीयमानः क्षणमचलमथो दक्षिणेन प्रतस्थे॥'

अस्य कवेर्गाढबन्धता पाश्चात्येभ्यो न रोचते, विल्सनमहोदयोऽस्य कवितायाः सम्बन्धेऽभिहितवान्—

'साम्प्रतिका हिन्दवो विचारप्रकर्षमनुभूतिमार्दवं कल्पनाकामनीयकञ्च विभावयितुं मनागिव क्षमाः, अत एव हिन्दुविद्वांसोऽन्याय्यं गौरवं मुरारये प्रदत्तवन्तः।'

ये पुनरिदमीयमनर्घराघवमधीयते ते मुरारेः प्रशंसामुचितामेव मन्यन्ते।

अनर्घराघवस्य प्रस्तावनातोऽस्य जननीजनकयोर्नामनी 'वर्धमानतन्तुमती' इति ज्ञायेते।

## जयदेवः

प्रसन्नराघवस्य प्रस्तावनात एतावदस्य विषये ज्ञायते, यदस्य जयदेवस्य पिता महादेवो माता च सुमित्राऽऽसीत्। कौण्डिन्यगोत्रश्चायम्। वस्तुतस्तु शाण्डिल्यगोत्रोऽयम्, 'सरिसवेदिगौन' संज्ञकमैथिलवंशोद्भवश्च। अनेन न्याय-चिन्तामणिग्रन्थस्य टीका लिखिता यत्र—'येन चिन्तामणौ टीका दश टीका-विभञ्जिनी' इति 'अत्र त्य जयदेवेन हरिमिश्रात् पितृव्यतः' इति चोल्लेखो विद्यते। अयमपि दार्शनिकत्वाभिमानी साहित्यरसिकश्चेति—

'तेषां कोमलकाव्यकौशलकलालीलावती भारती,
तेषां कर्कशतर्कवक्रवचनोद्गारेऽपि किं हीयते।'

इत्याद्युल्लेखतः प्रतीयते। तदित्थमस्य मिथिलाभवत्वं दार्शनिककवित्वं च प्रतिपन्नम्।

गीतगोविन्दकर्त्तुर्जदेवादयमन्य इति सर्वसम्मतम्। स हि भोजदेवरामादेव्योः पुत्रः एकादशशतकोत्पन्नलक्ष्मणसेननृपतिसमकालिकः बङ्गावयव-'केन्द्रबिल्व' नामकस्थानवासी च प्रसिद्धः।

प्रसन्नराघवगतः 'कदलीकदली' इति श्लोकः साहित्यदर्पणकृतोद्धृतः इति साहित्यदर्पणकर्त्तुर्विश्वनाथात् प्राचीनत्वमस्य सिद्ध्यति, अतश्चास्य त्रयोदश-शतकं समयः सिद्धो भवति।

## कविता-शैली

एतद्रचित एक एव नाटकग्रन्थो लभ्यते 'प्रसन्नराघव' नामा। अस्मिन् ग्रन्थे रामायणस्य कथोपनिबद्धा। प्रसन्नराघवं दृष्ट्वाऽनायासमेव बोद्धुं शक्यते, यदस्मिन् ग्रन्थे नाटकत्वापेक्षया काव्यत्वस्य मात्राऽधिका विद्यते। अस्मिन्नाटके द्वितीयेऽङ्के विस्तृतरूपेण यो वाटिकावृत्तान्त उपन्यस्तः, स एव तुलसीदासादि-नाऽनुसृतः। षष्ठेऽङ्के रामस्य विरहः साधु चित्रितः कविना। एवमेव प्रभात-चन्द्रोदययोरपि वर्णने स्वीयं काव्यकौशलं प्रदर्शितम्। सत्यप्यन्यान्यवर्णनगत-माधुर्ये, सत्यामपि तत्तत्कल्पनाघनायां कवितायां नाटकीयदृष्ट्याऽस्य ग्रन्थस्य न तावती प्रतिष्ठा, यतोऽत्र गत्यात्मकता नितान्तदुर्लभा।

नाटकीयदृष्ट्याऽनुत्तमत्वेऽपि काव्यदृष्ट्याऽस्य नाटकं नितान्तरमणीयं कथयितुं शक्यते। सरलतासहचरी च रमणीयताऽस्य काव्ये विशिष्टो गुणः। दशरथो जनकं स्तौति—

'अवनिमवनिपालः सङ्कुशः पालयन्ता-
मवनिपतियशस्तु त्वां विना नेतरस्य ।
जनक, कनकगौरीं यत्प्रसूतां तनूजां
जगति दुहितृमन्तं भूर्भवन्तं वितेने ॥'

कीदृशी सरलता सरसता युक्तता चात्रोक्तौ प्रकाशते ।

रामो हनूमन्मुखेन सीतां सन्दिशति —

'कस्याख्याय व्यतिकरमिमं मुक्तदुःखो भवेयं
को जानीते निभृतमुभयोरावयोः स्नेहसारम् ।
जानात्येकं शशधरमुखि प्रेमतत्त्वं मनो मे
त्वामेवैतच्चिरमनुगतं तत्प्रिये किं करोमि ॥'

कवितायाः पत्त्रतायां तादृश्याः प्रौढेरभावेऽपि वर्णनायां प्राप्तप्रकर्षाऽस्य रचनेति सर्वसम्मतम् । नाटकीयताया अभावस्तु मुरारिवदेवास्य वर्णनरामणीयकेणाच्छाद्यते ।

## श्रीकृष्णमिश्रः

प्रबोधचन्द्रोदय-प्रस्तावनायां कीर्त्तिवर्मण उल्लेखो दृश्यते, कीर्त्तिवर्मणः समयश्च १०४९ तमखीष्टाब्दतः ११०० तमखीष्टाब्दपर्यन्तमिति पुरातत्त्वविदो वदन्ति । अनेनैव कीर्त्तिवर्मणा १०६५ खीष्टाब्दसमीपे कर्णवर्मा जितः । अस्य कर्णवर्मविजयस्योल्लेखोऽपि प्रबोधचन्द्रोदय-प्रस्तावनायां विद्यते । अतः प्रबोधचन्द्रोदय-प्रणेतुः श्रीकृष्णमिश्रस्य जीवनकाल एकादशशतकस्योत्तरार्धभागोऽत्र धारयितुं शक्यते । अयं बङ्गदेशोद्भव इति वस्तुवृत्तविदः ।

## श्रीकृष्णस्य रचना

श्रीकृष्णमिश्रस्यैकमेव प्रबोधचन्द्रोदयाभिधानं रूपकं प्राप्यते । इदं रूपकं प्रतीकेषु प्रथमत्वेन सरसरचनाशालित्वेन च प्रसिद्धम् । अमूर्त्ता भावा धर्मादयोऽत्र मूर्त्तप्राणिरूपतया कल्पिताः । इदमेव चास्य प्रतीकरूपकत्वम् । अस्यैव सरसस्य सरलस्य च ग्रन्थरत्नस्यानुकरणे तैस्तैः कविपण्डितैः चैतन्यचन्द्रोदयविद्यापरिणयामृतोदयादीनि प्रतीकरूपकाणि विरचितानीति संस्कृते प्रतीकरूपकप्रणयनपथि प्रदर्शकोऽयं मन्यते । अत्र प्रबोधचन्द्रोदये स्वशिष्यान्यतमस्य कस्यचन मन्दमतेः शिक्षायै श्रीकृष्णमिश्रोऽमूर्तान् धर्मादिभावान् मूर्त्तमानवभावेन परिकल्प्य सरसया शैल्या अद्वैतमतप्राधान्यं प्रदर्शितवान् ।

## प्रबोधचन्द्रोदयकथा

कामक्रोधलोभादिसहितो महामोहो नाम नृपः काश्यां राज्यमकरोत् । तस्य मत्यादिसमन्वितेन विवेकेन सह महान् विरोध आसीत् । महामोहो विवेकं स्वदेशाद् बहिष्कृतवान् । तस्मिन्नेव काले आकाशवाण्यभूद्यत् कालेनास्य विवेकस्योपनिषदा सह संसर्गे प्रबोधस्य जन्मनि जाते तेन महामोहस्योन्मूलनं शक्य-

क्रियं भविष्यति। तदनुसारेणैवावसाने सत्पक्षजयोऽसत्पक्षपराजयश्च भवतीति नाटकस्य सुखान्ततायां पर्यवसानं जायते।

## कविताशैली

अस्य नाटकस्य कविता नितान्तरसपेशला सरलपदा च—

'अपि यदि विशिखाः शरासनं वा
कुसुममयं ससुरासुरं तथापि।
मम जगदखिलं वरोरु नाज्ञा-
मिदमतिलङ्घ्य धृतिं मुहूर्त्तमेति ॥'

'क्षेत्रग्रामवनाद्रिपत्तनपुरद्वीपक्ष्मामण्डल—
प्रत्याशाघनसूत्रबद्धमनसां लब्धाधिकं ध्यायताम्।
तृष्णे देवि यदि प्रसीदसि तनोष्यङ्गानि तुङ्गानि चेत्
तद्भोः प्राणभृतां कुतः शमकथा ब्रह्माण्डलक्षैरपि ॥'

सर्वाण्येव पद्यान्युपदेशप्रदान्येव, इदमेकं विशिष्य ध्येयम्—

'पान्थानामिव वर्त्मनि क्षितिरुहां नद्यामिव भ्रश्यतां
मेघानामिव पुष्करे जलनिधौ सांयात्रिकाणामिव।
संयोगः पितृमातृबन्धुतनयभ्रातृप्रियाणां सदा
सिद्धो दूरवियोग एव विदुषां शोकोदयः कस्तदा ?'



# रूपकसाहित्ये ह्रासयुगम्

ख्रीष्टाब्दप्रारम्भकालात्ततः किञ्चित् पूर्वतो वा या संस्कृतभाषा सर्वाङ्गीणमुदयं प्राप्नुवत्यासीत् ख्रीष्टैकादशशतके तस्या भाषायाः सर्वेष्वङ्गेषु ह्रासस्य लक्षणानि प्रकटीभवन्ति स्म। महाकाव्यखण्डकाव्यगद्यकाव्यरूपकादिषु सर्वेष्वपि तदङ्गेषु कञ्चन कालक्रमादितो ह्रासः प्रत्यक्षमनुभूयते स्म। रूपकसाहित्ये सोऽयं ह्रासो मुरारिराजशेखरयोरनन्तरं स्फुटमुपलक्ष्यते स्म।

अत्र रूपकसाहित्यह्रासप्रारम्भे किं कारणमिति विचारे प्रारभ्यमाणे—विदुषामयं तर्को यत् कालक्रमेण संस्कृतस्य भाषितभाषाभ्यो महान् भेदो जातः। संस्कृतरूपकेषु प्रयुज्यमानानि प्राकृतान्यपि भाषितभाषास्वरूपं विहाय रूपकमात्रव्यवहार्यभाषाभावं भजन्ते स्म। प्राकृतानां स्थानेऽपभ्रंशाः प्रचरन्ति स्म। क्रमशोऽपभ्रंशानामपि स्थानमाधुनिकभाषा अगृह्णन्। राजशेखरग्रन्थेषु महाराष्ट्रीशब्दानां प्रचुरः प्रयोगोऽत्र साक्षिभावं भजते। अन्त्यानुप्रासप्रयोगो भाषितभाषाप्रभावमूलक एव तदातनकृतिषु प्राप्यते।

एवं प्रकारेण भाषितभाषा यदा साहित्योपयोगिगुणयुक्ता अजायन्त तदा संस्कृते तत्समाने प्राकृते वा लिख्यमानेषु रूपकेषु लोकानामनुरागो मन्दीभूय क्षयाभिमुखं प्रवृत्तः। संस्कृतप्राकृतयोर्मन्दीभूतानुरागेषु सत्सु लोकेषु यशः कामयमानाः कवयः संस्कृतप्राकृतरूपकप्रणयने मन्दतराः समजायन्त। यदा सामाजिकाः संस्कृतप्राकृतरूपकदर्शनाय नोत्सहन्ते तदा वृथा तत्प्रणयनप्रयास इति कवयो रूपकरचनाविमुखाः सन्तः काव्यरचनायां मनांसि दधुः। गुणग्राहकनृपगणाभावोऽप्यत्रांशतः कारणं सम्भाव्यते। एवं संस्कृतरूपकस्य प्रचुरः प्रचारो निरुध्यमानो जातः। स्वान्तःसुखाय तु कवयोऽद्यनापि रूपकं यदा कदा रचयन्त्येवेति तु न तदीयं प्रचरितत्व समर्थयितुमलम्।

## कुन्दमाला

संस्कृतस्य रूपकाभिधे विभागे ह्रासे प्रवर्त्तमानेऽपि कवयो रूपकाणि विरचयन्ति स्म यदा कदेति निवेदितपूर्वम्। तादृशेष्वेव रूपकेषु 'कुन्दमाला' नामकमेकं रूपकम्। इयं हि कुन्दमाला रामायणस्योत्तरकाण्डगतां सीतापरित्यागकथामाधारीकृत्य लिखिता। वाल्मीकेराश्रमपरिसरे गोमत्यां नाम नद्यां वहन्तीं कुन्दपुष्पमालां निरीक्ष्य रामस्तदभिज्ञानेन सीतां विज्ञातवानिति कथाभागमूलकमस्य कुन्दमालेति नामकरणम्।

## कुन्दमालाकर्त्ता दिङ्नागो धीरनागो वा ?

कुन्दमाला-प्रणेता दिङ्नाग-नाम्ना धीरनाग-नाम्ना च स्मर्यते। महीशूर-( Mysore ) नगरं कुन्दमालाया यत् पुस्तकमासादितं तत्र 'दिङ्नाग' इति

नाम प्रस्तावनायां लिख्यते। तञ्जोर-प्राप्तपुस्तकावसाने च 'धीरनाग' इति नाम दृश्यते। प्रथमः प्रस्तावनागतो नामनिर्देशः, अपरश्च ग्रन्थान्तगतो नामनिर्देशः। तत्र प्रथमो लेखो ग्रन्थकर्त्तुः सम्भवति, द्वितीयश्च कस्यचिल्लेखकस्यापि। प्रथमे दिङ्नाग इति नाम, द्वितीये धीरनाग इति। अनयोः प्रस्तावनागतलेखस्य ग्रन्थकृल्लेखत्वेनाधिकप्रामाणिकतया संस्कृतसाहित्ये दिङ्नागनाम्नः प्रसिद्धतया च कुन्दमाला-प्रणेता दिङ्नाग एवेति वक्तु शक्यते।

## कुन्दमाला-प्रणेतुः कालः

(१) राजशेखरः भवभूतिनामोल्लेखं कुर्वन्नपि कुन्दमालाया नाम न निर्दिष्टवान्।

(२) कुन्दमालायाः प्राचीनतम उल्लेखो भोजदेवेन कृतः। तत्कालः—१०१८-१०६० खीष्टीयः।

(३) द्वादशे त्रयोदशे वा खीष्टशतके जाते महानाटके कुन्दमालाया उल्लेखो विद्यते।

(४) द्वादशशतकोद्भवेन शारदातनयेन कुन्दमालोदाहृता स्वीये भावप्रकाशने।

(५) चतुर्दशशतकोत्पन्नो विश्वनाथः साहित्यदर्पणे कुन्दमालां समुदाहृतवान्।

कुन्दमालायाः समीक्षया ज्ञायते यद्दिङ्नागो भवभूतेरुत्तररामचरितमवलोक्यैव कुन्दमालां प्रणीतवान्।

एतत्सकलं विचारयद्भिः कुन्दमाला-प्रणेतुर्दिङ्नागस्य दशमं शताब्दं समय इति वक्तु शक्यते।

## उत्तररामचरितं कुन्दमाला च

कुन्दमालासमीक्षा—भवभूतेरुत्तररामचरितं कुन्दमालाया भित्तिभावेन समर्थ्यते। कतिपयस्थलविचारेणोत्तररामचरितकथा कुन्दमालायां समेधितरूपा प्रतीयते। उत्तरे रामचरिते केवलेनाङ्गस्पर्शेन रामः सीतां परिचिनोति। इह कुन्दमालायाम् अङ्गस्पर्शस्तद्दिगायातो वायुः, कुन्दमाला, जले प्रतिबिम्बिता सीताया आकृतिः, सीतोपभुक्तं दुकूलञ्चेति पञ्चकं मिलित्वा रामेण सीतां स्मारयति। उत्तररामचरिते सकृदेव सीतारामयोर्मिलनं वर्णितम्, कुन्दमालायां द्विः।

काव्यकलायां भवभूतिरुत्कृष्ट इति कथयञ्जनो नाट्यकलायां दिङ्नागस्योत्कृष्टतामपि समर्थयेत। पात्राणां चरितान्यपि भवभूतिचित्रितपात्रचरितापेक्षया विशदतराणि रम्याणि च कुन्दमालायाम्। दीर्घभाषणदुरूहवर्णनदीर्घसमासाप्रयुक्तपदत्वादयो ये दोषा भवभूतिकृतौ लब्धावकाशास्ते दिङ्नागकृतौ न लभ्यन्ते। उत्तररामचरिते वीराद्युपस्कृतः करुणो रसः कुन्दमालायां तु केवल

एव करुणः। भवभूतिर्यदि नाट्यकाव्यान्यरचयत्तदाऽयमभिनयार्हं नाटकमरचयदिति कथनं वस्तुस्थितिपरिचयाय पर्याप्तम्।

### कोऽयं दिङ्नागः ?

प्रसिद्धो बौद्धदार्शनिको दिङ्नाग एवास्याः कुन्दमालाया रचयिता कश्चिदन्यो वा तत्समनामा विद्वानिति सन्देहे प्रसिद्धस्य बौद्धदार्शनिकस्य रामकथामाश्रित्य नाटकप्रणयने प्रवृत्तिर्न सम्भवतीति कश्चिदन्य एवायमबौद्धो ग्रन्थकार इति समाधानं पर्याप्तम्।

### कुन्दमालायाः कविताकोटिः

कुन्दमालायां कवेः शैली नितान्तसरसा सरला च। अत्र न दीर्घसमासं वाक्यं प्रयुक्तम्, न वाऽप्रचलितानां शास्त्रमात्रप्रयुक्तानां शब्दानां समावेशो दृश्यते। प्रसादगुणस्य सर्वत्रादरोऽस्याः कृते परां शोभां समुत्पादयति। दृश्यताम्—

'लङ्केश्वरस्य भवने सुचिरं स्थितेति
रामेण लोकपरिवादभयाकुलेन।
निर्वासितां जनपदादपि गर्भगुर्वीं
सीतां वनाय परिकर्षति लक्ष्मणोऽयम्॥'

यादृशः सरसः सरलश्च शब्दसन्दोहस्तादृश एवार्थोऽपि कोमलतमः। सोऽयं मणिकाञ्चनसंयोगः कन्न सचेतसं मदयेत् ?

## इतरे रूपककाराः

### अनङ्गहर्षः

'तापसवत्सराजा' भिधस्य नाटकस्य प्रणेता अनङ्गहर्षापरनामधेयो मातृराज आसीत्। अयं मातृराजो 'माउराज' इति विकृतनाम्ना राजशेखरेण—

'माउराजसमो जज्ञे नान्यः कलचुरिः कविः।
उदन्वतः समुत्तस्थुः कति वा तुहिनांशवः॥'

इति स्मृतः। मालतीमाधवमनुसृत्यायं मातृराजः तत्रत्यकामन्दकीसमानां साङ्कृत्यायनीनामिकां बौद्धसन्न्यासिनीं पात्रं सृष्टवान्। एतेनास्य भवभूतिपरवर्त्तित्वं सिद्धं भवति। तापसवत्सराजस्य उद्धरणानि मम्मट-कुन्तक-राजशेखर-भोजराजा-भिनवगुप्त-हेमचन्द्रा-नन्दवर्धनैः सर्वैरेव स्वस्वग्रन्थेषु दत्तानि। तेषु प्राचीनतममुद्धरणम् 'उत्कम्पिनी भयपरिस्खलितांशुकान्ता' इति पद्यम् आनन्द-वर्धनस्य ध्वन्यालोके दृश्यते। एतेनानन्दवर्धनात्पूर्वभवत्वमस्यायातम्। तदित्थं भवभूत्यानन्दवर्धनयोर्मध्येऽर्थात् ख्रीष्टाष्टमशतकोत्तरार्धेऽनङ्गराजापरनामकस्य मातृराजस्य स्थितिरवसीयते।

तापसवत्सराज-नामकमिदं नाटकमुदयनस्य प्रसिद्धां कथामाश्रित्य रचितम्। उदयनस्य कथा भासेन स्वीययोः अभिनेययोः प्रतिज्ञायौगन्धरायण-स्वप्नवासवदत्तयोः, हर्षराजेन रत्नावलीप्रियदर्शिकयोः, सुबन्धुना वासवदत्तानाट्यधारायाम् विशाखदेवेन च अभिसारिकावञ्चितके निबद्धेति कथ्यते।

तापसवत्सराजस्य एकं खण्डितपुस्तकं बर्लिनस्थराज्यपुस्तकालये प्राप्यते स्म। तदाधारेणास्यैकं संस्करणं यदुगिरिस्वामिनां सम्पादकत्वे १९२९ तमख्रीष्टाब्दे महीशूर-नगरात् प्रकाशितमभूत्।

अत्र नाटके उदयनेन वासवदत्तायां दग्धत्वेन ज्ञातायाम् नितान्तं खिद्यमानेन प्रयागे आत्महत्या चिकीर्षिता। अनेकयुक्तिभिः तस्य प्राणरक्षा कृता। तदनन्तरं स्वीकृततापसवेषोऽसौ भ्रमन् क्वचनाश्रमे वसन्तीं वासवदत्तां साक्षादकृत। अवसाने पद्मावत्या सहोदयनस्य विवाहो जात इति कथा वर्णिता। सेयं कथातीव करुणा यां कविः साधु निबद्धवान्।

तापसवत्सराजेऽनङ्गहर्षेण सरला सुबोधा च भाषा प्रयुक्ता। कविताशैल्यपि रम्या। वासवदत्तावियोगे करुणपरिदेवनमुदयनस्य—

'उत्सर्पिणो भयपरिस्खलितांशुकान्ता
ते लोचने प्रतिदिशं विधुरे क्षिपन्ती ?
क्रूरेण दारुणतया सहसैव दग्धा
धूमान्धितेन दहनेन न वीक्षितासि॥'

अतिक्रालोपयुक्तपरिपक्वरसं सरलसरसविरचनञ्च। वासवदत्तावियुक्त उदयनः स्वं विरहं वर्णयति—

'तद्वक्त्रेन्दुविलोकनेन दिवसो नीतः प्रदोषस्तथा
तद्गोष्ठ्यैव निशापि मन्मथकृतोत्साहैस्तदङ्गार्पणैः।
तां सम्प्रत्यपि मार्गदत्तनयनां द्रष्टुं प्रवृत्तस्य मे
बद्धोत्कण्ठमिदं मनः किमथवा प्रेमाऽसमाप्तोत्सवः॥'

कियती तन्मयताऽत्र प्रतीयते, यस्यां विरहेऽप्युत्सवपरम्परा प्रक्रमते !

## कुलशेखरः

'तपतीसंवरण'नामकस्य नाटकस्य 'सुभद्राधनञ्जय'संज्ञकनाटकस्य च प्रणेता 'ट्रावनकोर'राज्यवर्ति 'महोदय'नामकराज्यविशेषस्य शासक आसीत्। अस्य कालः ९३५ ख्रीष्टाब्दतः ९५५ ख्रीष्टाब्दपर्यन्तः। षडङ्के तपतीसंवरणे कुरुपित्रोः संवरणतपत्योश्च चरितं वर्ण्यमानं विद्यते। पञ्चाङ्कोपनिबद्धे च सुभद्राधनञ्जये महाभारतप्रसिद्धा सुभद्राहरणकथा वर्णिता।

## रामचन्द्रः

प्रसिद्धो जैनाचार्यो हेमचन्द्रो यमात्मन उत्तराधिकारिणमकृत, सोऽयं रामचन्द्रः ११०० ख्रीष्टाब्दतः ११७५ ख्रीष्टाब्दपर्यन्तं भुवमलमकार्षीत्। अयं गुर्जरप्रान्त-प्रशासकयोः कुमारपालाजयपालयोः समकालिकः। नलविलासः, निर्भयभीमव्यायोगः, कौमुदी-मित्रानन्दश्चास्य ग्रन्थाः प्रथन्ते।

## जयसिंहसूरी

हम्मीरमदमर्दनाभिधस्य नाटकस्य प्रणेता जयसिंहसूरिमहोदयः १२२५ ख्रीष्टाब्दसमीपे बभूव। इदमीये नाटके गुर्जरप्रान्तप्रशासकस्य हम्मीरस्य यवनैराक्रमणम्, तेन तस्य दुर्दशत्वम्, तन्मन्त्रिणो वस्तुपालस्य यशश्च वर्णितम्।

## रविवर्मा

खोष्टत्रयोदशशताब्द्या उत्तरार्धे जातोऽयं केरलान्तर्गत-कोलम्बपुर-राज्यस्य शासकः 'प्रद्युम्नाभ्युदय' नामकं नाटकं विरचितवान् । अयं परमवैष्णवः कुशलो गायकोऽलङ्कारशास्त्रपारदृश्वा कविश्चासीत् ।

## वामनभट्टबाणः

वामनभट्टबाणो नाम दक्षिणदेशस्य प्रसिद्धः पण्डितः 'पार्वतीपरिणय' नामकरूपकप्रणेता १४२० खोष्टीयसमीपे जातः । नामसाम्येन कादम्बरीकर्त्ता बाण एव पार्वतीपरिणयस्य रचयितेति कथनं भ्रान्तिमात्रमूलकम् । अस्य वामनभट्टबाणस्य शृङ्गारभूषणनामा भाणग्रन्थ प्रसिद्धः ।

## महादेवः

रामभद्रदीक्षितसमकालिको महादेवो नामाद्भुतदर्पणनामकरूपकप्रणेता षोडशखोष्टशताब्द्यां जातः । अस्य अद्भुतदर्पणनामनि रूपके अङ्गददौत्यमारभ्य रामराज्याभिषेकान्ता रामायणकथा वर्णिता ।

## क्षेमीश्वरः

खोष्टीयनवमशतकोद्भवः क्षेमीश्वरो नाम महाकविः नैषधानन्दनम्, चण्डकौशिकश्चेति रूपकद्वयं प्रणीतवान् । अयं राजशेखरसमकालिको महीपालनामककन्नोजाधिपतिमाश्रितश्च कथ्यते ।

## शक्तिभद्रः

आश्चर्यचूडामणिसंज्ञकनाटकप्रणेता नवमखोष्टशतके जातः, यतोऽयं शङ्कराचार्यस्य शिष्य आसीदिति मलावारप्रान्ते प्रथितमैतिह्यम् । शक्तिभद्रस्य कविताशैली नितान्तसरलसरसा । सुन्दरीरूपधारिणीं शूर्पणखां दृष्ट्वा लक्ष्मणस्योक्तिरियं नितान्तहृद्या—

'क्वेदं वनं वनचरैरपि दुर्विगाहं
क्वेयं वधूः कुवलयच्छविचोरनेत्रा ।
हेमारविन्दमकरन्दरसोपयोगां
कः श्रद्दधीत जलधौ कलहंसकन्याम् ॥'

एतावत्पर्यन्तं दृश्यकाव्यप्रधानभेदभूतं नाटकन्नाम प्रसिद्धाचार्यतद्ग्रन्थपरिचयप्रदानविधया विवेचितम् । सम्प्रति तदितराणि रूपकाङ्गानि सङ्क्षेपतो निरूप्यन्ते ।



# दृश्यकाव्यभेदाः

'नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः।
ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश॥'

इति दृश्यकाव्यभेदाः तेषु 'नाटकं ख्यातवृत्तं स्यादि'ति प्राचीनः सम्प्रदायः। आधुनिकास्तु कल्पितवृत्तमपि नाटकं मन्यन्ते।

रूपकनाटकयोर्मध्ये प्राचीना इदमेव भेदकं निर्णयन्ति यत् नाटके ख्यातं वृत्तं, रूपके कविकल्पितं तत्। प्राचीनसंस्कृतसाहित्ये रूपकाणां निर्माणमपि महता प्रयासेन विधीयते स्म। विशालमिदमङ्गम्, तत्र प्रसिद्धानि कतिचन रूपकाणि प्रदर्श्यन्ते—

| | |
|---|---|
| १. मालतीमाधवम् | भवभूतिकृतम् |
| २. मृच्छकटिकम् | शूद्रककृतम् |
| ३. मल्लिकामारुतम् | उद्दण्डकविकृतम् |
| ४. कौमुदीमित्रानन्दम् | जैनाचार्यहेमचन्द्रशिष्यरामचन्द्रकृतम् |
| ५. प्रबुद्धरौहिणेयम् | जैनकविरामभद्रकृतम् |
| ६. मुद्रितकुमुदचन्द्रम् | यशश्चन्द्रनामकजैनकविकृतम् |

प्रबोधचन्द्रोदय-चैतन्यचन्द्रोदय-जीवानन्द-विद्यापरिणयादीनि तु कविकल्पित-कथाघटितान्यपि नाटकान्येव। तेषां पात्राणि कविभिः कल्पितानि सन्त्यपि प्रसिद्धमनोभावरूपाण्येवेति सर्वथा काल्पनिकपात्रघटितत्वाभावात्। अत एवेमानि नाटकतयैव प्रथन्ते।

## भाणः

संस्कृतसाहित्ये प्राचीनतादृष्ट्या भाणस्यापि स्थानं नाटकवत् प्रतिष्ठितम्। भाणे धूर्तस्य नायकस्य चरितम्, एक एवाङ्कः, हास्यरसस्य प्राधान्ये सत्यपि सौभाग्यशौर्यादिवर्णनया शृङ्गारवीररससूचना, भारतीयवृत्तिश्च भवति। भाणरचनायां यशोलाभः प्रयाससाध्यो भवति, यथोक्तम्—

'वररुचिरीश्वरदत्तः श्यामिलकः शूद्रकश्च चत्वारः।
एते भाणान् बभणुः का शक्तिः कालिदासस्य॥'

भाणग्रन्थेषु वररुचेः उभयाभिसारिका, शूद्रकस्य पद्मप्राभृतकम्, ईश्वर-दत्तस्य धूर्तविटसंवादः, श्यामिलकस्य पादताडितकम्, वामनभट्टबाणस्य शृङ्गारभूषणम्, रामभद्रदीक्षितस्य शृङ्गारतिलकम्, वरदाचार्यस्य वसन्त-तिलकम्, शङ्करकवेः शारदातिलकम्, नल्लाकवेः शृङ्गारसर्वस्वम्, युवराजस्य रससदनभाणः, साहित्यदर्पणोक्तः लीलामधुकरश्चेत्यादयो ग्रन्था: स्मर्यन्ते।

## व्यायोगः

व्यायोगनामकरूपकप्रभेदसाहित्यमपि संस्कृते न दुर्लभम्। व्यायोगे प्रसिद्धमितिवृत्तम्, स्त्रीपात्रविरहः, बहुपुरुषपात्रता, गर्भविमर्शसन्ध्यभावः, कौशिकी वृत्तिः प्रख्यातश्च नायको भवति। हास्यशृङ्गारशान्तभिन्नाः रसाः।

व्यायोगग्रन्थेषु द्वादशशतकोत्तरार्धभववत्सराजकविकृतः किरातार्जुनीय-व्यायोगः, भासस्य मध्यमव्यायोगः, प्रह्लादनदेवविरचितः पार्थपराक्रमः, काञ्चनाचार्यस्य धनञ्जयविजयः, रामचन्द्रस्य निर्भयभीमव्यायोगः, विश्वनाथस्य सौगन्धिकाहरणम् इत्यादयो ग्रन्थाः प्रख्याताः।

## समवकारः

समवकारे देवासुराश्रयं ख्यातं वृत्तम्, द्वादश नायकाः, वैदिकानि गायत्र्यादीनि च्छन्दांसि, वीरः प्रधानो रसः। समवकीर्यन्ते बहवो रसा यत्रेति व्युत्पत्त्या सर्वरसावस्थानं सूच्यते। एतत्प्रभेदसाहित्यमल्पम्, यथा वत्सराजस्य समुद्रमथनम्।

## डिमः

रौद्ररसप्रधानः, ख्यातेतिवृत्तः, चतुरङ्कः, षोडशभिरुद्धतनायकैरुपेतः, शान्तहास्यशृङ्गारभिन्नै रसैरुपस्कृतः, कैशिक्यतिरिक्तवृत्तिशाली च भवति डिमः। अस्योदाहरणं च 'त्रिपुरदाहः' इति महर्षिः। तदुक्तम्—

'इदं त्रिपुरदाहे तु लक्षणं ब्रह्मणोदितम्।
ततस्त्रिपुरदाहश्च डिमसंज्ञः प्रयोजितः॥'

'डिम-सङ्घाते' इति नायकसंघातव्यापारात्मकत्वाड्डिम इति संज्ञेति धनिकः। वेङ्कटवर्यस्य 'कृष्णविजयः' रामकवेः 'मन्मथोन्मथनम्' इति च परे उदाहरणे।

## ईहामृगः

ईहामृगे ख्यातं कल्पितकिञ्चिदंशं च वृत्तम्, चत्वारोऽङ्कास्त्रयः सन्धयः; सङ्घर्षसङ्कुलं कथानकं भवन्ति। मृगवदलभ्यायां नायिकायामभिलाषस्य वर्णनीयतया ईहामृग इति नामकरणम्। प्राचीनयोः 'वीरविजय' 'रुक्मिणी-हरण' नामकयोरीहामृगग्रन्थयोः यद्यप्युपलब्धिर्न भवति, तथापि वत्सराजकृतं रुक्मिणीपरिणयपुस्तकं प्राप्यत इति तदेवैकमस्योदाहरणं लभ्यम्। साहित्य-दर्पणोक्तः 'कुसुमशेखरविजय' नामकोऽपीहामृगग्रन्थोऽप्राप्य एव।

## वीथी

वीथीनामनि रूपकप्रभेदे भाणसमानैव कथा, एकोऽङ्कः, शृङ्गारोऽनुद्भिन्नरूपो रसः, कैशिकी वृत्तिश्च। 'माधवीवीथी' इति नाममात्रशेषोऽस्य निदर्शनग्रन्थः।

## अङ्कः

पुराणेतिहासप्रसिद्धं कथानकम्, करुणः प्रधानो रसः, वास्तवयुद्धाभावेऽपि वाग्युद्धम्, इत्यादिसामग्री अङ्केऽपेक्ष्यते। एतदुदाहरणं 'शर्मिष्ठाययाति'

नामकमप्राप्यम्। भास्करकवेः उन्मत्तराघवं नाम अङ्कस्योदाहरणपुस्तकं लभ्यते, परन्तु तद्रचनाकालो नावधार्यते।

## प्रहसनम्

हास्यरसस्य समाजे महानुपयोगः, शिष्टहासस्य बहुल आदरः, समाजविरोधितत्त्वस्य मार्गस्थापने हास्यरसप्रधानकाव्यस्य उपयुक्तभावश्च प्रहसनकाव्यस्य सृष्टौ कारणतां गतः। यथाधुना हास्यरसप्रधानं व्यङ्ग्यमयं च काव्यं कामपि विशिष्टां मर्यादां रक्षति, नानायासं लिख्यते, तथैव प्रागपि प्रहसनं बहुलतया नालिख्यत, तथापि संस्कृतसाहित्ये प्रहसनग्रन्थस्यैकान्ततोऽभावो नास्ति।

प्रहसने भाणवत् सन्ध्यादयः, निन्दनीयत्वेन वर्ण्यमानानां कल्पितं वृत्तम्, विष्कम्भकप्रवेशकराहित्यम्, हास्यरसप्राधान्यञ्च भवति।

सर्वप्राचीनः प्रहसनग्रन्थः 'मत्तविलासः'। तस्य रचयिता पल्लवनरेशस्य सिंहविष्णुवर्मणः पुत्रो महेन्द्रविक्रमवर्माऽऽसीत्। अयं च राजा हर्षवर्धनपुलकेशिद्वितीययोः समकालिक इत्यस्य समयः ख्रीष्टीयसप्तमशतकस्य पूर्वार्धं भागो मान्यः।

अस्य मत्तविलासप्रहसनस्य भाषा सरला, शैली प्रसन्नमनोहरा च। एकं प्रारम्भिकं पद्यं दृश्यताम्—

'पेया सुरा प्रियतमामुखमीक्षितव्यं
ग्राह्यः स्वभावललितो विकृतश्च वेषः।
येनेदमीदृशमदृश्यत मोक्षवर्त्म
दीर्घायुरस्तु भगवान् स पिनाकपाणिः॥'

मत्तविलासप्रहसननिर्माणकालात् पञ्चशताब्द्याः परतः कान्यकुब्जाधीशगोविन्दचन्द्रस्य सभापण्डितः कविराजशङ्खधरः 'लटकमेलकं' नाम लोकप्रियं प्रहसनं प्राणैषीत्। गोविन्दचन्द्रो हर्षस्तुतस्य तदाश्रयदातुर्जयचन्द्रस्य पितेति लटकमेलकं नैषधीयचरितसमकालिकम्—

'गुरोर्गिरः पञ्च दिनान्यधीत्य वेदान्तशास्त्राणि दिनत्रयञ्च।
अमी समाघ्राय च तर्कवादानुपागताः कुक्कुटमिश्रपादाः॥'

इति विश्वनाथोद्धृतं पद्यं लटकमेलकस्यैव।

ज्योतिरीश्वरकविशेखरकृतं 'धूर्तसमागम'नामकं प्रहसनम्, जगदीश्वरकृतं 'हास्यार्णव'नामकं प्रहसनम्, गोपीनाथचक्रवर्त्तिकृतं 'कौतुकसर्वस्व'नामकम्, सामराजदीक्षितकृतं 'धूर्त्तनर्त्तक'नामकं च प्रहसनं प्रसिद्धम्।

रूपकनिरूपणानन्तरमुपरूपकनिरूपणं प्राप्तकालमिति तत्प्रसङ्गे किञ्चिदुच्यते।

## उपरूपकाणि

'नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम्।
प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा॥

संल्लापकं श्रीगदितं शिल्पकं च विलासिका।
दुर्मल्लिका प्रकरणी हल्लीशो भाणिकेति च॥
अष्टादश प्राहुरुपरूपकाणि मनीषिणः।
विना विशेषं सर्वेषां लक्ष्म नाटकवन्मत्॥'

१. नाटिका—दशरूपके प्रकरणनाटकयोर्मिलितं रूपं नाटिकेत्युक्तम्। नायके प्रख्यातवंशे सत्यपि वृत्तं तस्य कल्पितमुपादीयते। संस्कृते महाराजहर्षस्य रत्नावली प्रियदर्शिका चेति नाटिकाद्वयं प्रसिद्धम्। (अनयोः परिचयः प्राग् दत्तः)। मदनपालसरस्वतीकृता पारिजातमञ्जरी-समाख्या नाटिका, यस्याः केवलमङ्कद्वयं धारानगर्यां शिलासूट्टङ्कितं प्राप्यते। मथुरादासकृता वृषभानुजा नाटिका। अयं मथुरादासः गङ्गातीरस्थसुवर्णशेखराभिधनगरवासी कायस्थकुलजश्च।

२. त्रोटकम्—दिव्यमानुषसंश्रयं, पञ्चाङ्कतोऽन्यूनं, प्रत्यङ्कं सविदूषकञ्च भवति। यथा—कालिदासस्य विक्रमोर्वशीयम्, अज्ञातकर्तृकं लम्भितरम्भञ्च।

३. गोष्ठी—पञ्चषड्योषिदन्विता, नवभिर्दशभिर्वा प्राकृतपात्रैर्युक्ता, एकाङ्कविनिर्मिता च भवति, यथा—रैवतमदनिका।

४. सट्टकम्—प्राकृताशेषपाट्या नाटिका सट्टकं नाम। यथा—राजशेखरस्य कर्पूरमञ्जरी प्रसिद्धा।

५. नाट्यरासकम्—हास्यरसं बहुगेयञ्च भवति। यथा—नर्मवती।

६. प्रस्थानकम्—हीनो नायकः, दासी नायिका, सुरापानं विषयः, सर्वमिदं प्रस्थानके भवति। यथा—श‍ृङ्गारतिलकम्।

७. उल्लाप्यम्—उदात्तनायकम्, एकाङ्कम्, संग्रामरोदनगीतादिबहुलञ्च भवति। यथा—देवीमहादेवम्।

८. काव्यम्—एकाङ्कं, स्त्रीनायकम्, आरभटीहीनञ्च काव्यं नामोपरूपकम्। यथा—यादवोदयम्।

९. प्रेङ्खणम्—हीननायकमसूत्रधारञ्च। यथा—वालिवधम्।

१०. रासकम्—पञ्चपात्रयुतम्, भाषाविभाषाबहुलम्, ख्यातनायिकं मूर्खनायकञ्च। यथा—मेनकाहितम्।

११. संलापकम्—चतुरङ्कं पाखण्डनायकं, पुरसंरोधसंग्रामवर्णनपरं भवति। यथा—मायाकापालिकम्।

१२. श्रीगादितम्—वृत्तनायकौ प्रख्यातौ, नायिकाऽपि प्रसिद्धा, श्रीशब्दयुतं च पद्यं भवत्यत्र। यथा—क्रीडारसातलम्।

१३. शिल्पकम्—चतुरङ्कं, ब्राह्मणनायकं, श्मशानवर्णनयुतम्। यथा—कनकावतीमाधवम्।

१४. विलासिका—एकाङ्का श‍ृङ्गारबहुला च भवति। उदाहरणग्रन्थो न प्रसिद्धः।

१५. दुर्मल्लिका—चतुरङ्का, कैशिकीवृत्तिशालिनी। यथा—बिन्दुमती।

१६. प्रकरणिका—नाटिकैव प्रकरणीसार्थवाहादिनायका, समानवंशजा यत्र नेतुर्नायिका। उदाहरणग्रन्थो नोपलभ्यते।

१७. हल्लीशः—एकएवाङ्कः, सप्त वा दश वा स्त्रियः। यथा—केलिरैवतकम्।

१८. भाणिका—भाणसमा। यथा—कामदत्ता।

एवं परिचितानि रूपकाणि उपरूपकाणि च। सम्प्रति कतीनांचन रूपकह्रासयुगे निर्मितानां रूपकाणां सामान्यपरिचयः प्रदीयते—

| ग्रन्थनाम | कर्त्तुर्नाम | कालनिर्देशः |
|---|---|---|
| १. पारिजातमञ्जरी | मदनः | त्रयोदशं शतकम् |
| २. उन्मत्तराघवम् | भास्करः | चतुर्दशशतकम् |
| ३. मौर्यविजयम् | जीवराम याज्ञिकः | पञ्चदशशतकम् |

# चम्पूकाव्यम्

## चम्पूसमुदायः

सामान्यतः काव्यस्य भेदद्वयं प्रथते—दृश्यं श्रव्यञ्चेति । श्रव्यकाव्यमपि द्विप्रकारम्—गद्यकाव्यं पद्यकाव्यञ्चेति । स्वीययाऽर्थप्रधानतया गद्यकाव्यं गौरवशालि, यतो हि पद्यकाव्यं कियतांशेन रागद्वारापि श्रोतृजनमनांस्याकर्षयति, गद्यकाव्यं तु स्वोयेनार्थगौरवेणैव श्रोतृजनहृदयान्यावर्जयेत् । गद्यकाव्यगतमर्थगौरवं पद्यकाव्यगतमथगौरवपुरस्कृतं रागमयत्वं चेत्युभयं मिलितं सदधिकं चमत्कारं जनयेदिति भावनैव चम्पूकाव्यस्योत्पत्तौ कारणत्वेन सम्भाव्यते । चम्पूरामायणप्रणेता भोजराजोऽपीममेवार्थमाह—

'गद्यानुबन्धरसमिश्रितपद्यसूक्ति-
हृंद्या हि वाद्यकलया कलितेव गीतिः ।
तस्माद्दधातु कविमार्गजुषां सुखाय
चम्पूप्रबन्धरचनां रसना मदीया ॥'

गद्यसम्बन्धेन पद्यानि तथैवानन्ददायकानि जायन्ते यथा वाद्ययन्त्रैरुपेतानि गायनानि । यथा केवलं गायनं न तथा चमत्कारकारि यथा वाद्योपस्कृतं, तथैव केवलं गद्यं न तथा चमत्कारकारि यथा पद्यमिश्रमिति भावयित्वैव कवयः चम्पूकाव्यान्यसृजन् ।

## चम्पूलक्षणम्

सर्वप्रथममाचार्यो दण्डो 'गद्यपद्यमयी वाणी चम्पूरित्यभिधीयते' इति चम्पूलक्षणमुक्तवान् । तदनन्तरभाविनोऽप्याचार्यास्तदेवान्ववदन् । 'गद्यपद्यमयं काव्यं चम्पूः' इति तल्लक्षणे वाणीस्थाने काव्यपदनिवेशेऽपि न कापि नवीनता

'क्वचिदत्र भवेदार्या क्वचिद् वक्त्रापवक्त्रके ।
आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्त्तनम् ॥'

इति लक्षणानुरोधेन कथाऽऽख्यायिकयोरपि गद्यपद्यमिश्रितत्वेन चम्पूलक्षणप्रसक्तिस्तु न शङ्कनीया, तयोर्गद्यस्यैव प्राधान्यात्, लक्षणानुरोधेनैव कतिपयपद्यानां तयोः प्रवेशाच्च ।

चम्पूकाव्येषु तु गद्यपदद्ययोर्मात्रा प्रायेण समा भवति किमप्येकमङ्गमतिपृथुलं न जायेतेत्यस्मिन्नंशे कवयः सतर्कास्तिष्ठन्ति ।

## चम्पूकाव्यविकासः

चम्पूकाव्यं गद्यकाव्यस्यैव परिमार्जितं रूपमिति कथनेन सत्यमपलप्यते । यद्यपि यजुर्वेदे गद्यपद्ययोर्मिश्रणमुपलभ्यते तथापि नासौ चम्पूप्रकारः । पालीगद्यपद्यनिबद्धेषु जातकग्रन्थेष्वपि न चम्पूस्वरूपं दृश्यते । अतः आर्यसूरिकृता जातकमाला एव चम्पूकाव्यस्यादिमं स्रोत इति वक्तुं शक्यते । हरिषेणस्य

प्रयागप्रशस्तौ गद्यपद्योर्मिश्रणमस्य प्राथमिकप्रयोगरूपं मन्तुं शक्यते । यद्यपि जातकमाला हरिषेणस्य प्रयागप्रशस्तिश्च गद्यपद्यमिश्रं प्राग्रूपभूतं शरीरं धारयतस्तथापि चम्पूकाव्येन वास्तविकं रूपं दशमशताब्द्यामेव प्रकटितं यदा नलचम्पूर्जनिमलभत ।

## त्रिविक्रमभट्टः

त्रिविक्रमभट्टः 'नलचम्पूः' इति संज्ञया प्रसिद्धं चम्पूग्रन्थं प्रणीय गद्ये पद्ये च समानभावेन काव्यगुणानुपस्थापयितुमयतत ।

त्रिविक्रमभट्टः स्वीये ग्रन्थे—

'शश्वद् बाणद्वितीयेन नमदाकारधारिणा ।
धनुषेव गुणाढ्येन निश्शेषो रञ्जितो जनः ॥'

इति बाणभट्टं स्मरति ।

त्रिविक्रमभट्टस्य नलचम्पूगतं पद्यम्—

'पर्वतभेदि पवित्रं जैत्रं नरकस्य बहुमतङ्गहनम् ।
हरिमिव हरिमिव हरिमिव सुरसरिदम्भः पतन्नमत ॥'

इति भोजराजेन सरस्वतीकण्ठाभरणे समुद्धृतम् । अयं त्रिविक्रमभट्टः राष्ट्रकूटवंश्यकृष्णद्वितीयपुत्रस्य इन्द्रराजस्य नवसारीशिलालेखं लेखितवान्, यत्र—

'श्रीत्रिविक्रमभट्टेन नेमादित्यस्य सूनुना ।
कृता शस्ता प्रशस्तेयमिन्द्रराजाङ्घ्रिसेविना ॥'

इति पद्यं विद्यते ।

एतेन सर्वेण त्रिविक्रमभट्टस्य बाणभोजमध्यवर्त्तित्वमिन्द्रराजाख्यनृपतिसमकालिकत्वं च प्रतिपन्नं भवति ।

पूर्वोल्लिखितस्य नवसारीशिलालेखस्य समयः ९१५ ख्रीष्टीयो वर्त्तते, अतस्त्रिविक्रमभट्टः ख्रीष्टीयदशमशतकस्य पूर्वार्द्धे बभूवेति निश्चयेन वक्तुं शक्यते । स चायं दशमशतकपूर्वभागोद्भवस्त्रिविक्रमः कविवरराजशेखरस्य समसामयिकः स्यादिति सम्भाव्यते ।

## त्रिविक्रमभट्टस्य कृतयः

नलचम्पूः, मदालसाचम्पूः, नवसारीशिलालेखश्चेति त्रयः प्रबन्धास्त्रिविक्रमभट्टेन विरचिताः । त्रिष्वप्येषु शिलालेखरूपः प्रबन्धः 'एपिग्राफिका इण्डिया' इति नामके प्रकाशने नवमभागे ३२तमे पृष्ठे मुद्रितः । अस्य शिलालेखस्यैकं पद्यम्—

'जयति विबुधबन्धुर्विन्ध्यविस्तारिवक्षः-
स्थलविमलविलोलत्कौस्तुभः कंसकेतुः ।
मुखसरसिजरङ्गे यस्य नृत्यन्ति लक्ष्म्याः
स्मरभरपरिताम्यत्तारकास्ते कटाक्षाः ॥' इति

प्रशस्तेरस्याः कविताशैली नलचम्पूगतां काव्यशैलीं तुलयतीति सिद्धयत्यनयोः प्रबन्धयोरेककर्तृकत्वम् ।

नलचम्पूः दमयन्तीचम्पूरिति नामान्तरेणापि प्रसिद्धयति । अत्र सप्तोच्छ्वासा विद्यन्ते । अस्य ग्रन्थस्य सर्वत्राप्युच्छ्वासान्ते हरचरणसरोजपददर्शनाद् माघस्य श्र्यङ्कत्वमिव किरातार्जुनीयस्य लक्ष्म्यङ्कत्वमिव वा अस्यापि ग्रन्थस्य हरचरणसरोजाङ्कत्वं कथ्यते ।

अत्र ग्रन्थे कविः सर्वमपि श्लेषप्रकारं सरलतापुरस्कृतं तथा प्रयुक्तवान् येन पाठकानां हृदयानि माद्यन्ति । सुबन्धोः कवितायां श्लेषमयता-साधनार्थं यः प्रयत्नभरः कृतो दृश्यते, तादृशः प्रयाससाध्यः श्लेषोऽत्र दुरापः । अत्रत्यः सर्वोऽपि श्लेषः सुगमः सन्नपि हृद्यतमः—

'सदूषणापि निर्दोषा सखरापि सुकोमला ।
नमस्तस्मै कृता येन रम्या रामायणी कथा ॥'

आर्यावर्त्तवर्णने विपल्लवशब्दस्य कीदृशः स्पष्टोऽर्थः श्लेषेण गुम्फितः—

'भवन्ति फाल्गुने मासि वृक्षशाखा विपल्लवाः ।
जायन्ते न तु लोकस्य कदापि च विपल्लवाः ॥'

न केवलं श्लेषचमत्कार एव, अपि तु परिसङ्ख्याया विरोधाभासस्योत्प्रेक्षाया उपमायां वा साधून्यासे कविरयं सिद्धहस्तः । दृश्यताम्—

'उदयगिरिगतायां प्राक्प्रभापाण्डुताया-
मनुसरति निशीथे श्रृङ्गमस्ताचलस्य ।
जयति किमपि तेजः साम्प्रतं व्योममध्ये
सलिलमिव विभिन्नं जाह्नवं यामुनञ्च ॥'

'मदालसाचम्पू'नामकस्तु ग्रन्थो दुरापतया परिचाययितुं न पार्यते ।

## सोमप्रभसूरिः

दिगम्बरजैनः सोमप्रभसूरी राष्ट्रकूटनरेशस्य कृष्णस्य राजत्वकाले सामन्तराजारिकेसरिचालुक्यतृतीयस्य सभायां ९५९ तमेशवीयवर्षे 'यशस्तिलकचम्पू' नामकं ग्रन्थं लिखितवान्, यो ग्रन्थो जैनमतसिद्धान्तानामवगतये साधूपयुज्यते ।

यशस्तिलके अष्ट उच्छ्वासाः सन्ति । अत्र अवन्तिराजो यशोधरः, तत्पत्न्यः कपटपटुता, राज्ञो मृत्युः, नानायोनिषु भ्रमणम्, अन्ततस्तस्य जैनधर्मप्रवेशश्चेत्यादयोऽर्था निपुणं वर्णिताः ।

गुणभद्रकृतमुत्तरपुराणमाश्रित्य चम्पूग्रन्थोऽयं प्रणीतः । इमामेव यशोधरनृपतिकथामाश्रित्य पुष्पदन्तेन 'जसहरचरिउ'नामकमपभ्रंशकाव्यं वादिराजसूरिणा च यशोधरचरितं नाम संस्कृतकाव्यं व्यरचि ।

यद्यप्यस्य चम्पूग्रन्थस्य शैली अलङ्कारपूर्णा प्राञ्जला च भाषा, तथापि नलचरितचम्पूसमानं माधुर्यमत्र नोपलभ्यते । बाणमनुसरन्नयं कविः स्वीयेऽत्र ग्रन्थे जन्मान्तरवृत्तमुपन्यस्तवान् ।

## हरिचन्द्रः

धर्मशर्माभ्युदयनामकमहाकाव्यप्रणेता हरिचन्द्रो नाम दिगम्बरजैनः 'जीवन्धरचम्पू' नामकं ग्रन्थं प्रणीतवान्। अत्र उत्तरपुराणगता जीवन्धरस्य जीवनकथा एकादशभिर्लम्भकैः लिखिता। अस्य हरिचन्द्रस्य परिचयादिकं धर्मशर्माभ्युदयनामककाव्यस्य प्रसङ्गे निरूपितम्।

## भोजराजः

भोजराजेन धाराधीशेन कृता रामायणचम्पूः किष्किन्धाकाण्डावसाना एव, तस्या युद्धकाण्डं लक्ष्मणभट्टेन कृतम्। अयं भोजराज एकादशशतकोद्भवः प्रसिद्धः साहित्यसेवी।

चम्पूरामायणस्य साहित्यिकं गौरवमतिमहत्त्वपूर्णम्। भोजस्य शब्दगुम्फः स्वभावसरलः अर्थराशिश्च चमत्कारातिशयशाली। अस्य वाल्मीकिकाव्यप्रशंसायां लिखितं पद्यं नितान्तहृद्यम्—

'वाल्मीकिगीतरघुपुङ्गवकीर्त्तिलेशै-
स्तृप्तिं करोमि कथमप्यधुना बुधानाम्।
गङ्गाजलैर्भुवि भगीरथ यत्नलब्धैः
किं तर्पणं न विदधाति नरः पितॄणाम्॥'

सीताया अशोकवाटिकायां तिष्ठन्त्या दशां वर्णयति कविः—

'उपघ्नवृक्षस्य परोक्षभावादाश्रित्य भूमिं सुचिरं लुठन्त्याः।
नक्तञ्चरस्त्रीमुखकर्शितायाः सीतालतायास्त्रिजटा जटाऽभूत्॥'

तदिदमतिचमत्कारि चम्पूकाव्यम्।

## कतिपये भागवताधाराश्चम्पूग्रन्थाः

भागवतचम्पूरिति नाम्ना अनेके चम्पूग्रन्थाः प्रथन्ते। चिदम्बरविरचितः एकः, रामभद्रविरचितोऽपरः, राजनाथरचितश्चैकोऽन्यः। सर्वेऽपीमे चम्पूग्रन्था भागवत आधारीकृत्य कृताः।

प्रह्लादचरितं नाम भक्तविवरणं नितान्तलोकप्रियमासीत्, अत एव 'नृसिंहचम्पू'संज्ञया कतिपये चम्पूग्रन्थाः श्रूयन्ते।

केशवभट्टकृतः नृसिंहचम्पूग्रन्थः, षड्भिः स्तबकैः पूर्णः। देवज्ञसूर्यकृतः नृसिंहचम्पूग्रन्थः पञ्चभिरुच्छ्वासैः समापितः। सङ्कर्षणकृतः नृसिंहचम्पूग्रन्थः चतुर्भिरेवोल्लासैः पूर्णः। शेषश्रीकृष्णेन षोडशख्रीष्टशतके पारिजातहरणचम्पूग्रन्थः प्रणीतः।

## महाभारताश्रयश्चम्पूग्रन्थः

माहाभारतीं कथामाश्रित्य अनन्तभट्टेन भारतचम्पूनामको विशालकायो ग्रन्थो विरचितो यत्र द्वादशस्तबकेषु महाभारतकथोपनिबद्धा।

'दिगन्तरलुठत्कीर्त्तिरनन्तकविकुञ्जरः।
प्राणैः समं सरस्वत्याः प्राणैषीच्चम्पुभारतम्॥'

इतीयदेवानन्तभट्टेन स्वीयचरितादिप्रसङ्गे कथितमिति न ततः कोऽपि चरिते प्रकाश आधीयते ।

ख्रीष्टीयषोडशशतकभवो मानवेदनामको दाक्षिणात्यो भारतचम्पूग्रन्थस्य व्याख्यां प्रणीतवान् । एतेनास्य, षोडशशतकपूर्ववर्त्तित्वमायातम् । भागवतचम्पू-नामकः सम्प्रत्यप्राप्यश्चम्पूग्रन्थोऽनेनानन्तभट्टेन ख्रीष्टीयैकादशशतके प्रसिद्धेन अभिनवकालिदासेन सह स्पर्द्धायां लिखित इति दन्तकथा, ततोऽस्य ख्रीष्टीयै-कादशशतकवर्तित्वं प्रतीयते । तदित्थमयं ख्रीष्टैकादशशतकषोडशशतकयोरन्त, रालेऽजायतेति वक्तव्यं भवति ।

अत्र ग्रन्थे प्रयुक्ताया भाषाया विचारेण शैल्याश्च परिशीलनेनास्य षोडश-शताब्दीतः किञ्चित्पूर्वकालिकत्वमिव प्रतिपन्नं भवति ।

भारतचम्पूग्रन्थे द्वादश स्तबकाः सन्ति । अत्र संहत्य उपसहस्रं श्लोकाः सन्ति । परिमाणे ततः किञ्चिदेव न्यूनं गद्यमपि विद्यते ।

भारतचम्पूः काव्यदृष्ट्या श्लाघनीया विद्यते । अत्र पद्यानां बन्धो यथैव दृढो गद्यानां माधुर्यं स्फुटश्लेषपूर्णत्वञ्च तथैव हृदयावर्जकम् । पद्यमेकं दृश्यताम्—

'जाग्रत्सोमककीर्त्तिसोमनिमिषत्पद्मावकाशात्ययात्
प्राप्तेन्दीवरनित्यवासघटितश्यामप्रभा श्रीरिव ।
पाञ्चालस्य सुता ततः परिजनैः सार्धं पुरः पश्यतां
राज्ञां बुद्धिमिवाधिरुह्य शिबिकां रङ्गस्थलीं प्राविशत् ॥'

न केवलं गाढबन्धोत्प्रेक्षयोरेव प्रयोगः, अतिशयोक्तिप्रयोगोऽपि सारल्यसह-कृतोऽस्य नितान्तहृद्यः । दृश्यताम्—

'सकलमपि वपुर्विभूष्य तन्व्याः सपदि सखी विपुलेक्षणाम्बुजाऽपि ।
चिरतरमनवेक्ष्य मध्ययष्टिं करधृतकाञ्चनकाञ्चिरेव तस्थौ ॥'

गद्यमाधुर्यमपि दृश्यताम्, व्यासादेशेन पाण्डवा एकचक्रायां पुर्यां स्थिताः, तस्या एव नगर्या वर्णनमिदम्—

'प्रावृषमिव बकबलाक्रान्ताम्, पातालनगरीमिव प्रत्यहं वर्धमानबलि-शोकाम्, अङ्गराज्यसीमामिव सूर्यतनयानुकूलप्रतिष्ठाम् रविरथाक्षधुरमिवैक चक्राम् ।'

कीदृशी सरसा सरला च शैली !

## अन्ये चम्पूग्रन्थाः

दक्षिणभारतीयाश्चम्पूग्रन्थान् अधिकसंख्यायां रचितवन्तः । तत्र--

### यात्राप्रबन्धः

समुद्रपुङ्गवदीक्षितः षोडशशतकोद्भवः स्वज्येष्ठमात्रा सह कृतां स्वीयां तीर्थ-यात्रामेव वर्णयन् यात्राप्रबन्धनामकं चम्पूग्रन्थं लिखितवान् । अत्र दक्षिणभारत-गततीर्थानां वर्णनं कृतं यद्विषयदृष्ट्या नवीनं व्यापकञ्च सदपि प्रकृतिवर्णने प्राचीनां परम्परामनुहरति ।

## वरदाम्बिकापरिणयचम्पूः

अयं चम्पूग्रन्थः ऐतिहासिकदृष्ट्या महत्त्वपूर्णः, तिरुमलाम्बाकृतश्च ।

## नीलकण्ठविजयचम्पूः

नीलकण्ठकविना कृतोऽयं ग्रन्थः समुद्रमन्थनं विषयीकरोति । स चायं नीलकण्ठः शिवलीलार्णवकर्त्तुरभिन्न एवेति ख्रीष्टसप्तदशशतकपूर्वार्द्धभागोऽस्य निश्चितः समयः ।

## विश्वगुणादर्शचम्पूः

पौराणिकीभिः कथाभिरुद्वेजिताः कवयो नूतनानि वस्तून्याधारीकृत्यापि चम्पूग्रन्थप्रणयनं कृतवन्तः । विश्वगुणादर्शचम्पूरेतादृशस्यैव प्रयासस्य फलम् । विश्वगुणादर्श-नामकस्यास्य ग्रन्थस्य रचयिता वेङ्कटाध्वरी । स हि काञ्चीवासी आत्रेयगोत्रोद्भवः रघुनाथसीतयोः पुत्रश्च । अस्य समयः ख्रीष्टसप्तदशशतकम् । अयं ग्रन्थः सर्वथा नूतनया शैल्या निबद्धः । अत्र विश्वावसुः कृशानुश्चेति द्वौ गन्धर्वौ विमानमारूढौ भारतीयानि तानि तानि तीर्थानि पश्यतः, तेषां तीर्थानां गुणान् दोषाँश्च वर्णयतः । तदेवमत्र भारतस्य भौगोलिकं वर्णनं तीर्थानां गुणदोषविमर्शश्च कृतो बोध्यः ।

## वैष्णवमतपोषकाश्चम्पूग्रन्थाः

यथा जैनमतावलम्बिनो निजमतपरिपुष्टये तत्प्रचाराय च तांस्तांश्चम्पू-ग्रन्थान् यशस्तिलकजीवन्धरचरितादीन् विरचितवन्तस्तथैव माध्वगौडीयशाखाया वैष्णवा विद्वांसः स्वमतप्रचारपुष्टिभ्यां तांस्तान् चम्पूग्रन्थान् निबबन्धुः । तत्र महाप्रभुचैतन्यस्य शिष्यो रघुनाथदासः मुक्ताचरित्र-नामकमेकं चारु चम्पूपुस्तकं कृतवान् । अत्र कृष्णद्वारा मुक्ताया वपनं तस्य क्षीरेण सेचनञ्च वर्णितम् । अस्यापि समयः षोडशशताब्दी एव सम्भाव्यते ।

कविकर्णपूरकृता आनन्दवृन्दावनचम्पूः विशालतनुरतिहृद्या च । अयं कर्ण-पूरः षोडशशतकावसानभागवर्त्ती ।

ख्रीष्टसप्तदशशतकोत्पन्नो जीवगोस्वामी गोपालचम्पू-नाम्ना प्रथमानं ग्रन्थं कृतवान्, यत्र कृष्णचन्द्रस्य समस्तमपि चरित्रम् आलङ्कारिक्या मार्मिक्या च पद्धत्या वर्णितम् । अत्र चम्पूग्रन्थे गौडीयशाखासम्मतभक्तिप्रकारस्य विवेचनमपि साधूदाहरणादिप्रदर्शनविधया कृतमिव । काव्यग्रन्थेन सहैवायं धर्मग्रन्थोऽपि वक्तुं शक्यते ।

सप्तदशशताब्द्याः परतोऽपि चम्पूकाव्यानां प्रणयनं प्रक्रान्तमेवावर्त्तत ।

वीरमित्रोदय-नाम्ना प्रसिद्धस्य नानाभागविभक्तस्य धर्मशास्त्रग्रन्थस्य कर्त्ता मित्रमिश्रनामा विद्वान् आनन्दकन्दचम्पूनामकं चम्पूग्रन्थमेकं प्रणीतवान् । अत्र ग्रन्थे कविपण्डितमित्रमिश्रेण भगवतः श्रीकृष्णचन्द्रस्य बाललीलानां रुचिरं वर्णन-मवसानभागे स्वाश्रयदातुः १६०५ ख्रीष्टीयतः १६२७ ख्रीष्टीयवर्षपर्यन्तम् ओरछा-नामके स्थाने राज्यं कृतवतो वीरसिंहदेवस्य वंशानुकीर्त्तनमपि कृतम् ।

मित्रमिश्रो ग्वालियरवासी शाण्डिल्यगोत्रो हंसमिश्रस्य पौत्रः परशुराममिश्रस्य च पुत्रः सनाढ्यब्राह्मणवंशोद्भवश्चासीत्। अस्य वीरसिंहदेवाश्रितत्वात् समयः खीष्टसप्तदशशतकपूर्वार्द्धभागः सिद्ध एव।

बङ्गदेशोद्भवो बाणेश्वरभट्टाचार्यः अष्टादशशतकोत्पन्नेषु वङ्गीयपण्डितेषु प्रथितकीर्त्तिरासीत्। अयमेव बाणेश्वरभट्टाचार्यः वारनहेष्टिंग्स-नामकेन बङ्गालराज्यपालेन नियुक्तो विवादार्णवसेतुं नाम विधिग्रन्थं कृतवान्। अनेन बाणेश्वरभट्टाचार्यस्य समयः १७७५ खीष्टीयवर्षमितो निर्धारितो भवति।

अयं बाणेश्वरः चित्रचम्पू-नामानमेकं वैष्णवभावनायास्तत्त्वस्य च प्रकाशकं ग्रन्थं निर्मितवान्। प्रेमभक्तिद्वारा भगवत्प्राप्तेरुपायोऽत्र काव्यवर्त्मना प्रकाशितः।

एतावत्पर्यन्तं येषां चम्पूकाव्यानां चर्चा कृता तदन्येऽपि कतिपये चम्पूग्रन्थाः श्रूयन्ते। यथा—

१. सोड्ढलः—कायस्थवंशोत्पन्नः कोङ्कणराजस्य मुम्मणिराजनामकस्याश्रित आसीत्, अतोऽस्य समयः १०६० खीष्टीयमितः कथ्यते। अनेन अवन्तिसुन्दरीकथाचम्पूः विरचिता।

२. अनन्तभट्टस्य भागवतचम्पूः। (एकादशशतकम्)।

३. समरपुङ्गवदीक्षितस्य तीर्थयात्राप्रबन्धचम्पूः (सप्तदशशतकम्)।



# गद्यकाव्यानि

संस्कृते पद्यसाहित्यमिव गद्यसाहित्यं परप्रकर्षम्। वेदकालेऽपि गद्यस्य प्रयोगः प्रचुरप्रचार आसीत्। संहिताग्रन्थेषु गद्यस्य भूयसो मात्राऽवाप्यते। अथर्ववेदस्य गद्यबहुलता सुप्रतीता।

पद्यं प्रति लेखकानामादरातिशयेन आयुर्वेदज्योतिषादि-वैज्ञानिकग्रन्थेषु यद्यपि पद्यापेक्षया गद्यस्य मात्रा स्वल्पतमा तथापि चरकादिषु गद्यभागोऽप्युपलभ्यत एव।

पद्यमयं हि ग्रन्थं पाठकाः सुखमभ्यस्यन्ति, कण्ठे स्थापयन्ति चेति पद्यमयो ग्रन्थस्तालल्याश्रिततया रोचकः प्रचारोपयुक्तश्च भवतीति धिया च पद्यं भूयसा प्रायुज्यत प्राचीनशास्त्रीयग्रन्थेष्वथापि गद्यस्य तत्रापि समावेशो दुरपह्नव एव।

संस्कृतगद्यस्य विकासक्रमेणोदाहरणानि यथा—'ऋतं च सत्यञ्चाभीद्धात्तपसोऽध्यजायत, ततो रात्र्यजायत, ततः समुद्रोऽर्णवः समुद्रादर्णवादधि, संवत्सरोऽजायत, अहोरात्राणि विदधद्विश्वस्य मिषतो वशी, सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्, दिवं च पृथिवीञ्चान्तरिक्षमथो स्वः।'

(ऋग्वेदस्य दशममण्डले कृष्णयजुर्वेदे च)

गद्यस्यास्य शैली भाषणप्रयोज्यशैलीसमाना। कठिनाः शब्दा भूयसाऽप्रयुक्ताश्च। तदनन्तरं ब्राह्मणग्रन्थेषु बाहुल्येन गद्यं प्रायुज्यत, यत्र संहिताग्रन्थापेक्षया सरलता समाविशत।

'यदेतन्मण्डलं नयति तन्महदुक्थं ता ऋचः स ऋचां लोकोऽथ यदेतदर्चिर्दीप्यते तन्महाव्रतं तानि सामानि स साम्नां लोकोऽथ य एष एतस्मिन्मण्डले पुरुषः सोऽग्निस्तानि यजूंषि संयजुषां लोकः।'

(मण्डलब्राह्मणे)

अथानन्तरमुपनिषदि गद्यस्य कथोपकथनरूपेण प्रयोगेषु क्रियमाणेषु स्फुटार्थता स्वीयभावप्रकाशनप्रवणता चाधिकभावेन समागता, यथा—

'श्वेतकेतुर्हारुणेय आस तं ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यम्, न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवति स ह द्वादशवर्ष उपेत्य चतुर्विंशतिवर्षः सर्वान् वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय। तं ह पितोवाच श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यः।'

(छान्दोग्योपनिषदि ६।१–२)

एषां वैदिकगद्योद्धरणानां पर्यालोचनेन सुखमवगन्तुं शक्यते यद्गद्यस्य स्वरूपं क्रमशः स्पष्टमजायत। संहिताया भाषांऽशतो व्याकरणलक्षणच्युता, तदपेक्षया ब्राह्मणानां भाषा लक्षणशालिनी स्पष्टा च, उपनिषदां भाषा तु

व्याकरणसम्मता स्फुटतमा चेति क्रमिकविकासे पर्याप्तं निदर्शनम्। एवं वैदिकगद्यैः प्रशस्तीकृते वर्त्मनि लौकिकगद्यस्याविर्भावो जातः। लौकिकगद्यस्य प्रथमः प्रयोगो निरुक्ते कृतः, यथा—

'सर्वरसाः अनुप्राप्ताः पानीयमिति यथो एतदविस्पष्टार्था भवन्तीति नैष स्थाणोरपराधो यदेनमन्धो न पश्यति, पुरुषापराधः स भवति, यथा जानपदीषु विद्यातः पुरुषविशेषो भवति, पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति।' (नैघण्टुककाण्डे)

एतत्कालपर्यन्तं गद्यं काव्यभाषारूपेण प्रयुक्तं नासीत्, केवलं व्यवहारभाषारूपेण प्रयुज्यते स्म। अत एव तत्र चमत्कारातिशयमाधातुं कोऽपि प्रयासः क्रियमाणो नोपलक्ष्यते। अयमेव क्रमः शास्त्रीयगद्येऽप्युपलभ्यते। शास्त्रीयगद्येषु साहित्यिकचमत्कारानाधातुं न कोऽपि प्रयासः कृतः। एतादृशगद्यस्य निदर्शनानि कतिचित् कालक्रमेण प्रस्तूयन्ते।

'ये पुनः कार्याभावानिर्वृत्तौ तावत्तेषां यत्नः क्रियते। तद्यथा घटेन कार्यं करिष्यन् कुम्भकारकुलं गत्वाऽऽह—कुरु घटं कार्यमनेन करिष्यामीति। न तद्वच्छब्दान् प्रयुयुक्षमाणो वैयाकरणकुलं गत्वाऽऽह कुरु शब्दान् प्रयोक्ष्ये।' (महाभाष्यस्य पस्पशाह्निके)

अनेन गद्येन पठ्यमानेन तात्कालिकी गद्यस्य विकसितपूर्णरूपता प्रतीयते। इतः परं गद्यस्य प्रौढिस्तार्किकैरुपपादिता। यथा शबरस्वामिनो भाष्ये—

'इच्छयाऽऽत्मानमुपलभामहे, कथमिति? उपलब्धपूर्वे ह्यभिप्रेते भवतीच्छा। यथा मेरुमुत्तरेण यान्यस्मज्जातीयैरनुपलब्धपूर्वाणि स्वादूनि वृक्षफलानि, न तानि प्रत्यस्माकमिच्छा भवति।'

एतावत्पर्यन्तं गद्यस्य यो विकासक्रमः प्रदर्शितः स शास्त्रीयगद्यविषयो लौकिकगद्यविषयो वा मन्तुं शक्यते। साहित्यिकगद्यं तु सर्वप्रथमं शिलालेखेषु प्राप्यते। रुद्रदाम्नः शिलालेखे या गद्यस्य शैली दृश्यते सा नितान्तप्रौढा ओजोगुणगुम्फिता च।

गद्यं साहित्ये प्रयुज्यमानं सदेव गद्यकाव्यनामकं काव्यस्य भेदमकल्पयत्। साहित्यप्रयोगश्च गद्यस्य शिलालेखेष्वेवेदं प्रथमतया कृतः प्रतीयते। सुबन्धोर्भट्टबाणस्य च गद्यमपेक्ष्य बहुकालात् पूर्वमेव रुद्रादाम्नः शिलालेखोऽखिन्नगद्यशैलीनिदर्शनीभूतोऽलिख्यत्।

हरिषेणस्य प्रयाणप्रशस्तौ विजयस्तम्भवर्णने—

'सर्वपृथिवीजयजनितोदयव्याप्तनिखिलावनितलां कीर्त्तिमितस्त्रिदशपतिभवनगमनावाप्तललितसुखविचरणामाचक्षाण इव भुवोबाहुरयमुच्छ्रितः स्तम्भः।'

इत्थं वैदिकसाहित्यत आरभ्य प्रयागप्रशस्तिलेखकालपर्यन्तं गद्यसाहित्यं विकसद्रूपतया वर्त्तमानं प्रतीयते।

## संस्कृतगद्यस्य वैशिष्ट्यम्

यत्र भाषान्तरगद्यानि सरलभावेनार्थप्रत्ययसमर्थानि विस्तृतरूपाणि च भवन्ति तत्र संस्कृतगद्यं चमत्कारकारिवस्तुव्यञ्जनविषया लघुकायानि भवन्ति संस्कृतगद्यस्य लघुत्वोपबृंहितं समासकृतार्थाभिव्यक्यपूर्णत्वं च भाषान्तरगद्येदुर्लभम्। 'ओजः समासभूयस्त्वमेतद् गद्यस्य जीवितम्' इति दण्डिप्रतिपादितदिशा सजीवगद्यं संस्कृतभाषानिबद्धमेव सम्भवति। तच्चेदं समासभूयस्त्वं मात्रातारतम्येन संस्कृतभाषायां प्रारम्भकालत एव दृश्यत इतीदमीयं गद्यं प्रारम्भकालत एव सजीवम्।

यावत्पर्यन्तं पद्यैश्चमत्कारः श्रव्यसङ्गीतध्वनिमधुरिम्णा प्रकटीक्रियते तावद् गद्यं स्वप्रौढिद्वारा प्रकटयतीति तदुभयपरिशीलनप्रतीतम्। इदमेव च गद्यसाहित्यस्य वैरल्ये कारणं यत् सत्यप्यर्थगौरवस्यांशिके विरहे पद्यानि स्वसङ्गीतमाधुर्येणांशिकचमत्कारसद्भावेन च चमत्कारमुत्पाद्य कृतित्वमाकलयन्ति, गद्यानि तु सत्येव सर्वांशचमत्कारे बन्धगाढत्वे च चमत्कारं जनयेयुरिति कवयो गद्ये साफल्यं कष्टसाध्यं सम्भाव्य भूयसा पद्यरचनायामेव प्रवृत्ताः। अत एव गद्यं कवीनां निकषं वदन्ति।

सम्प्रति कतिचन प्रमुखगद्यकाव्यानि स्वरूपतो रचयितृपरिचयप्रदानद्वारा च परिचाययितुमिष्यन्ते। तत्रेदं प्रथममवगन्तव्यं यत् साहित्यिकसंस्कृतगद्यं शिलालेखेष्वेव प्रथमप्रकाशमध्यगच्छत्। हरिषेणस्य शिलालेखे प्रयागप्रशस्तौ च गद्यस्य यद्रूपं प्राप्यते तदेवाग्रेतनैः कविभिः परिमार्जितं सत् साहित्यिकगद्यस्य गौरवं वर्धयितुं प्राक्रमत। साहित्यिकगद्यस्याद्यो ग्रन्थः सुबन्धोर्वासवदत्ता एव उपलभ्यते।

### सुबन्धुः

गद्यस्य साहित्यिकं स्वरूपं प्रकटीकृत्यात्मानं गौरवान्वितं कृतवत्सु कविषु सुबन्धुरेव प्रथमत्वेन प्रतिपन्नः सर्वैः। तस्य सुबन्धोः समयः कः? तत्र विचार्यते—

१. अयं सुबन्धुः स्वग्रन्थे—

'सारसवत्ता विहता नवका विलसन्ति चरति नो कङ्कः।
सरसीव कीर्त्तिशेषं गतवति भुवि विक्रमादित्ये॥'

इत्यादिना यं विक्रमादित्यं स्मरति स कतमो विक्रमादित्यः? अस्मिन् प्रसङ्गेऽधिका आलोचका मिहिरकुलनामकस्य हूणराजस्य पराजेता बालादित्यसखो यशोधर्मा एवायं विक्रमादित्य इति निर्णयन्ति, यशोधर्मणः समयश्च षष्ठशतकस्य मध्यभाग इति निर्णयन्ति। एतेन सुबन्धोस्समयः षष्ठशतकस्य पूर्वभाग इति वक्तुं शक्यते।

२. बाणभट्टः सुबन्धोः कथां 'धिया निबद्धेयमतिद्वयी कथा' इत्येवं स्मरति। बाणः सप्तमशतकोत्पन्न इति सुबन्धोस्ततः पूर्ववर्त्तित्वेन सुबन्धोः षष्ठशतकपूर्वभागभवत्वं युज्यत एव।

३. सुबन्धुः स्ववासवदत्तायां श्लेषद्वारा उद्योतकरं स्मरति—'न्यायस्थितिमिवोद्योतकरस्वरूपाम्।' उद्योतकरस्य चास्य समयः षष्ठसप्तमशताब्द्योरन्तराले मन्यते। एभिर्निदर्शनैः सुबन्धोः समयः षष्ठशतकं मन्यते। आदिमचरमभागादि विशिष्य निर्णयस्तु स्फुटप्रमाणाभावादसुकर एव।

## वासवदत्ता

वासवदत्तानामक एक एव ग्रन्थः सुबन्धुकृतत्वेन प्रथते। कल्पितकथाया अस्या आख्यायिकाया नामकरणमुदयनकथाप्रसिद्धाया वासवदत्ताया नामानुध्यानमूलकमेवेति मदीयस्तर्कः। अस्या एव वासवदत्तायाः प्रशंसायां बाणभट्टो लिखति हर्षचरिते—

'कवीनामगलद्दर्पो नूनं वासवदत्तया।
शक्त्येव पाण्डुपुत्राणां नूनं वासवदत्तया॥'

शब्दार्थालङ्काररससौष्ठवैर्वासवदत्तायास्तुलायां कोऽप्यन्यो गद्यग्रन्थो नास्तीति तदध्ययनेन प्रतिभासते। तत्र--

शब्दसौष्ठवं यथा—'अभूदभूतपूर्वः सर्वोर्वीपतिचक्रचूडामणिश्रेणीशाणकोणकषणनिर्मलीकृतचरणनखमणिर्नृसिंह इव दर्शितहिरण्यकशिपुक्षेत्रदानविस्मयः, कृष्ण इव कृतवसुदेवतर्पणः, नारायण इव सौकर्यसमासादितधरणिमण्डलः, कंसारातिरिव जनितयशोदानन्दसमृद्धिः।

विरोधाभासो यथा—'विद्याधरोऽपि सुमनाः, धृतराष्ट्रोऽपि गुणप्रियः, क्षमानुगतोऽपि सुधर्माश्रितः, बृहन्नलानुभावोऽप्यन्तःसरलः, महिषीसम्भवोऽपि वृषोत्पाद्यः, तरलोऽपि महानायको राजा चिन्तामणीर्नाम।'

परिसङ्ख्या यथा—'छलनिग्रहप्रयोगो वादेषु, नास्तिकता चार्वाकेषु, कण्टकयोगो नियोगेषु, खलसंयोगः शालिषु द्विजिह्वसङ्गृहीतिराहितुण्डिकेषु, नेत्रोत्पाटनं मुनीनाम्, द्विजराजविरुद्धता पङ्कजानाम्, सूचीभेदो मणीनाम्।'

वासवदत्ताया आख्यायिकाग्रन्थतया कतिचन श्लोका अपि यत्र तत्रात्र निवेशिता विद्यन्ते, यैरस्य सुबन्धोः पद्यप्रणयनपाटवं प्रकटं प्रतीयते। यथा—

'अविदितगुणाऽपि सत्कविभणितिः कर्णेषु वमति मधुधाराम्।
अनधिगतपरिमलाऽपि हि हरति दृशं मालतीमाला॥'
'विषधरतोऽप्यतिविषमः खल इति न मृषा वदन्ति विद्वांसः।
यदयं न कुलद्वेषी स कुलद्वेषी पुनः पिशुनः॥'

सत्यमिदं यदेवञ्जातीयको वाक्यविन्यासः क्लिष्टतां भजते, कृत्रिमतामाश्रयति, वाचकान् क्लिश्नाति, तथापि कल्पनाप्रौढिशब्दचयनालङ्कारसज्जाभिरयं कविः सकलसहृदयस्तुत्य इति निर्बाधं वक्तुं शक्यते।

इदमपि सत्यं यद् बाणस्य रमणीयार्थप्रतिपादनसमये रमणीयशब्दसृष्टिः, प्रसादः काव्यापेक्षिता गुणांश्च सुबन्धौ न सन्ति, न-वा दण्डिनः पदलालित्यादिकमेव विद्यते, तथापि विद्वज्जनहृदयहारिश्लेषादिविविधालङ्कारसर्गतः सुबन्धुः पण्डितपाठकानां हृदयान्याक्रष्टुमलमिति ।

## बाणभट्टस्य चरितम्

प्राचीनश्चीनदेशोद्भवो यात्री ह्वेनत्सांगनामा ६२९ तः ६४५ खीष्टीयवर्षपर्यन्तं भारतं बभ्राम । स हि स्वयात्रावर्णनप्रसङ्गे उत्तरभारतसम्राजो हर्षदेवस्य सविस्तरं वर्णनं कृतवान् । महाराजहर्षदेवः ६०६ ईशवीयसमयादारभ्य ६४८ पर्यन्तं थानेश्वरनामनि स्थाने राज्यं कृतवान् । स चायं हर्षः बाणभट्टेन स्वीये हर्षचरिते सविशेषं वर्णितः । एतेन बाणभट्टस्य तत्समयवर्त्तित्वं प्रमीयते । तथा च बाणस्य समयः सप्तमशतकं सिद्धयति । बाणभट्टो वात्स्यायनवंशे जन्म गृहीतवान् । तत्पूर्वजा विहारप्रान्तस्थितस्य शोणाख्यस्य हिरण्यबाहूपरनामकस्य महानदस्य तटे प्रीतिकूटनामके ग्रामे न्यवसन् । तस्य पिता चित्रभानुः, माता च राज्यदेवी आसीत् ।

बाणेन हर्षचरिते यः स्ववंशपरिचयः प्रदत्तः स निम्नलिखितवंशवृक्षतः सुखावगम्यः ।




कादम्बर्यां वंशवर्णने पाशुपतस्य नाम नायाति, मन्ये पाशुपतोल्लेखयुतः श्लोको लेखकप्रमादादिना केनापि हेतुना परिभ्रष्टः स्यात् ।

बाणभट्टो देशाटनं बह्वकामयत, अतस्तं लोको दुराचारं मत्वा बहूपजहास । देशभ्रमणेन तस्य प्रज्ञानप्रकर्षे महाँल्लाभो जातः । देशाटनात् परतः स स्वगृहेऽवस्थाय शास्त्राणामध्ययने प्रावर्त्तत ।

श्रीहर्षनृपतिना कृते आह्वाने स तत्समीपं गतः । प्रथमं तु लोकैराचरितं बाणविगानं मनसिकृत्य श्रीहर्षस्तं न साधु सत्कृतवान्, परन्तु पश्चात् तत्तद्गुणगणपरिचये जाते नृपस्तं बहु मेने ।

बाणस्य जीवनं दरिद्रतामयं नासीत्। तस्य समीपे पैतृकी सम्पत्तिः प्रचुरमात्रायामवर्त्तत। राजाश्रयलाभेनापि साऽनुदिनमैधत। अतस्तदीयं जीवनं सुखपूर्वकमत्यगात्।

उत्तरार्धं-कादम्बरी बाणभट्टस्य पुत्रेण कृता। बाणेन हर्षचरिते स्वचरितप्रस्तावे पुत्रस्य नाम नोल्लिखितम्। डा० बूलरमहोदयानुसन्धानेन बाणतनयस्य नाम भूषणभट्ट इत्यायाति। भण्डारकरमहाशयस्तु पुलिनभट्टनामानमाहुः। केचिदन्ये तं पुलिन्ध्रनाम्ना स्मरन्ति।

हर्षचरिते बाणो निजं पुत्रं न स्मृतवानत्र कारणमिदमपि सम्भवति यत् तत्कालपर्यन्तं तेन पुत्रलाभो न कृतः स्यात्।

बाणभट्टेन ग्रन्थद्वयमेव गद्यमयं प्रणीतम्—हर्षचरितं, कादम्बरी चेति। चण्डिकाशतकम्, पार्वतीपरिणयः, मुकुटताडितकम् इति त्रयोऽन्ये प्रबन्धास्तन्नाम्ना प्रथिता अपि वस्तुतो न तस्य कृतयः।

पार्वतीपरिणयो हि सप्तदशशतकोत्पन्नेन केनचिद् वामनभट्ट-बाणेन कृतः। मुकुटताडितकं यद्यपि नलचम्पूटीकाकृता चन्द्रपालेन स्मृतं तथापि नासौ बाणकृतिरिति विदुषां सम्मतिः। चण्डिकाशतकम् अपि बाणकृतत्वेन स्वीकर्त्तुं नोत्सहन्ते सुधियोऽतो ग्रन्थद्वयमेव बाणस्येति निश्चित्य वक्तुंशक्यते।

## बाणस्य हर्षचरितम्

'करोम्याख्यायिकाम्भोधौ जिह्वाप्लवनचापलम्' इति हर्षचरितोक्तदिशा हर्षचरितस्याख्यायिकाग्रन्थरूपत्वं प्रतीतम्। नेदं साधारणं चरितपुस्तकमपि तु सरसं काव्यमिति वर्णनेषु सजीवतामानेतुमत्र प्रयासः कृतो वेद्यः।

अत्र ग्रन्थेऽष्टौ उच्छ्वासास्तत्राद्ये उच्छ्वासत्रये बाणेन स्वीया कथा लिखिता। चतुर्थादुच्छ्वासादारभ्य समाप्तिपर्यन्तं हर्षस्य चरितं वर्णितम्। हर्षस्य पितरौ यशोमती-प्रभाकरवर्धनौ आस्ताम्। ज्येष्ठो भ्राता राज्यवर्धनः स्वयं हर्षवर्धनः स्वसा राज्यश्रीः। चतुर्थे उच्छ्वासे राजकुमारयोस्तत्स्वसुश्च जन्मवृत्तानि, पञ्चमे राजकुमारयोर्विजययात्रा। हूणानां जयार्थं गते राज्यवर्धने हर्षे च मृगयां गते प्रभाकरवर्धनो मृतकल्पो जात इति श्रुत्वा हर्षो मृगयातो निवृत्तः। षष्ठ उच्छ्वासे राज्यवर्धनस्य परावर्त्तनम्, ग्रहवर्मणो मृत्युः, राज्यश्रियो वन्दीभावः, राज्यश्रिय उद्धाराय राज्यवर्धनस्य प्रस्थानम्, गौडेश्वरशशाङ्कद्वारा तस्य वधश्च। सप्तमे हर्षस्य दिग्विजययात्रा, मालवेश्वरविजयः, अष्टमे राज्यश्रियः प्राप्तिः, दिवाकरमित्राख्यबौद्धभिक्षुणा सङ्गतिः। इतीयती मूलकथा विस्तरेणात्र वर्णिता।

बाणस्य कादम्बरीवद् इदमपि हर्षचरितमपूर्णमेव स्थितम्। तत्रापि कारणं कवेरसामयिकं मरणमेव मन्यन्ते विचारकाः। ऐतिहासिकांशं वर्जयित्वा सन्दर्भोऽयं सर्वथा काव्यलक्षणोपेतः।

'ओजः समासभूयस्त्वमेतद् गद्यस्य जीवितम्' इति गद्यं विशेषयतामालङ्कारिकाणां मते गद्यलेखकानां मूर्धन्यो बाणः गद्यकाव्यानां प्रथमं च हर्ष-

चरितम् । पाञ्चालीरीतेर्भक्तो यथा बाणस्तथा नापरः कोऽपीति च । व्यञ्जनाप्रयोगे वक्रोक्तिरचनायां च बाणः सकलकविमूर्धन्यः ।

हर्षचरितं केवलमुत्तमगद्यकाव्यभावेनैव नात्यादरणीयमपि तु सप्तमशतकस्य स्फुटेतिहासभावेनापि प्रशस्यतमम् ।

हर्षचरिते यदैतिहासिकमितिवृत्तं वर्णितं तत्कस्मिंश्चिदप्यंशे तात्कालिकेतिहासान्न भिद्यते । हर्षचरिते तात्कालिकोत्तरभारतस्य स्थितिः प्रकटं प्रकाश्यते । सप्तम उच्छ्वासे वन्यग्रामाणां तत्रत्यगृहाणां च वर्णनं नितान्तं सत्यं सरसञ्च । तस्मिन् कालेऽपि भारतं सांस्कृतिकदृष्ट्या रमणीयमासीदेतत्सत्यं तदा प्रतीयते यदा वयं हर्षचरिते वेशभूषयोः आचारविचारयोः सेनासंस्थानस्य च वर्णनं पठामः, राज्यश्रियो विवाहावसरे शिल्पिभिः स्वानुरूपाणि यावन्ति भूषणानि समर्पितानि, रजकैश्च यादृशानि निबध्य रञ्जितानि वस्त्राणि प्रस्तुतानि तेषां वर्णनेन तात्कालिकी भारतीया सांस्कृतिकी स्थितिः करामलकवद् भासते ।

## बाणभट्टस्य कादम्बरी

'बाणस्य कादम्बरी कथाग्रन्थः । स्वयमेव कविना—'धिया निबद्धेयमतिद्वयी कथा' इति कादम्बर्याः कथाग्रन्थत्वमुक्तम् । कादम्बर्यामुक्ताकथा गुणाढ्यकृताया बृहत्कथाया गृहीता, साम्प्रतमुपलब्धिर्यद्यपि बृहत्कथाया नास्ति तथापि भूतभाषामयी अद्भुतार्था च सा बृहत्कथा बाणकाले लभ्याऽऽसीदिति वक्तुं शक्यते । बृहत्कथातो नृपसुमनसः साधारणीं कथामादाय बाणभट्टः काव्यकलानैपुण्येन तस्यां विशेषानुत्पाद्य कादम्बरी निबद्धवान् ।

कादम्बर्याः कथा जन्मत्रयवृत्तान्तमङ्गीकरोतीति जटिला । एका कथा कथान्तरमुद्भावयतीति प्रथमा कथा सावशेषैव द्वितीयस्याः कथाया अवसानं प्रतीक्षमाणा तिष्ठति, एवमपरापि कथेति कथासाङ्कर्यमत्र विद्योतते ।

विदिशायां शूद्रको नमा राजाऽऽसीत् । एकदा चाण्डालकन्यका एकं पञ्जरस्थं शुकं तस्मै उपाहरत् । नृपेणागृहीतः स शुकस्तस्मै स्वपूर्वजन्म कथामाख्यातवान् । जन्मकाल एव मम माता मृता, तातोऽपि लुब्धकैर्मारितः, वृक्षादधः पतितं भूमौ सरन्तं मां जाबालिशिष्यान्यतमो दययोत्थाप्य स्वगुरोराश्रमं नीतवान् । जाबालिर्मद्वृत्तान्तमित्थमकथयत् । उज्जयिन्यां तारापीडो नाम राजाऽऽसीत्, तस्य स्त्री विलासवती, शुकनासश्चामात्यः । प्रौढे वयसि नृपस्य पुत्रः चन्द्रापीडो नाम जातः । शुकनासस्य सुतश्च वैशम्पायनो जातः । तौ प्राप्तवयसौ गुरुकुले शिक्षितौ । शुकनासो राजपुत्रं यथोचितमुपदिष्टवान् । दिग्विजयप्रवृत्तो राजकुमारश्चन्द्रापीडः गन्धर्वमिथुनमनुधावन् एकं सरोऽच्छोदं दृष्टवान् । तत्र महाश्वेता नाम कापि सुन्दरी तपःप्रवृत्ता दृष्टा या स्ववृत्तान्तमुक्तवती । मया पुण्डरीकनामके मुनितनये स्नेहः कृतः, स, लोकान्तरं गतः, तमनुमत्तुंकामां मां कापि दिव्याङ्गना 'भूयोऽपि युवयोः सङ्गमो भावीति' मां विबोध्य तच्छरीरं लोकान्तरमनैषीत् । महाश्वेतैव चन्द्रापीडाय

कादम्बरीवृत्तमुक्तवती। कादम्बरीचन्द्रापीडयोः साक्षात्कारे जाते द्वयोरनुराग उदियाय। तदैव पितुर्दूत आगते चन्द्रापीडः स्वां राजधानीं प्रति निवृत्तः। कादम्बर्यां चन्द्रापीडविरहे देहं त्यक्तुमुद्यतायां तत्सखी पत्रलेखा तां सान्त्वयित्वा चन्द्रापीडस्य समीपमागत्य तदवस्थां तस्मै न्यवेदयत्।

एतावती कथा बाणेन लिखिताऽग्रेतनी तत्तनयेन।

चन्द्रापीडो राजधानीं गच्छन् वैशम्पायनं तदनुरोधान्महाश्वेताया आश्रम एव स्थापितवान्। पत्रलेखया सह यदाऽसौ पुनस्तत्रायातस्तदा वैशम्पायनं तत्र दृष्ट्वा परं शोकमाप्तो महाश्वेतया सूचितो यत्तव सखा ब्राह्मणकुमारो मां कामयमानो मया शुको भवेति शप्तः शुको भूतः। तच्छ्रुत्वैव चन्द्रापीडः प्राणान् विससर्ज। अथ कादम्बरी तदवस्थं चन्द्रापीडं दृष्ट्वा बह्वव्यथत। ततः कादम्बरी-महाश्वेते 'शापवशाच्चन्द्रापीडः प्राणैर्वियुक्तः, अस्य देहः संरक्ष्यताम्, पुनरपि युवयोः युष्मद्दयिताभ्यां सह सङ्गमो भावी'ति दिव्यां वाचं श्रुत्वा तथैव तस्थतुः। इन्द्रायुधो नाम चन्द्रापीडस्याश्वस्तत्क्षणं तदेव सरोऽगाहत। तत्स्थाने पुण्डरीकस्य सखा कपिञ्जलः सरसो निर्गत्य कादम्बरीमहाश्वेते सूचितवान् यत् चन्द्रापीडश्चन्द्रस्य, वैशम्पायनः पुण्डरीकस्य, इन्द्रायुधश्च कपिञ्जलस्यावतारा आसन्।

एवं महर्षिमुखात् कथायाः श्रवणानन्तरं मम 'अहमेव प्राक् पुण्डरीकावतारो वैशम्पायन' इति ज्ञानमजायत।

साम्प्रतं शापावधेः प्राप्तत्वात् शूद्रकस्य देहत्यागः कादम्बरीभुजान्तरालगतस्य चन्द्रापीडस्य सुप्तोत्थितस्येव विबोधः; पुण्डरीकस्य समागमनञ्चा जायत।

ततश्चन्द्रापीडः कादम्बरीं पुण्डरीकश्च महाश्वेतामुपयेमाते, अविरहितं च ततः प्रभृति तद्दम्पतियुगलमिति कादम्बर्याः कथा।

## कादम्बर्या विशिष्टता

कादम्बर्याः पात्रचित्रणम् अत्युत्तमम्। पात्राणि खल्वत्र तावत्या सजीवतया चित्रितानि यथा तानि प्रत्यक्षदृश्यतामिव यान्ति। राजा शूद्रकः, जाबालिः, तारापीडः, महाश्वेता, कादम्बरी चेति सर्वाण्यपि पात्राण्यनेन तथा वर्णितानि यथा तानि वाचकानां पुरःस्थितानीव प्रतिभासन्ते। एकत्र पाठको यदि शबरसेनाप्रयाणं पठित्वा विस्मयाविष्टो जायते, जाबालेराश्रमं दृष्ट्वा स्तिमितान्तःकरणो भवति, तदाऽपरत्र स एव कादम्बर्या महाश्वेताया वा वर्णनं पठित्वा लोकान्तरसमुपस्थित इवाच्छोदसरसो वर्णनं श्रुत्वा कुतुकाकुल इव सुधासिक्त इव च जायते। एकतो यदि शुकनासोपदेशमधीत्य हृदयं निर्मलदर्पणतां नयति तदाऽपरत्र राजान्तःपुरवर्णनं श्रुत्वा हृदयं रञ्जयति। प्राकृतिकवस्तूनां वर्णनेऽपि बाणस्य कादम्बरी न कुतोऽपि हीयते। जाबालिमुनेराश्रमे—'परिचितशाखामृगकराकृष्टिनिष्काश्यमानप्रवेश्यमानजरदन्धतापसम्' इति दृशोः पुरस्तात्

किमपि प्राणिभेदानामैक्यमिव दृश्यते । 'कदम्बशाखाधिरूढहरिक्तजलप्रपातम्' इति च पठित्वा वाचकः सद्यस्तत्र सन्निहितमिवात्मानं भावयति ।

कवितायां यावत्कलापक्षस्य विभावनं तावत्यंशेऽलङ्काराणां सन्निवेशोऽर्थचयने शब्दगुम्फने च न केवलं गद्यकाव्यान्येवापि तु समस्तमपि संस्कृतभाषानिबद्धं वाङ्मयमतिशय्य वर्त्तते कादम्बरीति कथनं नात्युक्तिं स्पृशति ।

'नवोऽर्थो जातिरग्राम्या श्लेषोऽक्लिष्ट स्फुटो रसः ।
विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुर्लभम् ॥'

इति दुर्लभत्वेन यदुक्तं तदत्र कादम्बर्यां सुलभमिति महद्गौरवजनकमस्य कवेः ।

बाणस्य कादम्बर्यां तत्तदलङ्काराणां यादृशो मनोरमः प्रयोग संस्कृतसाहित्येऽन्यत्र दुराप इति प्रागुक्तम् । तत्रोदाहरणरूपेण कतिचनोद्धरणानि प्रस्तूयन्ते, यथा—

'प्रावृषमिव घनकेशजालाम्, शरदमिव विकसितपुण्डरीकलोचनाम्" अत्र यादृशः श्लेषः, तदुत्थापिता चोपमा यादृशी, तदुभयं मिलित्वा स्वर्णे सुगन्धं सृजतीव । अतिशयोक्तेर्बहुलेऽपि प्रयोगे—

'अथ परिसमाप्तमीक्षणयुगलस्य द्रष्टव्यदर्शनफलम्, आलोकितः खलु रमणीयानामन्तः, दृष्ट आह्लादनोयानामवधिः, वीक्षिता मनोहराणां सीमान्तलेखा, प्रत्यक्षीकृता प्रीतिजननानां परिसमाप्तिः, विलोकिता दर्शनीयानामवसानभूमिः ।' सुभगपदावलिगुम्फितेयमतिशयोक्तिः श्रुतमात्रैव मनो मदयति ।

रशनोपमाया निम्नलिखिते प्रयोगे यौवनवर्णनस्य काऽपि नवैव विच्छित्तिः—

'क्रमेण च कृतं मे वपुषि वसन्त इव मधुमासेन, मधुमास इव नवपल्लवेन, नवपल्लव इव कुसुमेन, कुसुम इव मधुकरेण, मधुकर इव मदेन नवयौवनेन पदम् ।'

परिसंख्यायाः प्रयोगेऽप्ययं कविः 'निरन्तरश्लेषघनां सुजातिं महास्रजं चम्पकपुष्पकैरिव' रचितां कवितामुपस्थापयति, यथा—

'यत्र वयःपरिणामे द्विजपतनम्, उपवनचन्दनेषु जाड्यम्, अग्नीनां भूमिमत्त्वम्, एणकानां गीतव्यसनम्, शिखण्डिनां नृत्यपक्षपातः, भुजङ्गमानां भोगः, कपीनां श्रीफलाभिलाषः, मूलानामधोगतिः ।'

न केवलमलङ्काराणामुपस्थापन एव, अपितु कविताया उद्देश्यस्य 'सत्यं शिवं सुन्दरमि'ति विशेषितस्य लोककल्याणस्यापि निवेशने बाणो जागरूक इति तदीयकादम्बरीपरिशीलनेन प्रतीयते ।

पुण्डरीकवियोगे तपन्त्या महाश्वेताया हार्दिकभावानामुपस्थापनेन बाणो वाचकानां हृदयेषु भावस्थिरस्य जननान्तरसौहृदस्य स्वरूपम्, अतीतवर्त्तमानयोर्जीवनयोरेकसूत्रनद्धं प्रणयप्रकर्षम्, सत्ये प्रेमणि मर्यादाया अनुल्लङ्घनं च स्थिरयति । चन्द्रापीडवियोगे कादम्बर्या अवस्थां वर्णयन्नयं कविः मनोविज्ञानस्य ज्ञानं प्रकाशयति ।

अयं बाणो यत्र दीर्घसमासां वाक्यावलिं विन्यस्य वाचकानां पुरतो वर्णन-बाहुल्यस्तूपमुपस्थापयति तत्रैव लघुवाक्यानां प्रयोगेऽपि न मन्दायते। एतेन तत्प्रतिभायाः सर्वमुखत्वं प्रकटीभवति। कपिञ्जलः पुण्डरीकं कामपीडित-मुपदिशति—

'नैतदनुरूपं भवतः, क्षुद्रजनक्षुण्ण एष मार्गः, धैर्यधना हि साधवः, किं यः कश्चित्प्राकृत इव विक्लीभवन्तमात्मानं न रुणत्सि, क्व ते तद् धैर्यम्, क्वासा-विन्द्रियजयः।'

एवमेव शुकनासोपदेशे—'इयं हि लक्ष्मीः पारिजातपल्लवेभ्यो रागम्, इन्दु शकलादेकान्तवक्रताम्, कालकूटान्मोहनशक्तिम्, मदिराया मदम्, उच्चैः-श्रवसश्चञ्चलताम् इत्येतानि सहवासपरिचयवशाद् विरहविनोदन, चिह्नानि गृहीत्वेव सागरादुत्थिता।'

'लब्धापि दुःखेन पाल्यते, न परिचयं रक्षति, नाभिजनमीक्षते, न रूप-मालोकयते, न शीलं पश्यति, न वैदग्ध्यं गणयति।'

न केवलमेतावदेव, उत्तमानामिव नीचानामपि पात्राणां वर्णने सजीवत्व-मनेन सृष्टम्, अच्छोदादिविविधप्राकृतिकवस्तुवर्णने साधु साफल्यमासादितम्, सर्वतः प्रकृष्टं चास्य सर्वत्र समानं भाषासमृद्धत्वम्।

भाषासमृद्धिमालोक्यैव पाश्चात्त्या बाणस्य कादम्बरीमरण्यानीं मन्वते। तेषां मते बाणस्य गद्यं खलु तद् भारतीयमरण्यं यत्र क्षुपोच्छेदं विना मार्गो दुर्लभः, यत्र च बहवः अप्रतीतार्थाः शब्ददन्दशूकास्तत्र प्रविविक्षून् प्रतीक्षमाणाः निलीय स्थिताः।

वस्तुतस्तु बाणस्य गद्यं महाविशालसप्तभूमराजप्रासादोपमम्, यत्र क्वचन प्रकोष्ठे रमणीयाकृतिविशिष्टपरिधानोपबृंहितं रमणीचित्रम् क्वचिन्मृगयोप-युक्तनानाजीवस्य चित्राणि, क्वचित्कलकलनादिनी खरस्रोता नदी चित्रिता, क्वचित्तपोभूमिर्निदर्शिता, क्वचिच्च निष्पतच्छरभीषणा रणभूमिरङ्किता। तत्र प्रासादे प्रविष्टश्च कश्चित् पामरो यदि किमप्यलौकिकं चित्रं वीक्ष्य भयमनुभवति, तद्भूतनं च तेनैव दोषेण दूषयति तदा न तत्र भवनशिल्पिनो दुष्यन्ति, तथैव कादम्बर्यामपि बोध्यम्।

संस्कृतभाषाकविषु बाणभट्टसमानः कोऽपि शब्दचित्रप्रस्तुतो सिद्धहस्तो नाभूदिति कथनं नितान्तसत्यम्। साधारणतोऽन्ये कवयो घटनां वर्णयन्ति, बाणस्तु चित्रोपस्थापनद्वारा कथा विस्तारयति, अत एव तस्य कथा मन्दं चलति।

प्रभाते जायमाने कवयोऽन्ये रक्तमाकाशं वर्णयित्वा सूर्योदयं प्रस्तुवन्ति सा च रक्तता साधारणी, बाणस्तु तत्रैव रक्ततायां क्रमशो जायमानौ प्रकर्षा-पकर्षौ नानाविधैरुपमानैश्चित्रयति—

'एकदा तु प्रभातसन्ध्यारागलोहिते गगनतले कमलिनीमधुरक्तपक्षसम्पुटे वृद्धहंस इव मन्दाकिनी पुलिनात् अपरजलनिधितटमवतरति चन्द्रमसि परिणतरङ्कुरोमपाण्डुनि व्रजति विशालतामाशाचक्रवाले गजरुधिररक्तहरिसटालोमलोहिनीभिः आतप्तलाक्षिकतन्तुपाटलाभिः आयामिनीभिरशिशिरकिरणदीधितिभिः पद्मरागशलाकासम्मार्जनीभिरिव समुत्सार्यमाणे गगनकुट्टिमकुसुमप्रकरे तारागणे,

एतत्सकलमपि वैष्टिचं मनसि निधायैव गोवर्द्धनः प्रोक्तवान्—

जाता शिखण्डिनी प्राग्यथा शिखण्डी तथा ऽवगच्छामि ।
प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूवेति ॥'

## बाणस्य प्रातिस्विकं वैशिष्टचम्

१. संस्कृतभाषाकविषु बाणभट्टः स्वविषये बहु प्रामाणिकं वस्तु हर्षचरिते निर्दिष्टवान्, येन तद्रचनाकालेन समं रचयितुरपि च नृपतेः कालः प्रमाणीकृतो भवति, ऐतिहासिकयुगान्तरकालनिर्धारणेऽपि सौविध्यमाधीयते ।

२. 'व्यावहारिकसंस्कृतभाषायां गद्यं कीदृशं स्वरूपमपेक्षते' इति प्रश्ने कादम्बरी इति तदुत्तरमुपस्थापितवान् बाणः ।

३. गद्यकाव्यप्रकर्षोपस्थापनद्वारा कथासाहित्यस्य सूत्रमग्रगामि कृतवान् ।

४. उपन्यासे कथायाः पर्यवसानं यावन्निह्नुतं तिष्ठति, पाठकास्तावदुत्कण्ठितरूपेण ग्रन्थपारायणसमाप्तौ प्रयतन्ते । कादम्बर्यामुपस्थापिता कथा तत्रांशे सर्वथा सफलेति ।

एवमादि बाणस्यात्ममात्रगतं वैशिष्टचम् ।

## उत्तरार्धकादम्बरी

यावन्तो गुणाः पूर्वार्द्धकादम्बर्यामुक्तास्तावन्त एव मात्रायां किञ्चिन्न्यूना उत्तरार्द्धकादम्बरीग्रन्थेऽपि विद्यमानाः सन्ति । उत्तरार्द्धकादम्बरीं बाणस्य पुत्रो भूषणभट्टः पुलिनभट्टः पुलिन्ध्रभट्टो वा निर्मितवान् ।

बाणप्रारब्धा कथाऽर्धमार्गं एवासीत्, कविनयिकं चन्द्रापीडं कादम्बर्याः सविधे समुपस्थापितवानेवासीत् तदैव क्रूरकालेन कविर्लोकान्तरं नीतः । तदा तत्पुत्रः कथासमापनमात्रबुद्ध्योत्तरार्धकादम्बरीं ग्रथितवान् ।

'याते दिवं पितरि तद्वचसैव सार्धं
विच्छेदमाप भुवि यस्तु कथाप्रबन्धः ।
दुःखं सतां तदसमाप्तिकृतं विलोक्य
प्रारब्ध एव हि मया न कवित्वदर्पात् ॥'

एवं लिखन् बाणस्य पुत्रः स्वीयं नम्रत्वं व्यञ्जयति । किञ्च—

'कादम्बरीरसभरेण समस्त एव
मत्तो न किञ्चिदपि चेतयते जनोऽयम् ।
भीतोऽस्मि यन्न रसवर्णविवर्जितेन
तच्छेषमात्मवचसाऽप्यनुसन्दधानः ॥'

एवं स स्वीयनम्रताव्यञ्जनपूर्वकं कादम्बरीग्रन्थस्य पूर्त्तः सकलसहृदयवर्गोपेक्षितत्वं प्रकटीकरोति ।

## बाणपुत्रस्य नाम

डा० बूलरमहोदयः 'Dr. Steen's Catalogue of Sanskrit Mss. at Jammu' नामके निबन्धे कादम्बरीं पूरितवतो बाणपुत्रस्य नाम भूषणभट्ट इति लिखितवान् । प्रो० भण्डारकरमहोदयस्तस्य नामाधुनिकानुसन्धानाधारेण पुलिनभट्ट इत्युक्तवान् ।

## पुलिनभट्टस्य पाण्डित्यम्

पुलिनभट्टोऽयं स्वपितेव महापण्डितः सुकविश्चेति तद्ग्रन्थेनैव प्रमाणीक्रियते । पूर्वार्द्धोत्तरार्द्धयो रचनायां यावत्तारतम्यं दृश्यते तावदेककर्त्तृकग्रन्थयोरपि सम्भवति, अतः पुलिनस्य न्यूनविद्यत्वं न शङ्कनीयम् ।

इदं तु सत्यं यद्यपि बाणः स्वयं ग्रन्थमिमं पूरितवानभविष्यत्तदाऽत्र ग्रन्थेऽवश्यमधिकश्चमत्कार उत्पन्नोऽभविष्यत्, कायवृद्धिरप्यजास्यत ।

## महाकविर्दण्डी

'जाते जगति वाल्मीकौ कविरित्यभिधाऽभवत् ।
कवि इति ततो व्यासे कवयस्त्वयि दण्डिनि ॥'

इत्येवमादिभिः प्राचीनसहृदयवचनैः संस्कृतसाहित्ये दण्डिनो महती प्रतिष्ठाऽनुमीयते । 'दण्डिनः पदलालित्यम्' इत्युक्तिरपि तस्य प्रसिद्धौ प्रमाणम् । गद्यलेखकेषु दण्डी स्वं विशिष्टं स्थानं रक्षति ।

## दण्डिनः समयादिनिरूपणम्

दण्डिनः समयनिरूपणे प्रक्रम्यमाणे निम्नलिखिता विषया ध्यातव्या भवन्ति—

१. खीष्टदशमशतकोत्पन्नोऽभिनवगुप्तः लोचननामके स्वग्रन्थे लिखति—
"यथाह दण्डी—'गद्यपद्यमयी चम्पूः'-" (तृतीयोद्द्योते सप्तमी कारिका)

२. खीष्टदशमशतकपूर्वार्द्धसमुद्भूतेन प्रतीहारेन्दुराजेन उद्भटरचितस्य काव्यालङ्कारसारसंग्रहस्य लघुवृत्तौ लिखितम्—
"अत एव दण्डिना 'लिम्पतीव' इत्यादि ।"

३. कन्नडभाषायां 'कविराजमार्ग'नामक एको ग्रन्थः राष्ट्रकूटराजकुमारेण अमोघवर्षेण लिखितः । स स्पष्टभावेन काव्यादर्शमाधारीकृत्य प्रणीत इति प्रतीयते । कविराजमार्ग-नामकस्य तस्य ग्रन्थस्य रचनाकालः ८१५ खीष्टाब्दतः ८७५ खीष्टाब्दमध्यवर्त्ती मन्यते ।

४. सिंहलभाषायां प्रथमराजसेनः सियासलकारा (स्वभाषालङ्कार) नामकमेकं ग्रन्थं प्रणीतवान् । महावंशानुसारेण तस्य ग्रन्थस्य रचनाकालः ८४६

खीष्टाब्दतः ८६६ खीष्टाब्दो वर्त्तते। तस्मिन् ग्रन्थे न केवलं काव्यादर्शस्य प्रभावो लक्ष्यतेऽपि तु तत्र काव्यादर्शस्य नामाप्युल्लिख्यते।

५. वामनेन काव्यालङ्कारसूत्रे यस्या रीतेः काव्यात्मत्वमास्थाय विस्तृता विवेचना कृता सा रीतिर्दण्डिनः काव्यादर्शे वर्णिता मार्गपदेन। दण्डिप्रकाशितो मार्ग एव वामनेन रीतिरुक्ता, अतो दण्डी वामनपूर्ववर्त्तितया स्वीकर्त्तव्यो भवति। वामनस्य कालश्च ७७९ खीष्टाब्दतः ८१३ खीष्टाब्दो मन्यते।

६. 'नीलोत्पलदलश्यामां विज्जिकां मामजानता। वृथैव दण्डिना प्रोक्ता सर्वशुक्ला सरस्वती॥' इति विज्जिका-नामकस्त्रीकवेरुक्तिः प्रसिद्धाः। यदीयं विज्जिका द्वितीयपुलकेशिनो ज्येष्ठसुतस्य चन्द्रादित्यस्य विदुषो पत्नी विजय-भट्टारिका एव तदा तस्याः समयः ६६० तमाब्दनिकटस्थित एव।

एभिः प्रमाणैर्दण्डिनः समयस्य परसीमा अष्टमशतकमिति मन्तव्यं भवति। वासवदत्ता-नामके सुबन्धुप्रणीते प्रसिद्धे गद्यग्रन्थे 'छन्दोविचितिरिव कुसुम-विचित्रा' 'छन्दोविचितिरिव मालिनीसनाथा' ईदृशं गद्यमस्ति। 'छन्दोविचित्यां सकलस्तत्प्रपञ्चः प्रदर्शितः' इति दण्डिनो वाक्येन छन्दोविचिति-नामकग्रन्थस्य दण्डिकृतित्वमास्थातुं शक्यते। तस्य ग्रन्थस्य सुबन्धुना स्मृतत्वे दण्डिनः सुबन्धुपूर्वत्वमायाति।

एतेन दण्डिनः समयस्य पूर्वसीमा षष्ठं शतकमिति मन्तव्यं भवति। सर्वमु-परितनं सन्दर्भं विभाव्य मैक्समूलर-वेबर-मैक्डोनल-याकोबि-प्रभृतयः पाश्चात्त्या विद्वांसो दण्डिनः समयं षष्ठशतकं मन्यन्ते। केचित्तु—

'रत्नभित्तिषु सङ्क्रान्तैः प्रतिबिम्बशतैर्वृतः।
ज्ञातो लङ्केश्वरः कृच्छ्रादाञ्जनेयेन तत्त्वतः॥'

इति काव्यादर्शगतः श्लोकः माघस्थस्य निम्नलिखितश्लोकस्य च्छायामनु-हरति—

'रत्नस्तम्भेषु सङ्क्रान्तप्रतिमास्ते चकाशिरे।
एकाकिनोऽपि परितः पौरुषेयवृता इव॥'

काव्यादर्शस्य निम्नलिखितः श्लोकः—

'अरत्नालोकसंहार्यमवार्यं सूर्यरश्मिभिः।
दृष्टिरोधकरं यूनां यौवनप्रभवं तमः॥

'अभानुभेद्यम् अरत्नालोकोच्छेद्यम् अप्रदीपप्रभापनेयम् अतिगहनं हि तमो यौवनप्रभवम्' इति कादम्बरीगतं गद्यमनुहरति।

एतादृश्या तुलनया दण्डिनं माघ-बाण-परवर्तिनं मन्यन्ते, परमियतैव सादृश्येन परवर्त्तितानियमस्येव पूर्ववर्त्तितानियमस्यापि कर्त्तुं शक्यत्वेन निश्चयस्य कस्यापि कर्त्तुमशक्यत्वात्।

अन्ये पुनः—अवन्तिसुन्दरीकथायां दण्डिनो भारविवंशजत्वमुक्तम् : भारवेः पितामहः पूर्वं गुर्जरेष्ववात्सीत्। ततः स्थानात्स दक्षिणदेशस्थितमचलपुरमागतो

यः 'एलिचपुर' नाम्ना सम्प्रत्युच्यते। नारायणस्वामिनः पुत्रो दामोदरभारविः, तत्पुत्रेष्वन्यतमस्य मनोरथस्य पुत्रो वीरदत्तस्ततो दण्डी गौर्यां जनन्यां जातः। इयमेव कथा तत्रोक्ता। भारवेः समयः ख्री० ६३४ मन्यते, तदनुसारेण दण्डिनः सप्तमशतकान्तभागसम्भूतत्वमायाति। इति।

काव्यादर्शे—'इति साक्षात्कृते देवे राज्ञो यद्रातवर्मणः' इति रातवर्मणः उल्लेखेन पल्लवनरेशो नृसिंहवर्मा स्मर्यते।

'वराहेणोद्धृता यासौ वराहेरुपरिस्थिता' इत्यत्र वराहपदे श्लेषेण चालुक्यवंश्यनृपतीनां चिह्नं स्मर्यते।

एतेन सर्वेण दण्डिनः समयः सप्तमशतकान्तभागः सिद्ध्यति। इति चाहुः।

## दण्डिनो देशः

दण्डिनो वासदेशस्य निर्णयेऽनुक्रम्यमाणे अवन्तिसुन्दरीकथा प्रमाणम्। तदनुसारेण दण्डिनः पूर्वपुरुषाः गुर्जरप्रान्तस्थिते आनन्दपुरेऽतिष्ठन् ततस्ते दक्षिणदेशावस्थितं सम्प्रति एलिचपुरसंज्ञया प्रथमानमचलपुरं नाम स्थानमायाताः। तदेवं कवेर्दाक्षिणात्यभावः सिद्ध्यति। काञ्ची-कावेरी-चोल-कलिङ्ग-मलयानिल-प्रभृतिदक्षिणप्रसिद्धस्थानादीनां दण्डिना कृतो भूयसोल्लेख एव प्रमाणयतयाऽत्रोपस्थाप्यते।

दण्डिनो दाक्षिणात्यत्वे इदमपि प्रमाणान्तरमुपन्यस्यते यत् काश्मीरदेशभवा आलङ्कारिका दण्डिनो मतं प्रायशो नोद्धृतवन्तः, तन्मतं नालोचितवन्तः, अतः सुदूरदक्षिणवासित्वं निश्चीयते।

कौशिकगोत्रोद्भवोऽयं स्वप्रपितामहस्य भारवेराश्रयदातुर्नृपस्याश्रये काञ्चीनगरे वसति स्म। काञ्चीराजे शत्रुभिराक्रमणेन पराभूतेऽयं काननेषु निलीय स्थितः। सोऽयं विप्लवः ६५५ तमे ख्रीष्टाब्दे बभूव। तदा दण्डी बाल एवासीत्। एतेन दण्डिनः कालोऽपि प्रकाशमानीयते।

## दण्डिनो नाम

दण्डिनो वास्तविकं नाम न ज्ञायते। यथा भवभूतेर्माघस्य च नामविषये श्रूयते तथैव 'ब्रह्माण्डच्छत्रदण्डः' इत्यादिदशकुमारमङ्गलाचरणस्थदण्डपदप्रयोगेण दण्डिनाम्नाऽयं ख्यातः।

## दण्डिनः कृतयः

'त्रयो दण्डिप्रबन्धाश्च' एतदुक्तिमनुसृत्य 'काव्यादर्शः', 'दशकुमारचरितम्', 'अवन्तिसुन्दरीकथा' इति त्रयो ग्रन्था दण्डिनः कथ्यन्ते।

केचित्—'छन्दोविचित्यां सकलस्तत्प्रपञ्चः प्रदर्शितः' इति दण्डिवचनेन 'छन्दोविचिति' नामकमपि दण्डिग्रन्थमेकं कल्पयन्ति, परं तन्न युक्तम्, छन्दोविचितिशब्दस्य छन्दःशास्त्रपरत्वात्, अत एव—छन्दोविचितिविषये 'सा

विद्या नौविविक्षूणाम्' इति तच्छास्त्रस्य विद्यात्वमुक्तम् । एष एव न्यायः कल्प-परिच्छेदविषयेऽपि बोध्यः । केचित्तु छन्दोविचितिमेकं ग्रन्थमेव मन्यते ।

## दशकुमारचरितम्

इदमाख्यानप्रधानमेकं कथानकम् । अत्र नानाविधा रोमाञ्चकारिण्यो घटना वर्णिता या विस्मयं जनयन्ति ।

अत्र क्वचिद् भयानके वने सञ्चरतां हिंस्रजन्तूनां चीत्कारः, क्वचित् समुद्रे नौमज्जनम्, क्वचिद्वेश्यावञ्चनम्' क्वचिद् गृहिणीगौरवम्' एवं मिथ्यासत्य-विविधघटनावलीपूर्णतया रोचकमिदं कथानकं नितान्तसजीवम् ।

दण्डिनो दृष्टिस्तात्कालिकसमाजस्य समीक्षणे तीव्रेति तच्चित्रन्तेन साधु स्फुटीकृतम् । समाजस्य रम्यभागोऽरम्यभागश्च समभावेनालोचितो दण्डिनो दशकुमारचरिते । दम्भी तपस्वी, कपटी ब्राह्मणः, छलपरायणो वेश्याजनश्च समेन भावेनात्र वर्णिताः । अपहारवर्मचरितप्रसङ्गे काममञ्जर्या नाम वेश्यया मरीचेस्तापसस्य वञ्चनं तस्या विदग्धतामिश्रं चातुर्यसहकृतं च साहसिक्यं प्रकाशयति । यत्र धूमिनीसमा क्रूरस्त्री चित्रिता, तत्रैव गोमिनीसदृशी पति-प्राणापि ।

दशकुमारचरितगतासु घटनासु विस्मयजनकघटनानां प्राचुर्येणाद्भुतो रसः प्रधानम् । दण्डी नानाविद्यानां पारदृश्वा पण्डित इति राजनीतेरन्तरङ्गवर्णने कामशास्त्रीयगूढतथ्यप्रकटने चौर्यशास्त्ररहस्यप्रकाशने चासौ दक्षतां प्रकाशयति । पल्लवनरेशानां छत्रच्छायासु स्थितोऽपि दण्डी राजकीयजीवनादतिविप्रकृष्टो जनसाधारणकविः । अतः सप्तमशतके भारतीयजनसाधारणस्य क्रीडासंस्थानस्य आमोदप्रमोदयोः आचारविचारयोश्च ज्ञानाय दशकुमारचरितस्य परिशीलनं नितान्तमुपकारि भवति ।

## दशकुमारानुसारी भारतस्य व्यवहारः

दण्डिनः समये भारते शैवधर्मस्य प्राधान्यमासीत् । महाकालाधिष्ठिता उज्जयिनी पीठस्थानमासीत् । तस्मिन् समये उज्जयिनी शिक्षाकेन्द्रमप्यासीत् । राजधानीषु शिवकार्त्तिकेययोर्मन्दिरं पृथक् पृथग् भवति स्म, यत्र विशेषपर्वसु राजपरिवारो दर्शनाय याति स्म । क्षीयमाणविभवा जैनविहारा अभवन्, बौद्ध-सन्न्यासिन्यो निजं सात्त्विकं जीवनं परित्यज्य विवाहघटनादूतीकर्मणि रज्यन्ति स्म । जनपदीयजनताया एकं सभाभवनं भवति स्म, यत्रावसरेऽवसरे नृत्या-दिकमायोज्यत । कामोत्सवो वसन्ते क्रियते स्म । कुक्कुटयुद्धस्य प्रचार आसीत् । आगन्तुकजनसत्काराय कर्पूरवासितताम्बूलदानस्य प्रथाऽऽसीत् । वाणिज्य-व्यवसायस्य प्रचुरताऽवर्त्तत । अधुनेव व्याघ्रचर्म विक्रीयते स्म । कूपाज्जलो-द्धरनाय वंशनली व्यवह्रियते स्म ।

## दशकुमारस्य साहित्यवैभवम्

दशकुमारस्य कथाग्रन्थतया कथानककृतं मनोरञ्जकत्वमत्रोचितमात्रायां निहितं, वर्णनानां स्वल्पतया कथासूत्रस्य व्यवच्छेदो न जायते (यथा कादम्बर्यादौ व्यवच्छेदो जायते), अवान्तरकथा अपि प्रधानकथापरिपन्थितया नोद्भवन्ति। दशकुमारगता गद्यशैली सुबोधा सरसा प्रवाहशालिनी च। दशकुमारस्य गद्यं न श्लेषेण सङ्कीर्णम्, न वा दीर्घसमासेन विषमीकृतम्। अत एव दण्डिनो दशकुमारस्थितं गद्यं पाठकानां मनसि वैरस्यं न सृजति।

वस्तुतो दण्डी गद्ये व्यञ्जनाक्षमस्य सरससरलस्य च प्रवाहस्य प्रवर्त्तको मन्यते। अर्थस्य स्पष्टता, मनोरमा अभिव्यञ्जनाशक्तिः, पदानां लालित्यं चेति दशकुमारस्यासाधारणा गुणाः।

दशकुमारस्य स्वरूपविषये कियान् भ्रमो लोके प्रचरति। दशकुमारचरितं पूर्वपीठिका उत्तरपीठिका चेति भागद्वयात्मकम् प्रथते। तत्र पूर्वपीठिका न दशकुमारचरिताङ्गम्, नापि उत्तरपीठिका दण्डिनः कृतिरिति भ्रमः प्रचरति स्म। सम्प्रति 'अवन्तिसुन्दरीकथा' नामकस्य दण्डिनो गद्यग्रन्थान्तरस्योपलब्ध्याऽत्र विषये प्रकाश आधीयते।

इयमवन्तिसुन्दरीकथैव दण्डिनो मौलिकी रचना। अस्या अनुपलब्धौ एतदीयैव कथा पूर्वपीठिकारूपेणादौ योजिता। एवं दशकुमारचरितं पूर्णतां नीतम्। मूलग्रन्थ-पूर्वपीठिकयोः कथावैषम्यस्येदमेव निदानम्। मूलग्रन्थे अष्टानामेव कुमाराणां चरितं विद्यते, दशकुमाराणां पूर्त्यै पूर्वपीठिकायां द्वयोश्चरितं वर्णितम्। तदेवं पूर्वोत्तरपीठिकायुतो मूलग्रन्थ एव दशकुमारनाम्नाऽप्रथतेति बलदेवोपाध्याया आहुः।

## कतिपये अन्ये गद्यलेखकाः

बाणभट्टादनन्तरमपरेऽपि कतिपये लेखका गद्यसाहित्यलेखाय प्रयासं कृतवन्तः परन्तु तेषु कियन्त एव साफल्यं समधिगतवन्तः। तत्र कारणमिदमेव यद् गद्यसाहित्यप्रणयनमीषत्करं नासीत्। दण्डी यदांशिकं साफल्यमासादितवांस्तत्र तस्य चातुर्यो गनतं शैलीपरिवर्त्तनमेव प्रधानं कारणम्।

बाणोत्तरकालभाविनः परे कवयो यद् गद्यकाव्यानि प्रणीतवन्तस्तद् बाणानुकरणमात्रम्।

बाणस्य शैली यथाशक्ति पुरस्कृत्य गद्यप्रणयने कृतोपक्रमेषु कविषु तिलकमञ्जरीप्रणेता धनपालः वादीभसिंहोपाह्व ओडयदेवश्च प्रख्यातौ।

### धनपालः

धनपालः धाराधिपतेराश्रये स्थित्वा तिलकमञ्जरीं नाम कथाग्रन्थं प्रणीतवान् यत्र समरकेतुतिलकमञ्जर्योः प्रणयकथा वर्णिता। अयं धनपालः खीष्टदशमशतके वर्त्तमान आसीदिति बहूनां विदुषां मतम्। अनेन धनपालेन ९७२

तमे खीष्टाब्दे 'पैयलच्छि' नामा प्राकृतकोषः ऋषभपञ्चाशिका नाम जैनतीर्थङ्करस्य ऋषभस्य प्राकृतस्तोत्रग्रन्थश्च कृतः। धनपालः स्वयमेव बाणकृतिं स्वकृतेरुत्तमर्णतया स्तुतवान्

## वादीभसिंह ओडयदेवः

धनपालात्परवर्त्ती अज्ञातकालो वादीभसिंहोपाह्व ओडयदेवो बाणस्य कृतेरनुकरणे गद्यचिन्तामणिं नाम जीवनधरचरितग्रन्थं निर्मितवान्। इदमेवोपाख्यानं जीवनधरचम्पूरप्युपजीवति।

## इतरे गद्यलेखकाः

| | | |
|---|---|---|
| १. अगस्त्यः | कृष्णचरितम् | चतुर्दशशतकम्। |
| २. अम्बिकादत्तव्यासः | शिवराजविजयः | एकोनविंशशतकम्। |
| ३. बदरीनाथझा | गुणेश्वरचरितम् | विंशशतकम्। |
| ४. नारायणखिस्ते | विद्वच्चरितपञ्चकम् | विंशशतकम्। |



# कथासाहित्यम्

कथाया उद्गमभूमिर्भारतवर्षमेव। अधुना पाश्चात्त्या अपि कथाया गौरवं स्वीकुर्वन्तु नाम, परन्तु ते कथाया आधारं भारतीयकथात एव लब्धवन्तः। पाश्चात्त्यकथाया इतिहासं जानन्तो विद्वांसः प्रतियन्ति यद् भारतभूमिरेव कथाया उत्पत्तिक्षेत्रम्। षष्ठशताब्द्याम् भारते ताः कथाः प्रचुरप्रचारा आसन् यासामुपलब्धिरस्माभिः पञ्चतन्त्रे क्रियते। पञ्चतन्त्रेण विश्वसाहित्ये महदुपयोगि दानं समर्पितम्। वेदादेव प्रवहन्ती पुराणेषु खरस्रोतस्तत्रमागता कथाधारा नानारूपाजायत।

संस्कृते कथाया द्वौ प्रकारौ--उपदेशात्मककथा, मनोरञ्जककथा च। प्रथमा पशुपक्षिकथा, द्वितीया मनोरञ्जनमात्रफला मानवकथा। मनोरञ्जककथानां प्राचीनतमः संग्रहो बृहत्कथानाम्ना प्रथते।

## गुणाढ्यस्य समयः

संस्कृते बृहत्कथायाः सर्वप्रथम उल्लेखो दण्डिनः काव्यादर्शे प्राप्यते--

'भूतभाषामयीं प्राहुरद्भुतार्थां बृहत्कथाम्'

तदनन्तरं सुबन्धुर्लिखति—

बृहत्कथालम्बैरिव सालभञ्जिकानिवहैः।'

बाणोऽप्याह।

'धिया निबद्धेयमतिद्वयी कथा।' (अत्र 'अतिद्वयी' पदं बृहत्कथां वासवदत्तां च परामृशतीति विद्वांसो वर्णयन्ति)।

त्रिविक्रमभट्टेनोक्तम्—

'धनुषेव गुणाढ्येन निःशेषो रञ्जितो जनः।'

गोवर्धनो लिखति—

'अतिदीर्घजीविदोषाद् व्यासेन यशोऽपहारितं हन्त।
कैर्नोच्यते गुणाढ्यः स एव जन्मान्तरापन्नः॥'

एभिरुल्लेखैरिदं सिद्ध्यति यद् गुणाढ्यस्य बृहत्कथा ख्रीष्टसप्तमशतकात् प्राचीना एव। केचित् सातवाहनसमकालिकतया गुणाढ्यस्य प्रथमशताब्दी-सम्भूततां मन्यन्ते। तत्र सातवाहनपदस्योपाधिस्वरूपतया समयव्यवस्थापकतां कतिपये नाङ्गीकुर्वन्ति। यदस्तु—प्रथमशतकानन्तरं सप्तमशतकात्पूर्वञ्च कश्चन समयो गुणाढ्यस्य मान्य एव। तत्र गुणाढ्यजीवनवृत्ते कातन्त्र-व्याकरणप्रणेतुः शर्ववर्मणः सम्पृक्ततया गुणाढ्यस्य प्रथमशताब्दीतो नातिपर-वर्त्तित्वं विश्वसनीयं सम्भवति।

## गुणाढ्यस्य जीवनवृत्तम्

काश्मीरग्रन्थतो ज्ञायते यद् गोदावर्यास्तीरे प्रतिष्ठाननगरं गुणाढ्यस्य अभिजनः। गुणाढ्यः सातवाहनस्यातीव प्रीतिपात्रमासीत्। कदाचिद् महिष्या

'मा उदकैरि'ति जलप्रतिषेधार्थकं वाक्यं सन्धि कृत्वा 'मोदकैरि'त्युक्तम्। संस्कृतानभिज्ञश्च राजा मोदकैर्मधुरभेदैरिति ज्ञातवान्। वस्तुवृत्ते ज्ञाते सति राजा लज्जितो जातः। तेनैव कारणेन राज्ञा संस्कृतपठने रुचिः प्रकटीकृता। गुणाढ्यस्तं षड्भिर्वर्षैः संस्कृतमध्यापयितुं शक्यमित्युक्तवान्। तत्रैव स्थितः कातन्त्रव्याकरणप्रणेता शर्ववर्मा षड्भिरेव मासैस्तथाकर्त्तुं प्रतिज्ञातवान्। गुणाढ्यस्तस्य तथाविधामुक्तिमाकर्ण्य प्रोवाच यद्यपि शर्ववर्मा षड्भिर्मासैः संस्कृतं पाठयेत्तदाऽहं ततः प्रभृति संस्कृत--प्राकृतादिकाः प्रसिद्धा भाषाः कदापि न व्यवहरेयम्। पणबन्धेऽस्मिन् शर्ववर्मणा पराजितो गुणाढ्यः क्वचन विन्ध्यवनमध्ये स्थितो भूतभाषामयीं बृहत्कथां सप्तलक्षश्लोकात्मिकां प्रणीतवान्। तच्छिष्यास्तं बृहन्तं ग्रन्थं राज्ञः समीपं समानीतवन्तः किन्तु राजा तं नादृतवान्। राजानादरखिन्नो गुणाढ्यः स्वग्रन्थमारण्यकेभ्यः श्रावयित्वा क्रमशस्तमग्नौ क्षेप्तुं प्रारेभे। तदनन्तरं तद्गुणानाकर्ण्य राजा तद्ग्रन्थसप्तमांशं लक्षश्लोकात्मकं प्रयासेन रक्षितुं शशाक। स एवायं बृहत्कथाग्रन्थः। इयमेव बृहत्कथाया उत्पत्तिकथा।

नेपालदेशीयो बुद्धस्वामी तु गुणाढ्यं मथुरावासिनमवन्तिनृपतेर्नृपमदनस्य चाश्रितं वर्णयति। अनयोः मतयोः काश्मीरमतं सम्यक्। बुद्धस्वामी तु गुणाढ्यं नेपालसमीपवर्तिनं साधयितुमेव स्वमाग्रहं तथा प्रकाशितवान्।

## का भूतभाषा ?

भूतभाषायां गुणाढ्येन बृहत्कथा रचितेति प्रतीतं, तत्र का भूतभाषेति प्रश्ने विन्ध्यभाषाप्रभेदो भूतभाषा, विन्ध्यमध्ये स्थितेन गुणाढ्येन बृहत्कथाप्रणयनस्यानुकूलतर्कत्वात्। ग्रियर्सन (George Grierson) महोदयः पश्चिमोत्तरप्रदेशभाषां भूतभाषामाह। तन्मते प्राचीनभूतभाषास्थानानि काफिरस्तान-चित्रल-गिलगिटप्रदेशाः।

गुणाढ्यस्य गोदावरीतीरवासितया विन्ध्यभाषाप्रभेदता भूतभाषाया अधिकविश्वासयोग्या। राजशेखरेणोक्तम्---येषु भारतस्यानेकेषु भागेषु भूतभाषायाः प्रचारोऽवर्त्तत, विन्ध्यभागोऽपि तेष्वन्यतमः, तस्माद् विन्ध्यभाषाभेद एव भूतभाषेति विदुषां सम्मतिः।

## बृहत्कथा पद्यमयी गद्यमयी वा ?

दण्डिना कथाया उदाहरणभावेन बृहत्कथा स्मृता। 'कथायां सरसं वस्तु गद्यैरेव निबध्यते', अतो बृहत्कथा गद्यमयी सम्भवति। बृहत्कथा दण्डिना दृष्टा स्यादित्यपि सम्भाव्यते, दण्डिनः पर्याप्तप्राचीनत्वात्। हेमचन्द्रोऽपि बृहत्कथातो गद्यविशेषमुद्धृत्य गद्यमयीभावं समर्थयति। यच्च तदनुवादत्रयं पद्यमयं तेन मूलमपि पद्यमयमिति कथनं तदकिञ्चित्करम्। श्लोकानां सप्तलक्षी बृहत्कथायामिति अक्षरसंख्यावोधिकैव, न पद्यमयत्वे दृढप्रमाणमिदम्।

## बृहत्कथाया वर्ण्यविषयः

केचिदाहुः—बृहत्कथायां नायको नरवाहनदत्तः वेगवत्या गोमुखेन च सहितः प्रव्रजति, वेगवत्या वियुज्यते, नानाविधविक्रमप्रकाशनानन्तरं मदनमञ्जुकां नाम नायिकामासादयति, मानवसेनस्य गृहे बन्दीभूताया अपि मदनमञ्जुकायाः सतीत्वमक्षुण्णमवर्त्तत। इयमीदृशी कथा रामायणमनुहरति' तेन-गुणाढ्यस्य रामायणानुकरणपरायणता प्रतीयत इति। वस्तुतस्तु रामायण-महाभारत-बौद्धकथानामनुशीलने कृतेऽपि गुणाढ्येन बृहत्कथायां रामायणं नानुकृतं किन्तु प्रसङ्गवशादेव तथा कथा लिखिता। शरीरपिण्डस्य साम्ये सत्यपि बृहत्कथाया अङ्गानि रामायणकथाया अङ्गेभ्योऽतितरां भिद्यन्ते। गुणाढ्येन यात्रिकाणां सकाशात् श्रुताः कथा उपजीविताः कृत्वा विक्रान्तयात्रावर्णनानि लिखितानि। इमानि वर्णनानि श्रमजीविनां पोतकर्णधाराणां वाणिज्यपरायणानां पथिकानां च सातिशयमावर्जकानि। अस्य ग्रन्थस्य प्रणयने ग्रन्थकर्त्ता साधारणभाषया मनोरञ्जकसाहित्यसन्दर्भस्य प्रणयनमेवोद्देश्यमास्थितवान्, कस्यचिदैतिहासिकस्य कथासमुदायस्य आचारशास्त्रस्य वा गुम्फनं नेच्छति स्म। इदमेवास्य रामायणानुकरणतां निषेधति।

अवश्यमयं गुणाढ्योऽसदृशप्रतिभो यत्कृतिरद्याप्यद्वितीयैव विद्योतते स्वक्षेत्रे।

## बृहत्कथाया वैशिष्ट्यम्

लोकप्रियकथासाहित्ये प्रथमकृतित्वेन, भारतीयसाहित्यकलाया भाण्डागारभावेन, अनन्तरभाविसाहित्येनोपजीवितत्वेन च बृहत्कथाया गौरवं नितान्त-विशालम्।

भारतीयेतिहासस्य यः कालः साधनान्तरेण अप्रकाश्यमानः, तं प्रकाशयन्त्यो बृहत्कथायाः कथाः यदि साधु समालोचिताः स्युस्तदा तात्कालिकी दर्शनधारा सभ्यता स्थितिश्च स्फुटीभवेदिदमप्यस्या वैशिष्ट्यम्।

एतादृशान्येव वैशिष्ट्यानि दृष्ट्वा बृहत्कथा बहुधाऽनूदिता। तत्र—

## बुद्धस्वामिनः श्लोकसंग्रहः

बृहत्कथाश्लोकसंग्रहापराभिधानः श्लोकसंग्रहनामायं ग्रन्थो बुद्धस्वामिना कृतः। अस्यैकमेव खण्डं नेपालप्रान्ते प्राप्तं यत्र हस्तलिखिते ग्रन्थे २८ सर्गाः ४५३९ मिताः श्लोकाश्च सन्ति।

अस्य ग्रन्थस्य हस्तलिखिताः प्रतयो नेपालप्रान्ते प्राप्ताः। अनेन बृहत्कथाया नेपालप्रान्तीयं रूपान्तरमिदमिति प्रतिभाति। अस्य कर्त्तुर्बुद्धस्वामिनः नेपालेन सह सम्बन्धस्तु नावधारयितुं शक्यते सम्भवति बृहत्कथाया मूलं पुस्तकं दृष्ट्वा श्लोकसंग्रहो निर्मितः स्यात्।

अत्र नरवाहनदत्तस्य शृङ्गारमयपराक्रमकार्याणि वर्णितानि। अत्र श्लोकसंग्रहे अविद्यमाना अपि कथाः पञ्चतन्त्रकथा-वेतालपञ्चविंशतिकथाप्रभृतयः

काश्मीरेषु निर्मितयोः बृहत्कथामञ्जरी-कथासरित्सागरयोरुपलभ्यन्ते, तत्र किङ्कारणमिति प्रश्ने तत्क्षेपकसहितमेव श्लोकसंग्रहपुस्तकं क्षेमेन्द्र-सोमदत्ताभ्यामधिगतं स्यादित्येकमुत्तरम्, द्वितीयञ्चेदमुत्तरं यत् क्षेमेन्द्रसोमदत्तौ ज्ञात्वैव कथान्तरं समावेशितवन्तौ। यावत् श्लोकसंग्रहस्य सर्वथा परिशीलनं न क्रियते तावद् बृहत्कथामञ्जर्याः कतिचन सन्दर्भा न स्फुटीभवन्ति। एतेन बृहत्कथामञ्जर्याः श्लोकसंग्रहसंक्षेपरूपता सिद्धा भवति।

विदुषां सम्मतौ श्लोकसंग्रहस्य निर्माणकालोऽष्टमं नवमं वा शतकम्।

श्लोकसंग्रहस्य शैली सरला स्वच्छा च। शैलीगुणेनैव ग्रन्थोऽयं लोकप्रियत्वं प्राप्तवान्।

अत्र चित्रितानि पात्राणि स्फुटचरित्रतया प्रसिद्धानि। ग्रन्थस्यावलोकनात् प्रतीयते यद् लेखको भ्रान्त्वा प्रत्यक्षीकृत्य जनपदान् तद्वासिनश्चावर्णयत्। अत्र प्राकृतभाषाप्रयोगेण विलक्षणैव कापि भाषा प्रतिभासते। व्याकरणशास्त्रप्रियता चास्य ग्रन्थे द्रष्टुं योग्या।

## क्षेमेन्द्रनिर्मिता बृहत्कथामञ्जरी

बृहत्कथामञ्जरीति नामधेयमेवास्य ग्रन्थस्य बृहत्कथासङ्क्षेपरूपत्वं गमयति। क्षेमेन्द्रस्य रामायणकथामञ्जरी भारतमञ्जरी चेति ग्रन्थद्वयं प्रसिद्धं तयोरध्ययनेन सिद्धमिदं तत् क्षेमेन्द्रो मूलोक्तकथां रक्षन् ग्रन्थं संक्षिपति। संक्षेपकरणादेवास्य ग्रन्थाः क्वचित् क्वचित् शुष्का निष्प्राणाश्च जायन्ते। इमा मञ्जर्योऽस्य प्राथमिककृतयः। बृहत्कथामञ्जरी १०६३ तमेशवीयवर्षे प्रारब्धा १०६६ तमेशवीयवर्षे निर्माय समापिता च।

वर्णनीयवस्तुदृष्ट्या बृहत्कथामञ्जरी कथासरित्सागरमनुकरोति, परमाकारे महदन्तरम्। यत्र कथासरित्सागरे २१३८८ श्लोकास्तत्र बृहत्कथामञ्जर्यां केवलम् ७५०० श्लोकाः।

## सोमदेवस्य कथासरित्सागरः

क्षेमेन्द्रेण बृहत्कथामञ्जर्यां लिख्यमानायामेव कथासरित्सागरोऽलिख्यत। कथासरित्सागरस्यारम्भः १०६३ तमेशवीयवर्षे समाप्तिश्च १०८१ तमेशवीयवर्षे जाता।

काश्मीरप्रशासकस्य अनन्तनृपतेः खिन्नायाः पत्न्याः सूर्यमत्या मनोविनोदार्थं काश्मीरदेशवासी सोमदेवपण्डितः कथासरित्सागरं प्रणीतवान्। अनन्तनृपतिः १०८१ तमेशवीयवर्षे आत्मघातं कृतवान् तमनु ममार च तस्य सती सूर्यमती। एतेनापि कथासरित्सागरस्य रचनाकालः पूर्वोक्तरूपः सिद्धो भवति।

कथासागरस्य कथासु सप्राणता प्रत्यग्रता विविधरूपता च विद्यते या क्षेमेन्द्रस्य मञ्जरीष्वप्राप्या। २१३८८ संख्याकेष्वेतत्पद्येषु ७६१ पद्यान्येव अनुष्टुब्तिरिक्तवृत्तैर्निबद्धानि।

सोमदेवः प्रयासेन दीर्घसमासान् क्लिष्टपदार्थवाक्यानि अलङ्कारांश्च परिहृतवान् । तेन कथासु वेगः सरलता चागच्छत् । कथासरित्सागरीयासु कथासु अद्भुताः समुद्रयात्रां देशयात्राः पोतभङ्गादयश्च वर्ण्यन्ते । कविताशैली प्रशंसनीया ।

परोपकारमहत्त्वप्रसङ्गे यथा—

'परार्थफलजन्मानो न स्युर्मार्गद्रुमा यदि ।
तापच्छिदो महान्तश्चेज्जीर्णारण्यं जगद्भवेत् ॥'

रामायणवत् महाभारतवच्च कथासरित्सागरोऽपि कविभिरुपजीव्यतां गमित इति महद्गौरवमस्य ग्रन्थस्य सिद्धयति ।

## वेतालपञ्चविंशतिका

वेतालपञ्चविंशतिकायां नृपतिविक्रमसेनं प्रति वेतालेन कथिताः पञ्चविंशति कथा निबद्धाः । क्वचित् क्वचित् नवीनेषु पुस्तकेषु विक्रमसेनस्थाने विक्रमादित्य इति नाम दृश्यते । सम्भाव्यते प्रागयं स्वतन्त्रो ग्रन्थः, सम्प्रति तु बृहत्कथा-कथासरित्सागरयोरङ्गभूतैवेयं प्राप्यते वेतालपञ्चविंशतिका । द्वादशे ततः पश्चात्कालिके वा शतके जातेन केनचित् शिवदासेनेयं लिखितेति प्रवादः । इयमेका गद्यपद्यमयी, अपरा च गद्यमयीति रूपद्वयमस्या उपलभ्यते । आधुनिकीषु सर्वास्वपि भारतीयभाषासु अस्या अनुवादो जात इति लोकप्रियत्वमस्याः साधितं भवति ।

केनचिद्योगिना उपकृतः कोऽपि नृपस्तस्योपकारं चिकीर्षति । योगी नृपं तरुविशेषशाखावलम्बिनं मृतकदेहमानेतुमादिशति । राजनि तद्देहसमीपं गत्वा तमानेतुमुद्युञ्जाने सति तद्देहाविष्टो वेतालो नृपमाह—'यदि त्वं मूक एव मां नेष्यसि तदाहं त्वया नेतुं शक्यः, अन्यथा नेति' । नृपे तथेत्युक्त्वा तं नयमाने वेतालस्तं पथि जटिलां कथां श्रावयित्वा तदुत्तरं पृच्छति, नृपो यथार्थमुत्तरं वदति, वेतालस्तमेव वृक्षमालम्बते यत्रासौ पूर्वं स्थितः, पुना राजा तमुपसर्पति, तथैव वेतालो वदति, राजा पुनस्तं निनीषति, मध्येमार्गं पुनरपि वेतालो राजानं जटिलप्रश्नस्योत्तरं पृच्छति, राजनि च यथार्थमुत्तरं वदति पुनस्तत्रैवालम्बितो वेतालः, इत्येवं क्रमेण सर्वाः कथाः श्राव्यन्ते । पञ्चविंशकथाया अवसाने नृपं मूकमवलोक्य वेतालोऽभिहितवान् यदयं योगी कपटोपायेन त्वां जिघांसति । तथा कथयित्वा ततो रक्षाया उपायमपि कथितवान् । इयदेव तत्त्वमत्र वेतालपञ्चविंशतिकायाम् ।

शिवदासकृतोऽयं ग्रन्थः सरलया सुन्दर्या च शैल्या निबद्धः एकमेव निदर्शनं शैलीमाधुर्यप्रदर्शनाय क्षमेत—

'स धूर्जटिजटाजटो जायतां विजयाय वः ।
यत्रैकपलितभ्रान्तिं करोत्यद्यापि जाह्नवी ॥'

## अज्ञातकर्तृका सिंहासनद्वात्रिंशिका

महाराजविक्रमादित्यस्य सिंहासनमेकमासीत् यत्र उत्कीर्णाभिः पुत्तलिकाभिः वर्णिताः कथा अत्रोपनिबद्धाः। तत्सिंहासनमिन्द्रेण विक्रमादित्याय दत्तमासीत्। विक्रमादित्ये दिवंगते सति भोजराजेन भूसाद्भूतं तत्सिंहासनमलभ्यत। तत्सिंहासनमारोढुमिच्छन्तं भोजराजं तत्रोत्कीर्णाः पुत्तलिकास्ताः स्वसमानसंख्याः कथाः कथयामासुः। अस्य कथाग्रन्थस्य बहूनि रूपाणि प्राप्यन्ते—एकं वर्णनात्मकपद्यप्रचुरं गद्यमयं रूपम्, अपरम् औपदेशिकपद्यैः पूर्णं पद्यमयम्, अन्यच्च केवलं पद्यबद्धकथामयम्। आधुनिकभाषास्वनुवाददर्शनेनास्य ग्रन्थस्य लोकप्रियत्वं प्रतीयते। वेतालपञ्चविंशतिकातः पश्चात्कालिकोऽप्ययं ग्रन्थः कत्रंशे नितान्तमौनः। एतस्य कर्त्ता निर्माणकालश्च निश्चेतुमशक्य एव।

## शुकसप्ततिः

ग्रन्थोऽयं शाखाद्वयविभक्तः प्राप्यते—एका शाखा चिन्तामणिनामकेन केनचिद् ब्राह्मणेन प्रणीता, अपरा केनचन श्वेताम्बर जैनविदुषा कृता। अविदित रचनाकालोऽप्ययं ग्रन्थो हेमचन्द्रेण १०८८–११७२ ई० भवेन स्मर्यत इति ततः प्राचीनत्वमस्य स्वीकरणीयमेव।

अयं कथाग्रन्थोऽतीव मनोरञ्जकः। मध्ये मध्ये उपदेशप्रदैर्वर्णनपरैश्च पद्यैर्ग्रथितमस्य गद्यं सरलम्। क्वचिन्मध्ये प्राकृतपद्यमपि विद्यते।

देशान्तरं प्रस्थितः कश्चन मदनसेनो नाम वणिक् स्वस्त्रियो रक्षणार्थं गन्धर्वावतारभूतौ शुककाकौ न्ययुङ्क्त। अनन्तरमधर्मपथप्रस्थितां स्वामिनीमुपदेष्टुमिच्छन् काकः स्पष्टार्थमुपदिदेश। तेन कुपिता सा तं प्राणदण्डभीत्या न्यवारयत्। तथा दृष्ट्वा शुको बुद्धिमत्तया तामनुवर्त्तमानः अमुकवत् त्वम् अस्मिन् मार्गे सम्भविनीं बाधां निवारयितुमुपायान् जानासि न वेत्ति पृष्टवान्। नेत्युक्ते तया तां कथामेकां श्रावयति। न कथया प्रथमया तन्मनोरथः सिद्ध्यति। ततोऽन्यां श्रावयति। ततोऽपि परतोऽन्याम्। एवं कालं नयन्नसौ शुकस्तां रक्षितवानधर्माचरणाद्यावन्मदनसेनो गृहानागच्छत्। इदमेवात्र वर्ण्यं वस्तु। आसु कथासु असतीनां स्त्रीणां छलव्यवहारा एव मुख्यतया वर्णिताः।

इमे वर्णिता ग्रन्थाः कस्यापि धर्मविशेषस्य प्रचाराय न कृताः। धर्मविशेषप्रचारमुद्दिश्यापि जैन-बौद्धमतानुसारिभिः कतिपये ग्रन्था निरमीयन्त। मतविशेषस्य कथाग्रन्थेषु साऽऽकर्षकता न दृश्यते या साधारणकथाग्रन्थेषु। बौद्धैर्विरचिताः कथाग्रन्था अवदाननाम्ना प्रथन्ते।

## अवदानशतकम्

ज्ञातेष्ववदानग्रन्थेषु अज्ञातकर्तृकम् अवदानशतकम् प्राचीनतमम्। खीष्टतृतीयशताब्द्याः पूर्वार्धभागे ग्रन्थस्यास्य चीनभाषानुवादो जातस्तेन प्रथमा

द्वितीया वा खीष्टशताब्दी ग्रन्थस्यास्य रचनाकालो निर्धारयितुं शक्यते। खीष्टशताब्दीपूर्वकालप्रणीतस्त्वयं ग्रन्थो नास्ति, यतोऽत्र दीनारशब्दप्रयोगः प्राप्यते। नहि ततो बहुपूर्वकाले दीनारशब्दः प्रचिलितप्रयोग आसीत्। दशकाव्येषु खण्डेषु विभज्यमानस्यास्य ग्रन्थस्य विनयपिटकाधारता प्रतीता। अत्र साहित्यिकगौरवं स्वल्पमात्रम्, अधिकं शिक्षादायकत्वमेव। ऐतिहासिक-कथानामपि निवेशोऽत्र विद्यते, यथा—बिम्बसारस्य पत्नी श्रीमती बुद्धशेषास्थि-पूजापरायणा तत्पूजानिषेधिकाया अजातशत्रोराज्ञाया उल्लङ्घनेन राजादेशान्निहता भूत्वा स्वर्गं गतेति।

## दिव्यावदानम्

अयमपि ग्रन्थोऽज्ञातकर्तृक एव नानाग्रन्थानाम् विशेषतो विनयपिटकस्य कथाः संगृह्य ग्रन्थोऽयं प्रणीतः। अयं भागद्वयविभागवान् ग्रन्थः पूर्वभागे महायानसम्प्रदायस्य द्वितीयभागे हीनयानसम्प्रदायस्य च सिद्धान्तान् गर्भीकरोति। तएद्ग्रन्थप्रणेता अश्वघोषकृतीनां ज्ञाताऽऽसीदिति भावसाम्यं प्रत्याययति। तथा हि अश्वघोषेण यत्र—'अतीत्य मर्त्याननुपेत्य देवान्' इत्युक्तं तत्र दिव्यावदाने 'अतिक्रान्तो मानुषवर्णमप्राप्तश्च दिव्यवर्णम्' इत्युक्तम्।

खीष्टद्वितीयशतकेऽस्य प्रणयनं कृतं स्यादित्यनुमातुं शक्यते. यतोऽवदानशतकात्पूर्वकालिकत्वमस्य वक्तुमशक्यम्। खी० २६५ तमे वर्षे दिव्यावदानगतायाः शार्दूलकर्णविदानकथायाः चीनभाषानुवादो जातः। अतः प्रथमद्वितीयखीष्टशतकयोरन्तराले लब्धोदयस्य अवदानशतकस्यासन्नोत्तरकालत्वमस्य निश्चितम्। अत्र वर्णिताः कथा नानारसाः। कुणालस्य कथा त्वतिकरुणा। विविधप्रकारकगद्यपद्योपवृंहितमिदं पुस्तकं बहुग्रन्थाश्रितं सम्भाव्यते।

## आर्यसूरिकृता जातकमाला

जातकमालाशब्देन बोधिसत्त्वानां पूर्वजन्मकथासंग्रहो बुध्यते। भगवता बोधिसत्त्वानां पूर्वजन्मस्मरत्वेन तत्कथा अत्र वर्णिताः। पालीग्रन्था अस्या जातकमालाया आधारभूताः। शैली चात्राश्वघोषकाव्यानुकारिणी। अत्र प्राचीनेतिहासो नास्ति। बौद्धमतस्य सर्वविधाः सिद्धान्त अत्रोपनिबद्धाः।

गद्यानि पद्यानि चात्र चमत्कारीणि। दानधर्ममहत्त्ववर्णनप्रसङ्गे शिबिराजकुले अवतीर्णस्य बोधिसत्त्वस्य एका कथा प्रस्तूयते। कश्चिदन्धो ब्राह्मणः तमेकमक्षि याचितवान् स च तस्मै एकस्याक्ष्णः स्थानेऽक्षिद्वयं दातुं प्रवृत्तः। अक्षिस्थाने वस्त्वन्तरप्रदानाय प्रार्थयतो मन्त्रिणो बोधिसत्त्वः प्राह—

'यदेव याच्येत तदेव दद्यान्नानीप्सितं प्रीणयतीह दत्तम्।
किमुह्यमानस्य जलेन तोयैर्दास्याम्यतः प्रार्थितमर्थमस्मै॥'

पुनरपि सचिवैरनुरुध्यमानो बोधिसत्त्वः प्राह—

'नायं यत्नः सार्वभौमत्वमाप्तुं नैव स्वर्गं नापवर्गं न कीर्त्तिम्।
त्रातुंलोकानित्ययं त्वादरो मे याच्ञाक्लेशो मा च भूदस्य मोघः॥'

आर्यसूरिणः कवित्वेन कथास्वासु कापि नवैव च्छटा समागता। तदीया जातकमाला क्वचित् क्वचिदतीव कर्णरसायनं पद्यमुपस्थापयति—

'ततश्चकम्पे सधराधरा धरा विलङ्घ्य वेलां प्रससार सागरः।'

जातकमालाया बौद्धसम्प्रदायग्रन्थतया पालीग्रन्थाधारतया च यदि क्वचित् पालीशब्दाः प्राप्यन्ते तर्हि न विस्मयस्य स्थानमिदम्।

१०००तमे खीष्टाब्दे जातकमालायाश्चीनभाषानुवादो जातः। खीष्टसप्तमशतके भारतभुवमागतस्य चीनयात्रिण इत्सिङ्गस्य जातकमाला ज्ञाने आसीत्। अतः सप्तमशतकात्पूर्वं पञ्चमं शतकं षष्ठं वाऽस्या रचनायाः कालः प्रत्येतव्यो भवति।

यत्तु तारानाथमहोदयेन अश्वघोषस्यैव आर्यसूरिरूपतोक्ता तदसारं पर्याप्तप्रमाणविरहात्, अश्वघोषकृति-जातकमालयोः शैलीभेदाच्च।

बौद्धसाहित्यवत् जैनसाहित्यमपि कथासाहित्यस्वरूपेण अङ्गेन पूर्णं विद्यते। बौद्धकथावत् जैनकथा अपि उपदेशार्थमेव सृष्टाः प्रतिभान्ति। तत्र प्रसिद्धा—

## सिद्धर्षेः उपमितिभवप्रपञ्चकथा

लोककथारूपेण भावानां पात्रीकरणद्वारकप्रतीककथारूपेण चात्र मनुष्यजीवनं व्याख्यातम्। प्रतीकात्मकसंस्कृतभाषाबद्धसाहित्ये सर्वप्रथमसृष्टतयाऽस्य मूल्यं महत्। अयं ग्रन्थः सिद्धर्षिणा ९०६ तमे खीष्टाब्दे प्रणीतः भूमिकान्ते ग्रन्थकृता स्वयं विवृततयाऽत्रत्यं रूपकं सुबोधमजनि। सरला भाषा बालबोधिनी। साहित्यिकदृष्ट्या नेदं तथा मनोरञ्जकं यथोपदेशदृष्ट्या।

## हेमचन्द्रस्य परिशिष्टपर्व

अयं ग्रन्थो हेमचन्द्रेण स्वप्रणीतस्य त्रिषष्टिशलाकापुरुषचरितनामकस्य ग्रन्थस्य परिशिष्टरूपतया निर्मितः। अस्य समयः १०८८–११७२ खीष्टाब्दः। जैनधर्मप्रचाराय सरला उपदेशिकाश्च कथा अत्र ग्रथिताः जैनधर्मपक्षपातेन महाराज चन्द्रगुप्तोऽपि जैनधर्ममत्राङ्गीकारित इतीतिहासविदोऽस्य दोषमुद्भावयन्ति।

## कथासाहित्ये पशुपक्षिकथाः

संस्कृतभाषायां विविधाः कथाः प्राप्यन्ते। प्रथमाः मनोरञ्जनमात्रफलाः बृहत्कथाप्रवर्त्तितरूपाः, द्वितीयाश्च पञ्चतन्त्रप्रवृत्ताः सदाचारराजनीत्योः शिक्षाप्रदायिन्यः। अनयोर्बाह्यरूपसाम्येऽपि आन्तरिकस्वरूपे महदन्तरम्। अतो बृहत्कथापथप्रवृत्ताः कथा लोकप्रियकथाशब्देन पञ्चतन्त्रपथप्रवृत्ताश्च कथाः शिक्षाकथायां पशुपक्षिकथाशब्देनाभिधातुं शक्यन्ते।

## पशुपक्षिकथाविकासः

वैदिकसाहित्ये ईदृश्यः कथा न सन्ति। छान्दोग्योपनिषदि सत्यकामस्य ऋषभहंसादिसकाशाद् ब्रह्मज्ञानं लभमानस्य वृत्ते पशुपक्षिकथाया बीजं

दृश्यते। महाभारते पशुपक्षिकथानां स्वरूपं किञ्चित् स्फुटम्। तत्र मार्जारमूषककथायां धृतराष्ट्रं प्रत्युपदेशः प्रकाशितः।

बौद्धधर्मप्रचारेणेदृशकथासाहित्यस्य महानुदयो जातः। स्वधर्मप्रचाराय बौद्धैर्विविधाः पश्वादिकथाः प्रवर्तिताः। भरहुत-नामके स्थाने यद् बौद्धानां स्मारकमुपलब्धं तेन ख्रीष्टपूर्वद्वितीयशतके पश्वादिकथायाः प्रचारः सिद्धयति।

नीतिशिक्षार्थं प्रवर्त्तितासु कथासु पञ्चतन्त्रकृता नीतिशास्त्रात् अर्थशास्त्राच्च विपुला सामग्री संगृहीता।

'मनवे वाचस्पतये शुक्राय पराशराय ससुताय।
चाणक्याय च विदुषे नमोऽस्तु नयशास्त्रकर्तृभ्यः॥'

इति पञ्चतन्त्रस्य भूमिकायां नमस्कारविधया नानानीतिशास्त्रकृतामुल्लेखो दृश्यते। तदयं पञ्चतन्त्रनामा पशुपक्षिकथाप्रभेदो नितरां शिक्षाप्रदो विद्यते। अयं पञ्चतन्त्रग्रन्थः कतिचनान्यानपि ग्रन्थानाधारीकरोति। वेतालपञ्चविंशतिका, शुकसप्ततिः, सिंहासनद्वात्रिंशतिका, हितोपदेश इत्यादयो ग्रन्थाः पञ्चतन्त्रमेवाश्रित्य निर्मिता इति प्रसिद्धम्।

पञ्चतन्त्रस्य पञ्चाशद्भाषास्वनुवादो जात इति ग्रन्थस्यास्य लोकप्रियता प्रत्यायिता भवति। भारतवर्षस्याशेषासु भाषासु अन्यदेशभाषास्वपि च पञ्चतन्त्रस्यानुवादो दृश्यते। संसारे धर्मग्रन्थानतिरिच्य केनाप्यन्येन लौकिकग्रन्थेनैतावानादरो नाधिगत इति कथनं भूतार्थव्याहृतिरेव।

## पञ्चतन्त्रस्य शाखाभेदः

दक्षिणापथप्रथिते नेपालदेशीये च पञ्चतन्त्रे पञ्चतन्त्रमिति नाम समानम्। अतो मूलभूतं पुस्तकं पञ्चतन्त्रनामकमासीदिति वक्तुं सुशकम्। तन्त्रपदेन अध्याया उच्यन्ते, 'तन्त्रैः पञ्चभिरेतच्चकार सुमनोहरं शास्त्रम्' इति स्मरणात्।

पञ्चतन्त्रं नाम नैकं पुस्तकमपि तु शास्त्रमिदम्। अत्र शास्त्रे समानाभिधेयाः समानोद्देश्याः समानबहुलांशाश्च बहवो ग्रन्थाः सन्ति। पञ्चतन्त्रस्य शाखा बहुविस्ताराः। तत्र अर्धाधिको भागो विदेशेषु प्रसिद्धः। ११०० तमे ख्रीष्टाब्दे हिब्रू-भाषायामस्यानुवादो जातोऽनन्तरमन्यान्यासु वैदेशिकभाषासु जातैरनुवादैरयं ग्रन्थः पाश्चात्यदेशान् व्याप्य तिष्ठति। सम्प्रति 'यावा' द्वीपादारभ्य 'आइसलैण्ड' पर्यन्तमस्य प्रचारो दृश्यते।

## पञ्चतन्त्रस्य शाखाः

सर्वासामपि शाखानामेकं समानं मूलम्। शाखास्तु—(१) नेपालीयं पञ्चतन्त्रम्, (२) दक्षिणापथीयं पञ्चतन्त्रम्, (३) हितोपदेशः, (४) बृहत्कथान्तर्गतं पञ्चतन्त्रं यत् क्षेमेन्द्रेण सोमदेवेन च वर्णितम्, (५) तन्त्राख्यायिका, (६) सरलग्रन्थः, (७) पूर्णभद्रप्रणीतः, पञ्चतन्त्रग्रन्थश्च।

**१. नेपालीयं पञ्चतन्त्रम्**

नेपालीयपञ्चतन्त्रस्य अनेकानि हस्तलिखितिपुस्तकानि अधिगतानि। एषां मध्ये एकस्मिन् पद्यभागमात्रं विद्यते, अपरस्मिन् पद्यभागेन समं गद्यभागोऽपि। अत्र कालिदासीयमेकं पद्यमुद्धृतमिति कालिदासादर्वाग्भवत्वमस्य प्रतीयते। इतोऽधिकमस्य रचनाकालसम्बन्धे कथयितुं न शक्यते।

**२. दक्षिणापथीयं पञ्चतन्त्रम्**

अत्रापि कालीदासीयमेकं पद्यमुद्धृतमिति ततोऽर्वाग्भवत्वमस्य सिद्ध्यति। अस्मिन् यावान् मौलिकपञ्चतन्त्रांशः न तावान् सरलग्रन्थे तन्त्राख्यायिकायां वा। अस्मिन् बहवः कथाः प्रक्षिप्ता अपि सन्ति।

**३. हितोपदेशः**

नारायणनामकेन केनापि पण्डितेनायं सङ्ग्रहः कृतः। अत्र स्वयमुक्तं—'पञ्चतन्त्रात्तथान्यस्माद् ग्रन्थादाकृष्य लिख्यते' इति। तेनास्य पञ्चतन्त्ररूपान्तरत्वमुक्तं भवति। आचारशिक्षाऽस्य ग्रन्थस्य मुख्यमुद्देश्यम्। अत्रत्याः कथा नानाग्रन्थेभ्यो गृहीताः, यथा—मुनिमूषिककथा महाभारताद् गृहीता, चतुरमतिस्त्रीकथा शुकसप्ततितो गृहीता, वीरवरकथा वेतालपंचविंशतिकातो गृहीता।

(क) नेपाले हितोपदेशस्यैकं १३७३ ख्रीष्टलिखितं पुस्तकं प्राप्तम्।

(ख) भट्टारकवारशब्दप्रयोगात् ९०० ख्रीष्टतोऽर्वाग्भवत्वमायाति।

(ग) माघात् कामन्दकीयनीतिसाराच्च। बहुविषयादानात्ततोऽर्वाग्भवत्वमायाति। तदेवं सकलवस्तुपर्यालोचनयाऽस्य कालः १००१ ख्रीष्टमितः प्रत्ययो भवति।

**४. बृहत्कथान्तर्गतं पञ्चतन्त्रम्**—बृहत्कथायां पञ्चतन्त्रस्य यद्रूपमासीत्तदेव काश्मीरेषु समुपचितं सद् बृहत्कथामञ्जर्यां कथासरित्सागरे चावर्ण्यत। क्षेमेन्द्रेण मञ्जर्यां सोमदेवेन कथासरित्सागरे चास्यैव पञ्चतन्त्रस्य कथाभागो वर्णित इति विदुषामाशयः। अत्र क्वचित् संक्षिप्तत्वं क्वचिद् रूपान्तरितत्वमपि दृश्यते।

**५. तन्त्राख्यायिका**—पञ्चतन्त्रस्यैव रूपविशेषः तन्त्राख्यायिका-नाम्ना प्रसिद्धः। काश्मीरदेशे शारदालिप्यामस्यैकमेव पुस्तकमधुनावधि प्राप्तम्। तन्त्राख्यायिकायामाद्यपञ्चतन्त्रस्य यावानंशः सुरक्षितो विद्यते तावानंशो नान्यत्र। अत्र बहवः कथाः प्रक्षिप्ता अपि सन्ति, यथा—नीलश्रृगालस्य, चतुरजम्बुकस्य, सोमिलकतन्तुवायस्य, कुटिलकुट्टिन्याः, नृपशिवेः, वृद्धहंसस्य लशुनचौरस्य, चीरवेषधारिणश्च कथाः। अस्या रचनाकालो निश्चित्य वक्तुमशक्यः।

**६. सरलग्रन्थः**—अयमपि पञ्चतन्त्राधारकस्तद्रूपान्तरभूतो वा ग्रन्थः। अस्य तन्त्राख्यायिकया सह महत्साम्यं वर्त्तते। अत्र वैदिकमुनीनां नामानि नोपलभ्यन्ते, जैनमतप्रसिद्धानां दिगम्बरनग्नकक्षपणकधर्म—देशनामप्रभृतीनां शब्दानां प्रयोगस्य दर्शनेन 'जैनः कश्चिदस्य ग्रन्थस्य रचयिते'ति तर्कयन्ति कतिपये। अत्र माघकाव्यात् पद्यानि उद्धृतानि, पूर्णभद्रश्चामुं स्मरति, तदयं ग्रन्थः ख्रीष्टीयैकादशशतकसम्भवः स्यादिति विश्वसन्ति।

**७. पूर्णभद्रस्य पञ्चतन्त्रम् ( पञ्चाख्यानकम् )**—पंचाख्यानकनाम्ना प्रसिद्धः पूर्णभद्रकृतोऽयं ग्रन्थः तन्त्राख्यायिकाम् अन्यानपि च तद्विषयकग्रन्थान् विलोक्य कृतः प्रतीयते। सोमाख्यस्य कस्यचिन्मन्त्रिणः प्रसन्नतायै पूर्णभद्रेण ११९९ तमे खीष्टीये ग्रन्थोऽयं लिखितः।

## मूलपञ्चतन्त्रप्रणेता

विष्णुशर्मा अमरशक्तिनामकस्य नृपस्य त्रीन् पुत्रान् षड्भिर्मासैः राजनीतिं शिक्षयितुं ग्रन्थमिमं प्रणीतवानिति पञ्चतन्त्रस्य भूमिकातः प्रतीयते। हस्त्यश्वादियानसाधनं विहायात्रोष्ट्राऽसकृद्वर्णित इति काश्मीरदेश्योऽयं विष्णुशर्मा सम्भाव्यते।

## रचनाकालः

आद्य-पञ्चतन्त्रान्तर्गतत्वेन सम्भाविते एकत्र पद्ये दीनार-शब्दो विद्यते। दीनारो नाम मुद्राविशेषः। स हि रोमनमुद्राविशेषः ग्रीसदेश-मार्गेण प्राच्य-भारतादिदेशेषु प्रचारमासादितवान्।

५५० तमे खीष्टाब्दे 'वरजोई' महाशयेनास्य पञ्चतन्त्रग्रन्थस्य पहलवी-भाषायामनुवादः कृतः। एतेन सर्वेण विचार्यमाणेन तृतीये द्वितीये वा खीष्टशतके पंचतन्त्रस्य रचना जातेति बाढं प्रत्येतुं शक्यते।

## पञ्चतन्त्रकथानां रूपान्तराणि

१. ५३१–५७९ खीष्टसमये वैद्यवरबार्जोईमहाशयेन पञ्चतन्त्रस्य पह्लवीभाषायां 'करकट-दमनक-कथा'नाम्ना रूपान्तरं प्रकटीकृतम्। इदं पञ्चतन्त्रस्य प्रथमं रूपान्तरं तन्त्राख्यायिकास्वरूपमनुहरति। इदं रूपान्तरं नष्टं जातम्।

२. पञ्चतन्त्रस्य द्वितीयं रूपान्तरं ७५० तमे खीष्टाब्दे बूद-महाशयस्य प्रयत्नेन प्राचीन-सीरियन्-भाषायामजायत, यदेकपुस्तकात्मकमद्यापि प्राप्यमस्ति।

३. प्रागुक्तं पञ्चतन्त्रस्य सीरियन्-रूपान्तरं ७५० खीष्टहायने 'अब्दुल्लः इब्नुलमौकफ्फा'नाम्ना विदुषा 'कलीलः-व-दिम्नः' इति नाम्ना अरबभाषायां परिवर्त्तितम्। एतदेव रूपान्तरं सर्वेषां पाश्चात्यदेशप्रचलितभाषासु प्रथितानां पञ्चतन्त्राधारकथाग्रन्थानां मूलमिति पुरातत्त्वविदां निश्चयः।

४. १०८० खीष्टाब्दसमीपे 'कलीलः-व-दिम्नः' इति नाम्ना प्रथितमरब-भाषा-पञ्चतन्त्रम्, तत्कालप्रचलितायां सीरियन्-भाषायां स्पेनदेशभाषायां च अनूदितमजायत।

५. अरबभाषामयस्य पञ्चतन्त्रस्य ग्रीकभाषामयं रूपान्तरमाधारीकृत्य इटलीभाषामयं पंचतन्त्रम् जर्मनभाषामयं पंचतन्त्रम्, लैटिनभाषामयं पंचतन्त्र-द्वयम्, नानाविधानि स्लैवोनिकभाषामयानि च पंचतन्त्राण्यजायन्त। तदीह सर्वेषु रूपान्तरेषु प्रकृतिभूतस्य ग्रीकभाषामयस्य पंचतन्त्रस्य महत्त्वमधिकम्।

६. एवं नानाभाषासु रूपान्तरं भजमानस्यास्य पंचतन्त्रग्रन्थस्य जौह्न-महाशयैः १२६३–१२७८ ख्रीष्टान्तराले लैटिनभाषायामनुवादः कृतो यो १४८० ख्रीष्टाब्दे द्विरमुद्रयत।

७. अयमेव लैटिनभाषानिबद्धो पंचतन्त्रग्रन्थः १४८३ ख्रीष्टाब्दे एन्थोनियस वॉन फर ( Anthonius Von Pforr ) नामकेन विदुषा पुनर्जर्मनभाषाया-मनूदितः। अनेन साहित्येन जर्मनसाहित्यं भृशं प्रभावितं जातम्। अस्यानुवादौ १५४६ ख्रीष्टाब्दे इटलीभाषायाम् १५५६ ख्रीष्टाब्दे च फ्रेंचभाषायां जातौ।

तदयं ग्रन्थो विविधदेशभाषासु रूपान्तराण्याकलयन् समस्तमपि विश्वं व्याप्तवान्। एषा एव प्रसारदशा पाश्चात्यदेशयात्राशब्देनाप्युच्यते।

## पञ्चतन्त्रस्य शैली

हृद्या सरला च पंचतन्त्रस्य शैली। लोकाचारं राजनीतिं च शिक्षयितुं विरचितेऽत्र ग्रन्थे निबद्ध्यमानाः सर्वा अपि कथाः कमपि उपदेशमन्तर्धारयन्ति, तेन परस्परानुस्यूतेऽपि पंचतन्त्रीयकथाप्रपंचे क्वचिदपि वैरस्यं नोपलक्ष्यते। पंचतन्त्रप्रणेतरि विष्णुशर्मणि निपुणराजनीतिज्ञस्य सिद्धहस्तवर्णनपरस्य च समधिकं सामञ्जस्यं दृश्यते। भाषा सर्वत्र प्राञ्जला।



# साहित्यशास्त्रम्, अलङ्कारशास्त्रं वा

साहित्यशास्त्रशब्देन मया तत् साहित्याङ्गं विवक्षितं, यत्र काव्यभेदतत्स्वरूपतद्गतदोषगुणालङ्कारादिनिरूपणं क्रियते। काव्यस्वरूपनिरूपणप्रसङ्ग एव तद्विभावादिरूपतया नायिकानां नायकानां च भेदा अपि प्राप्तनिरूपणा भवन्ति तेन तदप्यस्य शास्त्रस्याङ्गभावं भजते। इदं शास्त्रं वेदानां लौकिककाव्यग्रन्थानां च ज्ञानाय नितान्तमपेक्षितम्। इदमेव शास्त्रं प्रागलङ्कारशास्त्रनाम्ना व्यवह्रियते स्म, यतः पुरा काव्यजीवनतयाऽलङ्कारा एव मन्यन्ते स्म। अस्य शास्त्रस्योपयोगित्वमवेक्ष्यैव राजशेखरः शास्त्रमिदं वेदाङ्गमभ्युपगतवान्। 'उपकारकत्वादलङ्कारः सप्तममङ्गमिति यायावरीयः, ऋते च तत्स्वरूपपरिज्ञानाद्वेदार्थानवगतिः'। नैतावदेव, राजशेखरेण तु साहित्यशास्त्रं चतसृणामपि विद्यानां सारभूतमभ्युपगतम्—'पञ्चमी साहित्यविद्येति यायावरीयः, सा हि चतसृणामपि विद्यानां निष्यन्दः।'

आधुनिकेषु सर्वप्रथमोऽलङ्कारशास्त्रग्रन्थो भामहप्रणीतः काव्यालङ्कार एव, अतोऽस्य शास्त्रस्य अलङ्कारशास्त्रनाम्ना प्रसिद्धिः। वस्तुतस्तु तन्नाम न समुचितं यतस्तत्रालङ्कारातिरिक्तानामपि साहित्याङ्गानां विवेचनं क्रियत एव। राजशेखर इमामनुपपत्तिं मनसिकृत्यैव शास्त्रमिदं साहित्यविद्यानाम्ना व्यवहृतवान्। उपयुक्तमपीदं नाम न प्रचारमभजत।

अतिप्राचीनकाले शास्त्रमिदं क्रियाकल्पनाम्ना व्यवह्रियते स्म। वात्स्यायनेन कामसूत्रे चतुष्षष्टिकलासु क्रियाकल्पस्य गणना कृता। तत्र क्रियया काव्यग्रन्थाः, कल्पेन च विधानमभिप्रेतम्, तदिदं क्रियाकल्पपदं साहित्यविद्यापरं पर्यवस्यति। इदमपि नाम न प्रचरितम्।

वामनस्तु सौन्दर्यमलङ्कार इत्युक्त्वा काव्यगतान् सर्वानेव ध्वनिरसगुणतत्तदलङ्कारादीनलङ्कारशब्देन सञ्जग्राह। तदनुसारेण अलङ्कारशास्त्रं साहित्यशास्त्रपर्यायतामर्हति।

## साहित्यशास्त्रस्य प्राचीनता

राजशेखरेण अलङ्कारशास्त्रस्य प्राचीनतामुपक्रम्यैका कथा लिखिता—शङ्करोऽलङ्कारशास्त्रस्य शिक्षां सर्वप्रथमं ब्रह्मणे दत्तवान्, ब्रह्मा च देवेभ्यः कतिभ्यश्चनर्षिभ्यश्च तच्छिक्षां ददौ। तदनुसृत्याष्टादश ब्रह्मशिष्या अष्टादशस्वधिकरणेषु शास्त्रमिदं निबद्धवन्तः। नन्दिकेश्वरो रसं निरूपितवान्, धिषणो दोषान्, भरतश्च रूपकाणि निरूपितवान्।

काव्यादर्शटीका हृदयङ्गमा तु—काश्यप-वररुची प्रथमालङ्कारकर्त्तारौ निर्दिशति।

यत्तु केचन अग्निपुराणस्य प्रथमालङ्कारग्रन्थत्वमाहुस्तदतितुच्छम्, बहुभिः प्रमाणैरग्निपुराणस्य प्राचीनताया निरस्तत्वात् ।

आस्तां प्राचीना कथा, द्वितीयशतकस्य शिलालेखास्तत्कालेऽलङ्कारशास्त्रस्योदये साक्षिणः, रुद्रदाम्नः शिलालेखस्य केवला भाषैव नालङ्कारपूर्णाऽपि तु तत्रालङ्कारशास्त्रसिद्धान्तानां निर्देशोऽपि प्राप्यते । हरिषेणः समुद्रगुप्तं प्रतिष्ठितकविराजशब्दं लिखित्वाऽलङ्कारशास्त्रसद्भावं व्यञ्जयति । पाणिनिसूत्रेषु—कृशाश्वशिलालिभ्यां निर्मितानि नाटचशास्त्रीयसूत्राणि स्मर्यन्ते । पाणिनेरपि पूर्वकालिको गार्ग्य उपमां साधु लक्षितवान् । निरुक्तेऽपि उपमाया उदाहरणतयाऽनेके मन्त्रा उद्धृताः । तदित्थमलङ्कारशास्त्रस्य प्राचीनता प्रमाणिता भवति ।

## भरतः तदीयं नाटचशास्त्रञ्च

पौराणिकवंशक्रमानुसारेण भरतो व्यासवाल्मीकिभ्यां पश्चाद्वर्त्ती भवन्नपि इतरेभ्यः समेभ्यः संस्कृतभाषायां लेखकेभ्यः प्राचीनः प्रतीयते । भरतकृतस्य नाटचशास्त्रस्य राहुलककृता टीकाऽभिनवगुप्तेन स्मर्यते । राहुलकस्य नाम तामिलमहाकाव्ये 'मणिमेकलये' ( Manimekalai ) समायातम् । 'मणिमेकलये' नामकस्य तस्य तामिलग्रन्थस्य रचनाकालः चतुर्थं ई० पू० मन्यते, अतो भरतस्य तत्पूर्वकालिकता समायाति । भरतस्य प्राचीनाष्टीकाकारा एवातिप्राचीनास्तस्य प्राचीनतरतां साधयन्ति । कालिदासोऽपि भरतं स्मरतीति तदप्यस्य प्राचीनतां प्रमापयति ।

भरतद्वयं प्रथमे—एको वृद्धभरत आदिभरतो वा, अपरो भरतः । वृद्धभरतस्य कृतिर्द्वादशसाहस्रीशब्देन व्यवहृता, भरतस्य कृतिश्च शतसाहस्रीशब्देन । भरतस्य प्राचीनतयैव तं मुनिमाहुः ।

सम्प्रत्युपलभ्यमानं नाटचशास्त्रं भरतस्य कृतिः । इदं क्वचित् ३६ अध्यायात्मकं, क्वचिच्च ३७ अध्यायात्मकं कथ्यते । मन्ये लेखकप्रमादात् कोऽप्यध्यायो विभक्तः स्यात् । अभिनवगुप्तः स्वीयायां भरतसूत्रस्य टीकायां सप्तत्रिंशतोऽध्यायाँल्लिखितवान् । प्रत्यध्यायप्रारम्भमसौ श्लोकमेकं शिवनमस्कारात्मकं लिखति, येन काश्मीरकशैवप्रत्यभिज्ञाशास्त्रीयषट्त्रिंशत्तत्त्वानि निर्दशितानि भवन्ति, सप्तत्रिंशे चाध्यायेऽनुत्तरं शिवं स्तौति—

'आकाङ्क्षाणां प्रशमनविधेः पूर्वभावावधीनां
धाराप्राप्तस्तुतिगुरुगिरां गुह्यतत्त्वप्रतिष्ठा ।
ऊर्ध्वादन्यः परभुवि न वा यत्समानं चकास्ति
प्रौढानन्तं तदहमधुनाऽनुत्तरं धाम वन्दे ॥'

इदमपि सम्भवति यदभिनवगुप्त एव तत्त्वानि अनुत्तरं च निर्देष्टुमिच्छुः कमप्यध्यायं विभज्याध्यायसंख्यां वर्धितवान् स्यात् ।

प्राप्ते भरतसूत्रे ५००० श्लोकास्तथा कियद्गद्यमपि विद्यते। षष्ठे, सप्तमे, अष्टाविंशे चाध्याये केवले गद्यभागो लभ्यते। इतिहासविदः कथयन्ति यन्नाट्यशास्त्रं नैकस्मिन् काले रचितमपि तु दीर्घकालिकस्य साहित्यतत्त्वनिर्णयप्रयासस्य फलमिदं शास्त्रम्।

नाट्यशास्त्रे त्रयोंऽशा विद्यन्ते—१. सूत्रं भाष्यञ्च, अयमंशः प्राचीनतमः : २. कारिका, मूलाभिप्रायं बोधयितुं कारिका व्यरच्यन्त। ३. अनुवंश्यश्लोकाः, इमे श्लोका भरतादपि प्राचीनैराचार्यैं रचिताः, स्वमतं प्रमाणयितुं भरतेनोपन्यस्ता इत्युक्तमभिनवगुप्तेन—

'ता एता ह्यार्या एकप्रघट्टकतया पूर्वाचार्यैर्लक्षणत्वेन पठिताः, मुनिना तु सुखसंग्रहाय यथास्थानं निवेशिताः।'

भरतो रससम्प्रदायस्याचार्यः। एतन्मते नाटकेषु रस एव प्रधानम्। अलङ्कारास्त्वनेन प्रसङ्गतो निरूपिता ६-७-१६ अध्यायेषु।

## भामहः, तदीयः काव्यालङ्कारश्च

भामहः काश्मीरवासी रक्रिलगोमिनः पुत्रश्चासीत्। गोमिनपदं बौद्धेषु प्रयुज्यते यथा चन्द्रगोमीत्यादि, अतोऽयं बौद्ध इति, किञ्च स्वीयस्य काव्यालङ्कारस्यारम्भेऽयं सार्वसर्वज्ञस्य स्तुतिं कृतवानतश्च बौद्धोऽयमिति बहुभिः सन्दिह्यते। वस्तुतस्तु अयं हिन्दूधर्मावलम्बी आसीद् यतोऽनेन यागादीनां सोमपानस्य च रामायणीयपात्राणां च प्रशंसां यथाप्रसङ्गं कृता। नैतावदेव, अपोहवादस्यालोचनापीमं हिन्दूधर्मावलम्बिनं गमयति।

भामहस्य समयः क इति विषये महान् मतभेदो विद्यते। दण्डिभामहयोः कः पूर्ववर्त्तीति निर्णयोऽत्र प्रकाशमाधातुमलम्। सौभाग्येनाधुना दण्डी भामहात्परवर्त्ती स्वीकृत एव, अतो यदि दण्डी सप्तमशतकप्रारम्भकालिकस्तदाऽयं षष्ठशतकवर्त्तीति वक्तव्यम्।

अष्टमशतकोत्पन्नो भट्टोद्भटो भामहकृतं काव्यालङ्कारं व्याख्यातवान् अतोऽयं तत्पूर्वकालिक इत्यपि पूर्वोक्तमतेऽनुकूलम्।

केचन पाश्चात्त्या विद्वांसो भामहकृतौ न्यासपदप्रयोगं दृष्ट्वा भामहं जिनेन्द्रबुद्धेर्न्यासकारात् परवर्त्तिनं मत्वा सप्तमशतकपरवर्त्तित्वमातिष्ठन्ते, परमिदं निर्मूलम्, अन्येषामेव न्यासग्रन्थस्य भामहेन स्मृतत्वस्य कल्पनीयत्वात्। अयमेव तर्को माघसमयनिरूपणप्रसङ्गेऽप्यागतः। धर्मकीर्त्ति-दिङ्नागयोर्मध्यकालिकोऽयमिति तदीयप्रत्यक्षलक्षणं दृष्ट्वा कथयन्तोऽपि षष्ठशतकमध्यवर्त्तित्वमाहुः। सप्तमशतकस्थभट्टिना भामहस्य श्लोकोऽनुकृतोऽतोऽपि पूर्वोक्तं मतं स्थाप्यते।

भामहेन विरचितः काव्यालङ्कारनामा एक एव ग्रन्थः प्राप्यते। वृत्तरत्नाकरे भामहनाम्ना लभ्यमानैः श्लोकैरनुमीयते यदनेन कोऽपि च्छन्दोग्रन्थोऽपि व्यरच्यत।

काव्यालङ्कारे षट् परिच्छेदाः। प्रथमे परिच्छेदे काव्यसाधनतल्लक्षणतद्भेदा वर्णिताः। द्वितीये तृतीये चालङ्कारा विवेचिताः। चतुर्थे भरतोक्ता दश दोषाः प्रपञ्चिताः। पंचमे न्यायविरोधिदोषो मीमांसितः। षष्ठे विवादास्पदपदशुद्धिर्विचारिता। संहत्यात्र ४०० श्लोकाः।

भरतादनन्तरमयमेव ग्रन्थोऽलङ्कारशास्त्रस्य सर्वमान्यः। एतत्पूर्ववर्त्तितया स्मर्यमाणस्य मेधाविरुद्रस्य कृतिस्तु नैवोपलभ्यते।

काव्यालङ्कारे—शब्दार्थयुगलस्य काव्यत्वम्, भरतोक्तदशगुणानां माधुर्यौजःप्रसादेष्वन्तर्भावः, वक्रोक्तेः सकलालङ्कारमूलत्वमिति विशिष्टसिद्धान्ताः।

## दण्डिनः काव्यादर्शः

दण्डिनः समयादिनिरूपणं गद्यकाव्यप्रसङ्गे द्रष्टव्यम्।

एतदीयः काव्यादर्शः परमलोकप्रियो ग्रन्थो यतोऽस्य कन्नडभाषायां 'कविराजमार्ग' नाम्ना, सिंहलभाषायाञ्च 'सिय-बसलकर' नाम्नाऽनुवादः कृतः।

अत्र ग्रन्थे ४ परिच्छेदाः ६६० श्लोकाश्च सन्ति। प्रथमे काव्यलक्षणं तद्भेदाश्च वैदर्भ्यादयो रीतयो दशगुणाश्च वर्णिताः, द्वितीये ३५ अलङ्काराः लक्षिता उदाहृताश्च येषूपमाप्रभेदा ध्यातव्याः, तृतीये शब्दालङ्कारविवेचना यत्र यमकप्रपंचः, चतुर्थे च दोषगवेषणा।

अयमलङ्कारसम्प्रदायस्थोऽपि रीतिविवेचकतया ख्यातः।

## वामनस्य काव्यालङ्कारसूत्रम्

वामनो जयापीडनाम्नः काश्मीरराजस्य राष्ट्रकूटवंश्यस्य गोविन्दतृतीयस्य च सभापण्डितः सचिवान्यतमश्चासीत्। जयापीडस्य शासनकालः ७७९–८१९ ई०, गोविन्दस्य शासनकालश्च ७९४–८१३ ई० मन्यतेऽतो वामनस्य समयोऽष्टमशतकस्य चरमभागो नवमशतकस्यादिभागश्च निश्चीयते।

अभिनवगुप्तो वामनं स्वग्रन्थे लोचने 'वामनाभिप्रायेणायमाक्षेपः' इति स्मरति, अतोऽभिनवगुप्तपूर्ववर्त्तिता, वामनश्च कादम्बरीम्, उत्तररामचरितम्, शिशुपालवधञ्चोदाहरति, अतो बाण-भवभूति,माघपरवर्त्तिता, एवञ्च तन्मध्यकालवर्त्तितेत्यपि पूर्वोक्तसमयवर्त्तित्वं वामनस्य समर्थ्यते।

वामनस्य काव्यालङ्कारसूत्रनामा ग्रन्थः स्वोपज्ञवृत्तिसहितः प्रसिद्धः। अत्र ग्रन्थेऽलङ्कारशास्त्रस्य सर्वेऽपि विषयाः सूत्रैर्निरूपिताः। ग्रन्थेऽस्मिन् पञ्चाध्यायाः ३१९ सूत्राणि च सन्ति। अत्राध्याया अधिकरणशब्देन व्यवहृताः। प्रथमेऽधिकरणे काव्यतत्प्रयोजनरीतयो निरूपिताः, द्वितीये पदवाक्यवाक्यार्थदोषा निरूपिताः, तृतीये गुणविवेचना कृता यत्र दशगुणानां शब्दार्थवृत्तितया विंशतिविधतोक्ता, चतुर्थे शब्दार्थालङ्काराः पंचमे कतिचनाशुद्धयो निर्दिष्टाः।

काव्यालङ्कारस्य प्राचीनष्टीकाकारः सहदेवः कथितवान् यद् वामनस्य कृतिर्नष्टा तदुद्धारश्च मुकुलभट्टेन कृतो यो ग्रन्थः सम्प्रति प्राप्यते। वामनस्य विशिष्टसिद्धान्ताः—१. गुणालङ्कारयोर्भिन्नता, २. रीतेस्त्रैविध्यम्, ३. वक्रोक्ते-

लक्षणारूपता. ४. विशेषोक्तेर्लक्षणवैचित्र्यम्, ५. समग्रस्याप्यर्थालङ्कारप्रपञ्चस्योपमारूपता।

वामनो रीतिमात्मानं काव्यस्याभिधत्ते। यद्यपि प्राचीना अपि विद्वांसो रीतिं न्यरूपयन्परं काव्यात्मतया रीतिर्वामनेनैवोक्ता।

## उद्भटस्य काव्यालङ्कारसारसङ्ग्रहः

उद्भटो वामनसमकालिकः तदाश्रितजयापीडाश्रितश्च, यथोक्तं राजतरङ्गिण्याम्—

'मनोरथः शङ्खदत्तश्चटकः सन्धिमाँस्तथा।
बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः॥'

उद्भटस्य प्रभूतवेतनत्वमप्युक्तं तत्रैव। एकराजाश्रितयोरपि वामनोद्भटयोः सिद्धान्तभेदो दृश्यते। वामनो रीतिसम्प्रदायं प्रवर्त्तयति, उद्भटश्चालङ्कार सम्प्रदायं पोषयति।

उद्भटप्रणीते "काव्यालङ्कारसारसंग्रहे' षड्वर्गाः ७९ कारिकाश्च यत्र ४१ अलङ्कारा निरूपिताः। अनेन—अर्थभेदे शब्दभेदः, शब्दश्लेषार्थश्लेषयोरुभयोरर्थालङ्कारता, अन्यालङ्कारसम्पृक्तस्य श्लेषस्य प्रधानता, वाक्ये त्रिधाऽभिधाव्यापारः, अर्थद्वैविध्यं चेत्यादयो विषया नूतनतया सिद्धान्तिताः।

एतत्प्रणीतो भामहविवरणनामा व्याख्याग्रन्थो लोचनादौ स्मर्यते।

## रुद्रटस्य काव्यालङ्कारः

रुद्रटः काश्मीरवासी सामवेदी शतानन्दापरनामा वामुकनामकस्य विदुषः पुत्रश्चासीत्। अनेन प्रणीतस्य काव्यालङ्कारस्य उद्धरणानि राजशेखरेण भोजराजेन प्रतिहारेन्दुराजेन च स्वीयग्रन्थेषु दत्तानि, अतोऽयं नवमशकोत्तरभागे अवर्त्ततेति कल्पना कर्त्तुं शक्यते। जैकोबीमहाशयो रुद्रटं शङ्करवर्मनाम्नोऽवन्तिवर्मपुत्रस्य समसामयिकं मन्यते। अतोऽपि पूर्वोक्त एव समयः सिद्धयति। रुद्रटकृतयस्तिस्रः—१. काव्यालङ्कारः, २. शृङ्गारतिलकम्, ३. त्रिपुरवधकाव्यञ्च।

तत्र रुद्रटस्य काव्यालङ्कारो विषयविवेचनदृष्ट्याऽतीवव्यापकः। काव्यप्रयोजनम्, तदुद्देश्यम्, कवितासामग्री, अलङ्कारः, भाषा, रीतिः, रसाः वृत्तयः सर्वेऽपीमे विषया अत्र ग्रन्थे, विवेचिताः, परमस्य विदुषोऽलङ्कारसम्प्रदायप्रवर्त्तकान्यतमत्वेनालङ्कारा एव मुख्यतां गमिताः। अत्र ग्रन्थे षोडशाध्यायाः पद्यानि च ७३४ मितानि सन्ति। अलङ्काराणां विभाजनं वर्गीकरणञ्च सर्वप्रथममनेनैव कृतम्। अलङ्काराणां चत्वारि मूलतत्त्वानि—वास्तवम्, औपम्यम्' अतिशयः, श्लेषश्चातोऽलङ्कारोश्चतुर्धेति तदीयस्तर्कः। प्राचीनैरुक्ताः कतिपयेऽलङ्कारास्त्यक्ताः, कतिचन नवा उक्ताः, कतीनाञ्च संज्ञा परिवर्त्तिता। तदेवं सर्वथा परिष्कृतोऽलङ्कारमार्गः। अलङ्कारशास्त्रे प्रथमोऽयमस्योपक्रमः।

## आनन्दवर्धनस्य ध्वन्यालोकः

आनन्दवर्धनः काश्मीरक्षितिपालस्य अवन्तिवर्मणः सभापण्डित आसीत् —

'मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः।

प्रथां रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मणः।' (इति राजतरङ्गिणी)

अवन्तिवर्मणः समयः ८५५-८८३ ई० विद्यते, अत आनन्दवर्धनोऽपि तत्कालिकः। आनन्दवर्धनो ध्वनिसम्प्रदायस्य प्रवर्त्तकेष्वाद्यः कथ्यते। इतः पूर्वमलङ्कारसम्प्रदायरीतिसम्प्रदायावेवास्तामनेन ध्वनिसम्प्रदायः प्रवर्तितः। एतत्कृतौ प्रतिपदं मौलिकता, गूढविषयव्यञ्जनक्षमता, विवेचनाशक्तिश्च प्रकाशन्ते। रसगङ्गाधरकारेण 'ध्वनिकृतामालङ्कारिकसरणिव्यवस्थापकत्वात्' इत्यादरोक्तिर्युक्तैव प्रकटीकृता।

ध्वन्यालोके त्रयोंऽशाः-कारिकाः, वृत्तयः, उदाहरणानि च। उदाहरणमनेककविकृतिभ्यो दत्तमिति व्यक्तमेव, कारिका वृत्तिश्चानन्दवर्धनकृतेति भूयांसो वदन्ति। कतिपये तु कारिकां कस्यचिदन्यस्याज्ञातनाम्नः कृतिं मन्यमानाः केवलां वृत्तिमेव आनन्दवर्धनस्य कार्यं मन्यन्ते।

अत्र ग्रन्थे १२९ कारिकाः। चतुर्षूद्योतेषु विभक्तेऽत्र ग्रन्थे प्रथमोद्योते ध्वनिविरोधिमतालोचना तत्स्थापना च, द्वितीयतृतीययोरुद्द्योतयोर्ध्वनिप्रकाराः, चतुर्थे ध्वनेरुपयोगिता निरूपिताः।

न केवलमयमाचार्यः परमस्य कवित्वशक्तिरपि विलक्षणा। ध्वन्यालोकातिरिक्ताः विषमबाणलीला, अर्जुनचरितम्, देवीशतकम् इति त्रयोऽस्य कविताग्रन्थाः प्रथन्ते।

## अभिनवगुप्तः

आनन्दवर्धनस्य पुण्यप्रकर्ष एव मन्ये मूर्त्तो भूत्वा अभिनवगुप्तात्मना प्रकटीभूतो यो ध्वन्यालोके लोचनमलिखत्। अयमभिनवगुप्तः काश्मीरवासी शैवदर्शनाचार्यस्तन्त्ररहस्यज्ञः साहित्यपारङ्गमश्च। अस्य कृतिषु ध्वन्यालोकस्य लोचनटीका, भरतकृतनाट्यशास्त्रस्य अभिनवभारती नाम टीका, तन्त्रालोकश्चेति त्रयो ग्रन्था नितान्तप्रौढाः प्रसिद्धाश्च दशमशतकोत्तरार्धमस्य महाविदुषः कालो निश्चितः। रससिद्धान्तप्रवर्त्तकतयाऽयं साहित्यशास्त्रस्य महोपकारकः वाग्देवतावतारः काव्यप्रकाशकारोऽप्येतद्विषये लिखति—'श्रीमदाचार्याभिनवगुप्तपादाः इति गौरवसूचकं वाक्यम्।

## कुन्तकस्य वक्रोक्तिजीवितम्

ध्वनिप्रस्थानस्य ध्वन्यालोकतल्लोचनाभ्यां परिष्कृतत्वेऽपि तद्विरोधाय कुन्तकः 'वक्रोक्तिजीवितम्' नाम वक्रोक्तिसम्प्रदायस्य मुख्यं ग्रन्थं निबबन्ध। अयं काश्मीरवासी एकादशशतकप्रारम्भसमुद्भवश्च। राजशेखरमहिमभट्टयोरन्तरालवर्त्ती कुन्तक इति पूर्वोक्तसमये साक्षिभूतम्।

वक्रोक्तिजीवितमपूर्णमेव लभ्यते। अत्र चत्वार उन्मेषा येषु वक्रोक्तेः प्रभेदानां साङ्गोपाङ्गवर्णनं कृतम्। वक्रोक्तिष्वेव ध्वनेरपि समावेश इत्यस्य मार्गस्य प्रधानं वक्तव्यम्।

## महिमभट्टस्य व्यक्तिविवेकः

श्रीधैर्यतनयः काश्मीरवासी महिमभट्टो ध्वनिविरोधी आचार्यः, अनेन सर्वस्य ध्वनेरनुमानेऽन्तर्भावं कर्त्तुं व्यक्तिविवेकः प्रणीतः—

'अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम्।
व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम्॥'

अनेन तर्कशास्त्रमाधारीकृत्य ध्वन्यालोकस्य विरोधाय प्रयासः कृतः। अस्मिन् प्रयासे तेनान्यग्रन्थसाहाय्यं न लब्धम्। ध्वनिविरोधे यद्यपि भट्टनायकस्य हृदयदर्पणनामा ग्रन्थस्तदा सद्योनिर्मितोऽवर्त्तत, परमनेन स ग्रन्थो नालोकितः, यथोक्तम्—

'सहसा यशोऽभिसर्त्तुं समुद्यताऽदृष्टदर्पणा मम धीः।

इयमस्योक्तिः स्वग्रन्थस्य नितान्तमौलिकताव्यञ्जनायैव।

सर्वप्रथमं महिमभट्टः अभिनवगुप्तस्य मतमालोचितवान् तदनन्तरं मम्मटेनास्य महिम्नो मतमालोचितम्। तदयं महिमभट्टः अभिनवगुप्तात् परवर्त्ती मम्मटात् पूर्ववर्त्ती च सिद्धो भवति। अभिनवगुप्तः १००० ई० स्थितो, मम्मटश्च १०५० ई० स्थितस्तयोर्मध्ये स्थितस्यास्यैकादशशतकप्रथमचरणे स्थितिरनुमीयते।

व्यक्तिविवेके त्रयो विमर्शाः सन्ति—प्रथमे ध्वनेरनुमानप्रकारत्वं व्यवस्थापितम्, द्वितीयेऽर्थविषयकानौचित्यं निरूपितम्, तृतीये बहिरङ्गानौचित्यं विवेचितम्। मम्मटेन ध्वनेरनुमानप्रकारतां खण्डयतापि दोषप्रसङ्गे महिमभट्टस्य सिद्धान्तः प्रचुरमादृतः।

## भोजराजस्य सरस्वतीकण्ठाभरणम्

महाराजो भोजो धारानगरशासकः परमारवंश्यश्चासीत्। स हि १०१८ ईशवीये सिंहासनारूढो भूत्वा १०६३ पर्यन्तं राज्यमकृतेति तस्य काल एकादशशतकम्। भोजस्य कविजनप्रियत्वं प्रसिद्धम्। शेषगिरिशास्त्रिणो लिखन्ति यदयं भोजो धारातः स्वां राजधानीम् उज्जयिनोमानीतवानिति 'आइने-अकबरी' पुस्तके लिखितं वर्त्तते। भोजराजेन साहित्यविद्यामधिकृत्य पुस्तकद्वयं प्रणीतम्—१. सरस्वतीकण्ठाभरणम् २. शृङ्गारप्रकाशः।

भोजराजस्य सरस्वतीकण्ठाभरणे अलङ्कारा दोषा गुणाश्च विस्तरेण विवेचिताः। भोजमते शृङ्गार एवैको रसोऽन्ये रसा अस्यैव विकाराः। अयं ग्रन्थश्चित्रकाव्यनिरूपणाय नितान्तं प्रथते।

## मम्मटस्य काव्यप्रकाशः

यावन्मम्मटस्योदयो नाजायत तावत्काले ध्वनिविरोधिनां शिरांस्युदनमन्, ध्वनिविरोधिनो ग्रन्था अरचिषत, परं मम्मटेन ध्वनिविरोधिनस्तथाऽधिक्षिप्ता यथा पुनस्ते ध्वनिं विरोद्धुं साहसं नाकुर्वन्। अत एव स्वयं काव्यप्रकाशकर्त्ता मम्मटः वाग्देवतावतारः ध्वनिप्रस्थापनपरमाचार्यश्चोच्यते। अस्यानुजौ कैयटोव्वटौ इति प्रसिद्धिः। अयं काश्मीरवासी भोजराजात् परवर्त्ती च। यतोऽनेन भोजराजस्य दानशौण्डत्वं प्रशंसितम्, अतोऽस्य समय एकादश-शतकस्य चरमभागः। मम्मटस्य विद्वत्तां प्रमाणयितुं तत्काव्यप्रकाश एवालम्। अन्येऽपि शब्दव्यापारविचारादयो ग्रन्थास्तेन प्रणीताः परमादरमभजत काव्य-प्रकाश एव। अयं ग्रन्थो मितशब्द इति कठिनः।

काव्यप्रकाशस्य त्रयोंऽशाः—कारिका वृत्तिरुदाहरणञ्च। अनेन कारिकाः कश्चित् भरतस्यापि गृहीताः शेषाः स्वयं रचिताः, वृत्तिस्तु स्वीया एव, उदाहर-णानि परेषामदोयन्त। काव्यप्रकाशो दशमपरिच्छेदगतपरिकरालङ्कारावधिः मम्मटेन कृतः, तदग्रेतनभागश्चाल्लटनाम्ना विदुषा निर्माय योजितः।

'कृतोऽयं मम्मटाचार्यैर्ग्रन्थः परिकरावधिः।
प्रबन्धः पूरितः शेषो विधायाल्लटसूरिणा ॥' इति श्रूयते

## क्षेमेन्द्रस्य औचित्यविचारचर्चा

स्वीयपाण्डित्येन साहित्यशास्त्रमत्युपकृतवान् मम्मटसमकालिकोऽयं काश्मीरवासी कविरालङ्कारिकश्चावर्त्तत। अनेन सुवृत्ततिलकनामा एकश्छन्दो-ग्रन्थः, कविकण्ठाभरणाभिधानः काव्यस्य बाह्यसाधनानि निरूपयन् ग्रन्थः, औचित्यविचारचर्चानाम औचित्यसम्प्रदायप्रवर्तकग्रन्थश्चारच्यत। औचित्य-मेव रसस्य रहस्यमिति तस्य सिद्धान्तः। तच्चौचित्यं बहुधा भिन्नं पदवाक्य-प्रबन्धार्थगुणालङ्काररसक्रियाकरणलिङ्गेषु औचित्यं विचार्य 'औचित्यस्योप-निबन्धस्तु रसस्योपनिषत्परे'ति तेन प्रपञ्चितम्।

## रुय्यकस्य अलङ्कारसर्वस्वम्

अयमपि काश्मीराभिजन आसीत्। अयं काश्मीरशासकस्य जयसिंहस्य मन्त्रिणो मङ्खकस्य गुरुरासीत्। जयसिंहस्य समयो राजतरङ्गिण्याम् ११२८–११४९ ई० उक्तोऽतोऽस्य समयो द्वादशशतकस्यादिभाग इति निश्चीयते। अनेना-लङ्कारमात्रविवेचकोऽलङ्कारसर्वस्वनामा एक एव ग्रन्थः प्रणीतो यः पाडित्य-पूर्णविवेचनायां काव्यप्रकाशमप्यतिशेते। जयरथसमुद्रबन्धनामकपण्डिताभ्यां कृते टीके अस्य ग्रन्थस्य प्राप्ते भवतः।

## हेमचन्द्रस्य काव्यानुशासनम्

हेमचन्द्रो नाम जैनाचार्यो १०८८–११७२ ई० कालिकोऽलङ्कारशास्त्रे काव्या-नुशासनं नाम ग्रन्थं स्वोपज्ञवृत्तिसहितं प्रणीतवान्। अत्र ग्रन्थे किमपि विशिष्टं वस्तु नास्ति, प्राचामुक्तय एव यथाप्रसङ्गं सङ्गृह्य ग्रन्थाकारं लम्भिताः।

## विश्वनाथकविराजस्य साहित्यदर्पणः

विश्वनाथ उत्कलवासी समृद्धकुलसम्भवश्चासीत्। अस्य कुलं पाण्डित्ये प्रसिद्धम्। एतत्पित्रा चन्द्रशेखरेण प्रणीतम्—पुष्पमाला, भाषार्णवश्चेति ग्रन्थद्वयं प्रथते। एतत्पितामहभ्राता चण्डोदासः काव्यप्रकाशस्य दीपिकां नाम टीकां निरमात्। अनेन गीतगोविन्दतो नैषधीयाच्च पद्यमुद्धृतम्।

'सन्धौ सर्वस्वहरणं विग्रहे प्राणनिग्रहः।
अल्लावदीननृपतौ न सन्धिर्न च विग्रहः॥'

इति पद्येऽनेन 'अल्लाउदीनखिलजी' स्मृतो यो १३१६ ई० मृतः।

एभिर्विचार्यमाणैः विश्वनाथकविराजस्य समयश्चतुर्दशशतकं मन्यते।

अस्य 'अष्टादशभाषावारविलासिनीभुजङ्ग' इत्युपाधिर्नानाभाषाभिज्ञत्वं समर्थयति।

अस्य कृतिषु प्रसिद्धो ग्रन्थः साहित्यदर्पणः अत्र काव्यस्य नाट्यस्य च सर्वाङ्गीणं विवेचनं प्रस्तुतम्। काव्यप्रकाशशैल्या विरचितोऽप्ययं ग्रन्थ काठिन्यं न स्पृशतीति रचयितुश्चातुर्यं प्रतीयते अनेन द्वित्रेषु स्थलेषु काव्यप्रकाशकारोऽप्याक्षिप्तः, तत्प्रतिसमाधानं गोविन्दठक्कुरेण, गङ्गाधरशास्त्रिणा, शालिग्रामशास्त्रिणा च कृतम्।

## पण्डितराजजगन्नाथस्य रसगङ्गाधरः

अस्य महापण्डितस्य परिचयः खण्डकाव्यप्रकरणे दत्तः। एतदीयो रसगङ्गाधरनामा ग्रन्थः साहित्यस्य सर्वाधिकः प्रौढो मर्मप्रकाशकः शास्त्रीयविवेचनापूर्णः। एतस्य समये नव्यन्यायशास्त्रं प्रचुरप्रचारमजायत, अतोऽनेन स्वग्रन्थे तदनुसारिणी सूक्ष्मेक्षिका समाश्रिता, येन पदार्थनिर्वचने स्थूलता पदं नाधात्।

रसनिरूपणेऽनेन महती स्पष्टता सूक्ष्मता च प्रकटीकृता, माधुर्यादिनिरूपणमपि नितान्तनूतनं कृतम्। अलङ्काराणां लक्षणं सूत्रशैल्या निबध्य तद्भाष्यमपि नितान्तप्रौढं कृतम्। अनेन कत्यलङ्कारा निरूपयितुमिष्यन्तेस्म, इति तु स कालः प्रष्टव्यो यो रसगङ्गाधरमपूरितवन्तमेव पण्डितराजं लोकान्तरमनैषीत्।

## प्रसिद्धा अन्येऽलङ्कारशास्त्रसृजः

| नाम | ग्रन्थः | कालः |
|---|---|---|
| गोविन्दठक्कुरः | काव्यप्रदीपः | सप्तदशशतकम् |
| केशवमिश्रः | अलङ्कारशेखरः | सप्तदशशतकम् |
| वाग्भटः | वाग्भटालङ्कारः | पञ्चदशशतकम् |
| अप्पय्यदीक्षितः | कुवलयानन्दचित्रमीमांसे | षोडशसप्तदशशतकम् |
| विश्वेश्वरपण्डितः | अलङ्कारप्रदीपः | सप्तदशशतकम् |

अत्र प्रसङ्गे इतोऽधिकमपि ज्ञातुमिच्छुभिर्मदीया काव्यादर्शटीकाभूमिका द्रष्टव्या।

## साहित्यशास्त्रे सम्प्रदायाः

साहित्यशास्त्रीयपरम्परायाः पर्यालोचनेन ज्ञायते यदत्र विचारभेदात् कतिपये वर्गाः सञ्जाताः, तेषां परिचयाय तन्मतानि विवेचनीयानि भवन्ति। अलङ्कारसर्वस्वटीकाकृता समुद्रबन्धेनोक्तम्—

'इह विशिष्टौ शब्दार्थौ काव्यम्, तयोश्च वैशिष्ट्यं धर्ममुखेन, व्यापारमुखेन व्यङ्ग्यमुखेन वेति त्रयः पक्षाः। आद्येऽलङ्कारतो गुणतो वेति द्वैविध्यम्। द्वितीयेऽपि भणितिवैचित्र्येण भोगकृत्त्वेन वेति द्वैविध्यम्। इति पञ्चसु पक्षेष्वाद्य उद्भटादिभिरङ्गीकृतः द्वितीयो वामनेन, तृतीयो वक्रोक्तिजीवितकारेण, चतुर्थो भट्टनायकेन, पञ्चम आनन्दवर्धनेन।'

अयमाशयः—रमणीयौ शब्दार्थौ काव्यनाम्ना व्यपदिश्येते, शब्दार्थयो रमणीयता च धर्ममुखेन यद्युच्यते तदा गुणः अलङ्कारश्चेति द्वौ तादृशौ धर्मौ सम्भवतः, तत्र गुणकृतवैशिष्ट्यवादिनौ दण्डिवामनौ काव्यस्य जीवनाधायकं गुणमाहतुः। अलङ्कारकृतं वैशिष्ट्यमाद्रियमाणा उद्भटादयश्चालङ्कारान् काव्यजीवनाधायकान् स्वीकुर्वन्ति। यदि च शब्दार्थयो रमणीयता तद्व्यापारद्वारा मन्यते तदाऽपि व्यापारो द्विविधः सम्भवति भणितिवैचित्र्यमूलो भोगकृत्त्वमूलश्च, तत्र भणितिवैचित्र्यकृतं वैशिष्ट्यमभ्युपगच्छन्तः कुन्तकादयो 'वक्रोक्तिः काव्यजीवितमि'ति मन्यन्ते, भोगकृत्त्वमूलकं वैशिष्ट्यं मन्यमानाश्च भट्टनायकादयो भोजकत्वरूपं व्यापारान्तरं मन्यन्ते, तदेव तत्र वैशिष्ट्यमभ्युपगच्छन्ति। भट्टनायको रससम्प्रदायान्तर्गत एव। केवलं भोजकत्वव्यापारमात्रमस्य नूतनम्। ये पुनर्व्यङ्ग्यमुखेन शब्दार्थयोर्वैशिष्ट्यमाहुस्ते ध्वनिप्रस्थानं स्वीकुर्वन्ति, यथाऽऽनन्दवर्धनादयः।

एवमत्र शास्त्रे बहवः सम्प्रदायाः प्रचलिताः। ते चात्र यथाक्रमं परिचिताः क्रियन्ते।

### १ रससम्प्रदायः

सम्प्रत्युपलभ्यमानो रससिद्धान्तो भरतेन प्रवर्तितः। तदीयम्—'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति सूत्रमेव रसस्वरूपनिर्णायकेष्वादिमं प्रसिद्धम्। ततः प्राचीनानां नन्दिकेश्वरप्रभृतीनां मतं नोपलभ्यते। भरतेन स्वीयनाट्यशास्त्रस्य षष्ठे सप्तमे चाध्याये रसस्य विषये स्वमतं प्रकाशितम्। 'विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः' इति भरतसूत्रं बहुभिर्व्याख्यातम्। तत्र मतभेदोऽप्युत्पन्नः। भट्टलोल्लटप्रभृतयः संयोगादित्यस्य जन्यजनकभावरूपात्सम्बन्धादित्यर्थं कृत्वा रसं विभावादीनां कार्यमाहुः।

शङ्कुकादयस्तु संयोगादित्यस्य अनुमाप्यानुमापकसम्बन्धादित्यर्थं कृत्वा विभावादिभिः रसस्यानुमानं स्वीकृतवन्तः। भट्टनायकादयश्च संयोगादित्यस्य भोज्यभोजकभावरूपात्सम्बन्धादित्यर्थमभिप्रयन्तः अभिधातोऽन्यद्भावकत्वभोज-

कत्वनामकं व्यापारद्वयं कल्पयन्तश्च विभावादिभी रसो भोज्यत इत्याहुः। अभिनवगुप्तादयश्च व्यङ्ग्यव्यञ्जकभावं सम्बन्धं मन्यमाना रसं व्यङ्ग्यमभिदधते।

रससम्प्रदायमनुसरतामप्याचार्याणां मध्ये रससंख्याविषये मतभेदो दृश्यते। भरतो धनञ्जयश्च शान्तभिन्नानष्टावेव रसान्नाट्ये स्वीकुर्वन्ति, काव्ये तु शान्तोऽपि नवमो रसो मन्तव्य एव।

रुद्रटेन 'प्रेयान्' रसोऽप्यङ्गीकृतः। विश्वनाथभट्टाचार्यास्तु चमत्कारितया वत्सलमपि दशमं रसं विदुः। गौडीयवैष्णवा मधुररसं सर्वप्रधानमातिष्ठन्ते, च चायं मधुररसो भक्तिरसनाम्नापि परैर्व्यवह्रियते। ये तु करुणमेवैकं रसं कथितवन्तः शृङ्गारमेव वैकं रसमिष्टवन्तस्ते तत्प्राधान्यप्रत्यायनायैव तथा कृतवन्तो नेतररसप्रतिषेधायेति मदीयो विश्वासः।

## २ अलङ्कारसम्प्रदायः

अलङ्कारसम्प्रदायो भामहेन प्रवर्त्तितोऽपि तद्ग्रन्थव्याख्यातृभिः उद्भटादिभिरेव स्थिरतां प्रापितः। एतत्सम्प्रदायानुसारिणां मते अलङ्कारा एव काव्यजीवातवः।

'अङ्गीकरोति यः काव्यं शब्दार्थावनलंकृती।
असौ न मन्यते कस्मादनुष्णमनलंकृती॥'

इति कथयन् जयदेवोऽपि काव्ये जीवनाधायकतयाऽलङ्कारानेव स्वीकरोति। अलङ्कारा द्विविधाः शब्दालङ्कारा अर्थालङ्काराश्च। अनुप्रासोपमादीपकरूपकाख्याश्चत्वार एवालङ्कारा भरतेनोक्ताः, त एवानुदिनं वर्धमानाः कुवलयानन्दे १२५ संख्यकत्ताङ्गताः। अलङ्काराणां लक्षणमपि तेषु तेषु ग्रन्थेषु भिद्यमानं प्राप्यते।

अलङ्कारसम्प्रदायप्रवर्त्तका रसतत्त्वं जानन्ति स्म, अत एव ते रसवदादिकानलङ्कारानुक्तवन्तः। रसा अपि अलङ्कारा एव न पृथक्तत्त्वान्तरमिति तेषामाशयः।

## ३ रीतिसम्प्रदायः

अस्य सम्प्रदायस्य प्रवर्त्तको वामनः, तन्मते रीतिरात्मा काव्यस्य। पदसङ्घटनारीतिः, सेयं पदसङ्घटनागुणेष्वायत्तेति रीतिसम्प्रदायो गुणसम्प्रदायात्मना परिणमते। रीतिभेदानां व्यवस्थितं वर्णनं दण्डिनाऽपि कृतम्। गुणालङ्कारयोरसङ्कीर्णं रूपं प्रकाश्य गुणानां शब्दार्थगतत्वेन विंशतिप्रकारत्ता वामनेनैव प्रतिपादिता। वामनेन काव्यशोभायाः कर्त्तारो धर्मा गुणास्तदतिशयहेतवस्त्वलङ्काराः स्वीकृताः। भामहादयो यत्र रसमलङ्कारं मन्यमानं तं काव्यस्य बहिरङ्गं समर्थितवन्तो वामनस्तत्र रसं कान्तिगुणस्वरूपमाख्याय तस्यावश्यकतां स्वीकृतवान्।

### ४ वक्रोक्तिसम्प्रदायः

'वक्रोक्तिः काव्यजीवितमि' त्यवदन् कुन्तकादयः। वक्रोक्तिः प्रसिद्धाभिधान-व्यतिरिक्ता विचित्रैवाभिधा। सैव वैदग्ध्यभङ्गीभणितिशब्देन स्फुटीकृता वक्रोक्तिजीविते।

भामहेन अतिशयोक्तिरेव वक्रोक्तिनाम्ना उक्ता, सैव चालङ्काराणां बीजं यथार्थम्। तेनैव—

'सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना॥'

ध्वनिमतं परिचिन्वन्नपि कुन्तको वक्रोक्तेः स्वरूपं तथा विस्तृतं चक्रे यथा ध्वनिस्तत्रैव समाहितः। उपचारवक्रतायां ध्वनेः समावेशस्तदभीष्टः।

सोऽयं वक्रोक्तिसम्प्रदायोऽनन्तरभाविभिराचार्यैर्नादृतः। रुद्रटो वक्रोक्तिं सामान्यत एकमलङ्कारं मत्वा तत्स्वरूपं समकोचयत्।

### ५ ध्वनिसम्प्रदायः

रसो न वाच्य इति साधयितुं प्रवर्त्तमान आचार्य आनन्दवर्धनो ध्वने-रावश्यकतामनुभूय ध्वनिसम्प्रदायं प्रवर्त्तितवान्। आनन्दवर्धनात्पूर्वं ध्वनेर-भाववादः, लक्षणास्वरूपतावादः, अनिर्वाच्यतावादश्च प्रथते स्म। ध्वनिवादः सर्वाधिकव्यवस्थितरूपेण प्रचरितः।

### ६ औचित्यसम्प्रदायः

अयं सर्वसम्प्रदायादृतः कस्यापि मतस्याविरोधी च सम्प्रदायः क्षेमेन्द्रेण प्रवर्त्तितः। काव्यस्य सर्वेष्वपि अङ्गेष्वौचित्यं नितान्तमपेक्षितम्। 'अदेशजो हि वेषस्तु न शोभां जनयिष्यति' इति नाट्यशास्त्रेऽस्य सम्प्रदायस्य बीजं दृश्यते। समुद्रबन्धीयविवेचनानुबद्धोऽप्ययं सम्प्रदायः सर्वैरादृतः।

'अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्।
औचित्योपनिबन्धस्तु रसस्योपनिषत्परा॥' (इति ध्वन्यालोकः)



# दर्शनानि

मनुष्यः स्वभावतो मननशीलः प्राणी विद्यते। मत्वा कर्माणि सीव्यतीति तन्निरुक्तिरपि पूर्वोक्तानुकूला। स हि कोऽहं कस्मादहमित्यादिसमस्याः सततं भावयित्वा 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति दर्शनबीजमुद्भावितवान्। आत्मदर्शनायैव सर्वाणि दर्शनानि प्रवृत्तानि। आत्मदर्शनं दुःखनिवृत्तयेऽपेक्षितं, दुःखनिवृत्तिरेव च सर्वैरभीप्सिता।

पाश्चात्त्यदेशेषु आचारविचारयोः किमपि सामञ्जस्यं नासाद्यते। दर्शनानि कण्ठस्थीकृत्यापि नाटकेषु पात्राणां प्रसाधने व्याप्रियन्ते तत्रत्याः। तत्रत्यं दर्शनं ज्ञानमात्रम्। 'फिलासफी' ( Philosophy ) शब्दस्य मौलिकोऽर्थोऽपि तदनकूल एव।

भारतवर्षे तु विचारस्यानुसारेणैव आचारोऽपि नियम्यते प्रायशः। भारतस्य विचारप्रधानदेशत्वं सर्वैरभ्युपगतम्। अन्येषां देशानां जीवनसंग्राम एव तथा भीषणो यत् तत्रत्या जना जीवनसाधनेष्वेव सर्वं समयं यापयितुं बाधिता भवन्ति। भारतीयास्तु प्रकृतिप्रदत्तानां जीवनसाधनानां सौलभ्येन ऐहिकीं चिन्तां विमुच्य पारलौकिकीं चिन्तामेव सततमाचरन्ति। सर्वप्रधानमत्र देशे अध्यात्मज्ञानमेव। भगवानपि 'अध्यात्मविद्या विद्यानाम्, इत्युक्त्वा विद्यामिमां प्रधानतया योजितवान्।

भारते दर्शनस्योदयो वेदकाल एवाजायत। ऋग्वेदे प्रजापतिपरमेष्ठी जगतो मूलतत्त्वं मीमांसमानः प्राप्यते। स हि—'आनीदवातम्, इत्यादिमन्त्रेषु तदेव तत्त्वं विमृशन् दृश्यते। अपरोऽपि संवनन आङ्गिरसो नामर्षिः 'सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम्' इत्यादिमन्त्रैस्तस्यैव तत्त्वस्यान्वेषणाय लोकान् प्रेरयन् प्रतिभाति। अनयोः ऋष्योश्चिन्ता धारयोर्द्वयी दिशा—प्रथमा चिन्तनप्रवृत्तिः, द्वितीया तर्कप्रवृत्तिः। इमे द्वे अपि मिलित्वा दर्शनान्यङ्कुरयितुं प्राभवताम्।

वेदसंहितायामङ्कुरितस्य दर्शनद्रुमस्य उपनिषत्काले पल्लवितत्वं जातम्। 'तत्त्वमसि' इति मन्त्रेण तदेव तत्त्वं प्रकटं प्रतिपादितम्। तदनन्तरं सूत्रकाले दर्शनद्रुमस्य शाखा विभक्ताः।

सोऽयं दर्शनद्रुमः शाखाभेदेन बहुधा विभक्तः। तत्र स्थूलरूपेण प्रथमं द्वौ भागौ—वैदिकानि दर्शनानि अवैदिकानि च दर्शनानि। अवैदिकानि दर्शनानि नास्तिकदर्शनपदेन व्यवह्रियन्ते वैदिकानि च आस्तिकपदेन व्यवह्रियन्ते।

तत्र अवैदिकदर्शनानि—चार्वाकदर्शनम्, बौद्धदर्शनम्, जैनदर्शनञ्च।

वैदिकदर्शनानि च—वैशेषिकदर्शनम्, सांख्यदर्शनम्, योगदर्शनम्, मीमांसादर्शनम्, वेदान्तदर्शनञ्च।

## चार्वाकदर्शनम्

चार्वाकदर्शनस्य बीजं वेदेषु वर्त्तमानमासीत्—'न प्रेत्य संज्ञाऽस्ति'–मरणात् परतः किमपि नास्ति। 'भस्मीभूतस्य देहस्य पुनरागमनं कुतः ?' इयमेव पूर्वपक्षीयविचारधारा चार्वाकदर्शनस्य मूलम्।

इमे चार्वाकाः परलोकं न मन्यन्ते, शरीरमेवात्मानं स्वीकुर्वन्ति। इयमेव दर्शनं लोके बाहुल्येन प्रचरितत्वात् लोकायतदर्शननाम्नापि व्यवहृतम्। बुद्धिवाद एवामी आस्थाभाजः, वितण्डैव चैषां कथासाधनम्। तथा चोक्तं जयन्तभट्टेन—

'नहि लोकायते किञ्चित् कर्त्तव्यमुपदिश्यते।
वैतण्डिककथैवासौ न पुनः कश्चिदागमः ॥'

'चारुः वाक्' इति निर्वचनं चार्वाकशब्दस्य। बृहस्पतिप्रणीतमिदं दर्शनम्। बार्हस्पत्यानि सूत्राणि वेदान्तसूत्रीयभाष्ये श्रीधरी-नीलकण्ठीप्रभृतिगीताटीकासु चोपलभ्यन्ते यथा—

'अथ लोकायतम्।' पृथिव्यप्तेजोवायुरिति तत्त्वानि।' 'तत्समुदाये शरीरेन्द्रियविषयसंज्ञा।' तेभ्यश्चैतन्यं किण्वादिभ्यो मदशक्तिवद् विज्ञानम्।' 'चैतन्यविशिष्टः कायः पुरुषः।' 'काम एवैकः पुरुषार्थः।' 'मरणमेवापवर्गः।' एतानि सूत्राणि बृहस्पतेराचार्यस्य प्राचीनतां गमयन्ति, तदीयं सिद्धान्तं स्थिरयन्ति च। अयमर्थशास्त्रप्रणेतुर्बृहस्पतेरभिन्न एव।

भासेन स्वीये प्रतिमानाटके बृहस्पतेरर्थशास्त्रस्योल्लेखः कृतः। बृहस्पतिमर्थशास्त्रप्रणेतारं कौटिल्योऽपि स्वस्यार्थशास्त्रे स्मरति स्म। तदेवमस्य बृहस्पत्युपज्ञस्य दर्शनस्य प्राचीनत्वं समर्थितं भवति।

कतिचिद् अस्य दर्शनस्य मुख्याः सिद्धान्ताः—

प्रत्यक्षमेव केवलं प्रमाणम्, इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं हि तत्। शरीरमेव जीवः, श्यामोऽहं गौरोऽहम् इत्यादिकाः स्वरसवाहिन्यः प्रतीतयोऽपि देहमेव जीवत्वेन ग्राहयन्ति। सृष्टिः स्वभावत एव जायते, न तत्रेश्वरापेक्षा। ईश्वरो नास्त्यैव।

'यावज्जीवेत्सुखं जीवेदृणं कृत्वा घृतं पिबेत्।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥'
'त्याज्यं सुखं विषयसङ्गमजन्म पुंसां
दुःखोपसृष्टमिति मूर्खविचारणैषा।
व्रीहीन् जिहासति सितोत्तमतण्डुलाढ्यान्
को नाम भोस्तुषकणोपहितान् हितार्थी ॥'

इत्यादिभिर्लोकहृदयावर्जकैस्तर्कैरवलम्बितस्यास्य दर्शनस्य प्रचारे जाते जातुचित् समाजेऽव्यवस्था प्रसज्येतेति विभाव्यैव बृहस्पतिनार्थशास्त्रं प्रणीय लोकव्यवस्थाऽपि कर्त्तुमीहितेति तन्मतसमर्थकाः।

चार्वाकदर्शनग्रन्थाः सम्प्रति नोपलभ्यन्ते। आस्तिकदर्शनकारैरस्य दर्शनस्य तथा निन्दा कृता यथा दर्शनमिदमस्तङ्गतम्। प्रागत्र दर्शने ग्रन्था आसन्, कालेन ते कवलीकृताः। पतञ्जलिसमये अस्मिन् दर्शने ग्रन्थाः प्राप्यन्ते स्म। ३।३।५२ सूत्रस्य भाष्ये पतञ्जलिना उक्तम्—'वर्णिका-भागुरी लोकायतस्य'—वर्णिका व्याख्यात्री, भागुरी टीकाविशेष इति तद्भाष्योपरि कैयटः। एतेन तत्काले चार्वाकदर्शनग्रन्थानां प्रचारः सिद्धयति। सम्प्रति तु दर्शनग्रन्थेषु यत्र तत्रोद्धरणमात्रं पूर्वपक्षरूपेण दृश्यते।

## बौद्धदर्शनम्

बौद्धदर्शनम् जैनदर्शनादुत्तरकाले प्रचरितमभवत्। बौद्धदर्शनग्रन्थेषु जैनानामन्तिमतीर्थङ्करस्य नाटपुत्तस्य नामोल्लेखः सिद्धान्तालोचनं च दृश्यते। जैनग्रन्थेषु बौद्धदर्शनविषयकः कोऽपि तादृश उल्लेखो न विद्यते, अतो बौद्धदर्शनस्य जैनदर्शनोत्तरकालिकत्वं प्रतीयते।

बौद्धदर्शनस्य भागद्वयं धार्मिको भागः दार्शनिकश्च भागः। तत्र धार्मिकभागे आध्यात्मिकतत्त्ववर्णनम् आचारनिरूपणं च प्रपञ्चितम्, दार्शनिकभागे तु तार्किकदृष्टया बौद्धसिद्धान्तस्य सूक्ष्मं विवेचनं प्रस्तुतम्।

गौतमबुद्धस्य चरितं सर्वविदितम्। तेन ५२८ ई० पू० समये ज्ञानोदयं प्राप्य बुद्धपदवी प्राप्ता। ततः स सारनाथनामके स्थाने भिक्षुभ्यः उपदेशं प्रदाय धर्मचक्रं प्रवर्त्तयामास। आयुषोऽशोतितमे वर्षे मल्लगणतन्त्रस्य राजधान्यां कुशीनगरे निर्वाणं प्राप्तः। एतस्य जन्म बुद्धत्वप्राप्तिर्निर्वाणञ्चेति तिस्रोऽपि घटना वैशाखपूर्णिमायामेव जाता इति महत्कुतूहलावहम्।

बौद्धदर्शनस्य प्रधानविषयाः—रूपविज्ञानवेदनासंज्ञासंस्कारनामकस्कन्धपञ्चकमेवात्मा न तदन्यः। सोऽयं बौद्धानां नैरात्म्यवादो मिलिन्दप्रश्ने साधु निरूपितः। बौद्धानां मते जीवा जगच्चेत्युभयमपि अनित्यं प्रतिक्षणपरिणामशालि च। यथा दीपशिखाऽनुपलं परिणमन्ती अपि एकैव प्रतीयते तथैव जीवा जगच्च परिणमति। प्रतिक्षणपरिणामिनो हि भावाः।

बौद्धदर्शनं मुख्यतया चतुर्धा विभज्यते वैभाषिक-सौत्रान्तिक-योगाचार-माध्यमिकप्रभेदात्। वैभाषिका बाह्यार्थंप्रत्यक्षमङ्गीकुर्वन्ति, सौत्रान्तिका बाह्यार्थमनुमेयमाहुः, योगाचारा विज्ञानवादिनः, माध्यमिकाश्च शून्यवादिनः। सङ्गृहीतोऽयमर्थो मानमेयोदये—

'मुख्यो माध्यमिको विवर्त्तमखिलं शून्यस्य मेने जगद्
योगाचारमते तु सन्ति मतयस्तासां विवर्त्तोऽखिलः।
अर्थोऽस्ति क्षणिकस्त्वसावनुमितो बुद्धयेति सौत्रान्तिकः
प्रत्यक्षं क्षणभङ्गुरञ्च सकलं वैभाषिको भाषते॥'

एषु चतुर्षु वैभाषिकाणां हीनयानं सम्प्रदायः, त्र्याणामन्येषां महायानं सम्प्रदायः। वैभाषिकाः संसारनिर्वाणयोरुभयोरपि सत्यत्वम्, माध्यमिकाः

उभयोरप्यसत्यत्वम्, सौत्रान्तिका संसारस्य सत्यत्वं निर्वाणस्य पुनरसत्यत्वम्, योगाचारास्तु संसारस्यासत्यतां निर्वाणस्य च सत्यत्वमाहुः।

चतुर्धा भिन्नोऽयं बौद्धधर्मः सुमहान्तं ग्रन्थराशिं धत्ते।

वैभाषिकप्रस्थाने अभिधर्मज्ञानप्रस्थानशास्त्रनामको विशालकायो ग्रन्थः कात्यायनीपुत्रप्रणीतो बुद्धनिर्वाणात् शतत्रयाब्दानन्तरं प्रथते स्म। मूलरूपेणाप्राप्यस्याप्यस्य ग्रन्थस्य सप्तमशताब्द्यां जातश्चीनभाषानुवादः प्राप्यते। कनिष्कशासनकाले ग्रन्थस्यास्य अभिधर्मविभाषाशास्त्रनामा व्याख्या प्रणीता। सोऽयमपि व्याख्याग्रन्थः संस्कृते दुर्लभतां गतोऽपि तिब्बतभाषायामासाद्यते। वसुबन्धोः अभिधर्मकोशः चतुर्थशतके लिखितो यं बाणभट्टः कादम्बर्यां स्मरति—'शुकैरपि शाक्यशासनकुशलैः कोशं समुपदिशद्भिः' इति। अभिधर्मकोशस्य बह्वष्टीकाग्रन्था विद्यन्ते। यथा स्थिरमतेस्तत्त्वार्थाख्या, दिङ्नागस्य मर्मप्रदीपाख्या, यशोमित्रस्य स्फुटार्था च।

सौत्रान्तिका बुद्धरचितत्वाभावाद् अभिधर्मकोशस्य प्रामाण्यं नाभ्युपगच्छन्ति। ते तु सुत्तपिटकमाद्रियमाणाः सूत्रान्तप्रामाण्यवादित्वात्सौत्रान्तिका इति ख्याताः। सौत्रान्तिकसम्प्रदायो वैभाषिकसम्प्रदायात् पश्चात्कालिकः। सौत्रान्तिकसम्प्रदायस्थापकाश्चत्वारः-कुमारलातः, श्रीलातः, धर्मत्रातः बुद्धदेवश्च। एषु प्रथमस्य कुमारलातस्य समयो द्वितीयं शतकम्। कल्पनामण्डितिका' इति नाम्नाऽस्यैका रचना प्रसिद्धा।

योगाचारसम्प्रदायस्याद्यः प्रवर्त्तको मैत्रेयनाथो, यो मध्यान्तविभागं नाम ग्रन्थं निर्मितवान्। असङ्गेनात्र गद्यमयी व्याख्या कृता। वसुबन्धुनाऽत्र भाष्यम्, स्थिरमतिना च तद्भाष्यटीका कृता। असङ्गाचार्यो राज्ञश्चन्द्रगुप्तस्य समयेऽवर्त्तत। अस्यासङ्गस्य भ्रातैव वसुबन्धुर्येन बहवो ग्रन्थाः प्रणीताः। तदीय एको ग्रन्थो 'लेवी'महाशयेन त्रिंशिकानाम्ना प्रकाशितः। दिङ्नागधर्मकीर्त्तिधर्मपाला अप्येतन्मतपोषका आसन्।

माध्यमिकमतं शून्यवादनाम्नाऽपि प्रसिद्धम्। अस्य मतस्याचार्येषु नागार्जुनः मुख्यः। अस्य माध्यमिकशास्त्रनामा ग्रन्थो नितान्तख्यातः।

बुद्धस्य बहवः सिद्धान्ता उपनिषत्सिद्धान्तेन सह समानाः। यथा—'ऋते ज्ञानान्न मुक्तिरि'ति सिद्धान्तः।

बौद्धदर्शने त्रीणि रत्नानि—शीलं, समाधिः, प्रज्ञा चेति।

## जैनदर्शनम्

जैनदर्शनं बौद्धदर्शनात् पूर्वतनम्। जैनदर्शनं प्राक् 'निगण्ठ'शब्देन व्यवह्रियते स्म। निगण्ठशब्दो ग्रन्थान्निर्गतो निर्ग्रन्थ इति संस्कृतशब्दस्य पालीभाषायां रूपान्तरम्। अत्र दर्शने सिद्धपुरुषाः 'अर्हत्' शब्देनाभिधीयन्ते। अत एवेदं दर्शनमार्हतदर्शनमप्युच्यते। महावीरेण रागादिरिपवो जिता इत्यसौ जिनशब्देनोक्तस्तदीयतया दर्शनमिदं जैनदर्शननाम्नाप्यभिहितम्।

जैनमतप्रचारकास्तीर्थङ्करा उच्यन्ते स्म। तीर्थङ्करेष्वाद्यः ऋषभदेवनामाऽऽसीत्। महावीरश्चान्तिमः। पार्श्वनाथं विहायान्येषां मध्यवर्त्तिनां तीर्थङ्कराणां विशिष्टः परिचयो न लभ्यते।

वर्धमानमहावीर इतिहासप्रसिद्ध एव पुरुषः। पार्श्वनाथः पुनः काशिराजस्य अग्रसेनस्य पुत्रः। पार्श्वनाथः वस्त्रपरिधानमनुमन्यते, महावीरस्तु नग्नत्वं समर्थयति। दिगम्बरश्वेताम्बराख्य सम्प्रदायद्वयस्येदमेव बीजम्।

जैनसाहित्यमतिविपुलम्। अत्राचारग्रन्थापेक्षया प्रमाणग्रन्था एव भूयांसः।

जैनदर्शने जीवस्य चैतन्यवत्त्वं स्वाभाविकञ्चानन्तज्ञानवत्त्वम्। प्राक्तनकर्मावरणपिहितत्वेन समावृतस्वरूपतयाभासमानो जीवः सम्यक्चारित्रस्वीकृत्या स्वं शुद्धं रूपं—कैवल्यं सर्वज्ञत्वं च प्राप्नोतीति संक्षेपतो विषयः। प्राचीनेऽपि जैनमते जैनदर्शनशास्त्रस्यारम्भकालः प्रथमं शतकम्। अस्मिन्नेव समये उमास्वातिकुन्दकुन्दाचार्यसमन्तभद्रनामकैराचार्यैरस्य दर्शनशास्त्रस्य आधारशिला दृढीकृता। तत्त्वार्थसूत्रमत्रैव कालेऽरच्यत।

तदनन्तरं च बहवो ग्रन्था अरच्यन्त, यथा—देवनन्दिमहाभागस्य सर्वार्थसिद्धिः, दिगम्बरस्य समन्तभद्रस्य सिद्धसेनदिवाकरस्य च गन्धहस्तीभाष्यम्, भट्टाकलङ्कस्य राजवार्त्तिकम्। जैनदर्शनस्य सर्वस्वभूता ग्रन्था इमे चत्वारः—नियमसारः, पञ्चास्तिकायसारः, समयसारः प्रवचनसारश्चेति। हरिभद्र-विद्यानन्दप्रभृतयोऽप्याचार्याः प्रसिद्धाः।

स्याद्वादो जैनदर्शनस्य प्रधानो वादः। पुद्गलशब्दो जैनदर्शने भूतसामान्यार्थकः।

जैनानां मते जीवपुद्गलयोः सहकारिकारणस्वरूपो धर्मः, अधर्मश्च तद्विरुद्धः।

सम्यग्दर्शनम्, सम्यग्ज्ञानम्, सम्यक्चारित्रं चेति जैनदर्शने रत्नत्रयम्। तदेतद्रत्नत्रयं मोक्षमार्गः। तथा चोक्तम्—

'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः।'

'तत्त्वार्थश्रद्धानं सम्यग्दर्शनम्।'

जैनदर्शने—आस्रवः, बन्धः, संवरः, निर्ज्जरः, मोक्षः, जीवः, अजीवः इति सप्त पदार्थाः। 'सकषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलानादत्ते स बन्धः', 'बन्धहेत्वभावनिर्जराभ्यां कृत्स्नकर्मक्षयश्च मोक्षः।'

जैनदर्शनं बहुत्ववादपरम्। अनेकान्तवादोऽत्र मुख्यः। मोक्षे सति सर्वेषां जीवानामीश्वरतापत्तावनेकेश्वरवादप्रसक्तिरत्र दर्शने दुरुद्धरो दोषः।

तदित्थं नास्तिकदर्शनानि परिचयं प्रापितानि, तानि विवृतानि भूत्वा षड्विधतां यान्ति—

१. शून्यवादेनैकं प्रस्थानं माध्यमिकानाम्
२. क्षणिकविज्ञानवादेनापरं प्रस्थानं योगाचाराणाम्
३. ज्ञानाकारकवाह्यार्थवादेनान्यत् प्रस्थानं सौत्रान्तिकानाम्

४. प्रत्यक्षस्वलक्षणक्षणिकबाह्यार्थवादेनापरं वैभाषिकाणाम्
५. एकं प्रस्थानं देहातिरिक्तदेहात्मवादिनां दिगम्बराणाम्
६. स्थूलदृश्यदेहात्मवादिनां चार्वाकाणाञ्चैकं प्रस्थानम्
तदित्थं षण्नास्तिकदर्शनानि ।

## वैशेषिकदर्शनम्

सकलदर्शनापेक्षया वैशेषिकदर्शनं प्राचीनम् । एतत्प्रणेता कणादः कश्यपवंशोत्पन्नतया काश्यपशब्देनोक्तः । अयमेव मुनिः उलूक इत्यप्युक्तः—

'विरुद्धासिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीत् ।'

महाभारते भीष्मपर्वण्युलूको नामर्षिर्वर्णितः । अयमेव कणादः, कणभक्षः, कणभुक् चाख्यायते ।

'न वयं षट्पदार्थवादिनो वैशेषिकवत्' इति सांख्यसूत्रमतोऽयं साङ्ख्यात् प्राचीनः सिद्धः ।

'महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ।' इत्यस्य व्याससूत्रस्य पर्यालोचनयाऽस्य वैयासकदर्शनापेक्षया पूर्वकालिकत्वम् आयाति ।

शब्दोत्पत्तिविनाशवाद एतदुक्तः 'कर्मैके तत्र दर्शनात्' इत्यादिसूत्रैर्जैमिनिना निरस्त इत्यस्य जैमिनेरपि प्राचीनता सिद्धा ।

इदं दर्शनमौलूकदर्शननाम्नाप्युच्यते । तदुक्तं नैषधीये—

'औलूकमाहुः खलु दर्शनं तत् क्षमं तमस्तत्त्वनिरूपणाय ।'

विशेषपदार्थस्वीकारमूलकमेवास्य दर्शनस्य वैशेषिकमिति नामकरणम् ।

न्यायापेक्षयापि वैशेषिकं प्राचीनम् । वैशेषिके त्रयो हेत्वभासाः स्वीकृताः । न्याये त एव पञ्चप्रकारतां गमिताः । यदि न्यायादर्वाचीनं वैशेषिकमभविष्यत्तदा न्यायोक्तं हेत्वाभासस्य पञ्चविधत्वं निराकर्त्तुमत्र युक्तय उदास्यन्त ।

दशभिरध्यायैः३७०सूत्रैश्च निबद्धमिदं दर्शनम् । प्रत्यध्यायं द्वे आह्निके । प्रथमेऽध्याये समवेताशेषपदार्थकथनम्, द्वितीये द्रव्यम्, तृतीये आत्मान्तःकरणनिरूपणम्, चतुर्थे शरीरभेदनिरूपणम्, पञ्चमे कर्मनिरूपणम्, षष्ठे श्रौतधर्मनिर्वचनम्, सप्तमे गुणसमवायौ, अष्टमे ज्ञानोत्पत्तितन्निदाने, नवमे प्रागभावादिनिरूपणम्, दशमे चात्मगुणनिरूपणम् । दर्शनमिदं सर्वशास्त्रोपकारकम् ।

अत्र दर्शने सर्वप्राचीनो ग्रन्थः सूत्रं रावणप्रणीतम् । तदनन्तरं भारद्वाजवृत्तिः, प्रशस्तपादभाष्यम्, शङ्करमिश्रस्योपस्कारः, जयनारायणभट्टाचार्यस्य कणादसूत्रवृत्तिः, चन्द्रकान्तभट्टाचार्यस्य वैशेषिकभाष्यञ्च ।

अत्र शास्त्रे द्विविधो ग्रन्थः—सूत्रव्याख्यानरूपः पदार्थव्याख्यानरूपश्च । उपर्युक्ता ग्रन्था विशेषतः सूत्रव्याख्यानरूपा एव ।

प्रशस्तपादेन भाष्यं प्रणीयात्र शास्त्रे युगान्तरं प्रवर्त्तितम् । तद्व्याख्यानानि नितान्तगभीराणि जातानि यथा—व्योमशिवाचार्यस्य व्योमवती, श्रीधरस्य

न्यायकन्दली, उदयनाचार्यस्य किरणावली, श्रीवत्सस्य लीलावती, जगदीशस्य भाष्यसूक्तिः, शङ्करस्य कणादरहस्यम्, इत्यादिकानि ।

निःश्रेयसमस्य शास्त्रस्य मुख्यं प्रतिपाद्यम् । तत्तत्पदार्थजातस्य विविक्ततया ज्ञानं निःश्रेयसस्य साधनम् । तदुक्तम्—

'धर्मविशेषप्रसूतात् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसाधिगमः ।'

जीवात्मा ज्ञानस्वरूप एवात्रापि दर्शने न तु ज्ञानगुणकः । ज्ञानस्वरूपस्यापि तस्य ज्ञानाश्रयत्वं प्रमारूपस्य सूर्यस्य प्रमाश्रयत्ववदुपपाद्यते । परमात्मा तु ईश्वरापरनामा जीवात्मनो भिन्न एव । स हि सर्वज्ञो विभुर्नित्यशुद्धमुक्तस्वभावः । जीवात्मा पुनः सुखदुःखानुभवोपेतो जन्ममरणादिजालपतितः । अनादिवासनया देहमेवात्मानं मन्यमानो जीवो विषयेषु रज्यति, ततस्तत्र प्रवर्तते, प्रवर्त्तमानः शुभाशुभकर्माणि सञ्चित्य सुखदुःखे अनुभवति । तत्त्वज्ञानेन मिथ्यावासनायां निवर्त्तितायां रागाभावात् प्रवृत्त्यभावे कर्माभावात् सुखदुःखापगमः, स एव च मोक्ष इति शास्त्रस्यास्य तत्त्वम् ।

## न्यायदर्शनम्

अतिप्राचीनं न्यायशास्त्रम् । अस्य शास्त्रस्य प्रवर्त्तकः सूत्रकारो गौतमः ५०० ई० पू० समयेऽजायत । तेन सूत्राणि प्रणीतानि, षोडशपदार्थाश्चाभ्युपगताः प्रमाणप्रमेयाद्याः । गौतमप्रवर्त्तितं न्यायशास्त्रं पदार्थमीमांसाशास्त्रम् । एषां सूत्राणां भाष्यं द्वितीयशतकोत्पन्नेन वात्स्यायनेन प्रणीतं यद् वात्स्यायनभाष्यनाम्ना प्रसिद्धम् । वात्स्यायनस्योदयकालो ब्राह्मणधर्मबौद्धधर्मयोः सङ्घर्षस्य समय आसीत् ।

वात्स्यायनभाष्योक्तानां सिद्धान्तानां खण्डनं दिङ्नागनामकेन बौद्धनैयायिकेन स्वकृते प्रमाणसमुच्चयनामके ग्रन्थे कृतम् । तदनन्तरं षष्ठशतकोत्पन्नः उद्द्योतकरः न्यायवार्त्तिकं निर्माय दिङ्नागकृतानाक्षेपान् मार्जयामास । ततश्च धर्मकीर्त्तिर्नाम बौद्धनैयायिकः प्रमाणवार्त्तिकं रचयित्वा उद्योतकरस्य मतं दूषयामास । ततश्च वाचस्पतिमिश्रः न्यायवार्त्तिकतात्पर्ये तदीयमपि मतं विस्तारेण गर्हयामास । उदयनोऽपि 'न्यायवार्तिकतात्पर्यपरिशुद्धि' नामकेन व्याख्याग्रन्थेन वाचस्पतेर्ग्रन्थं परिष्कृतवान् । सर्वमपीदं प्राचीनन्यायनाम्ना व्यवहृतम् ।

प्रमाणमीमांसायां व्यापृतो गङ्गेशोपाध्यायः 'तत्त्वचिन्तामणि' नामकं ग्रन्थं निर्माय नव्यन्यायं प्रवर्त्तयामास । तस्य कालः द्वादशं शतकम् । चिन्तामणेष्टीकादीधितिः त्रयोदशशतकोत्पन्नेन रघुनाथशिरोमणिना कृता । तत्समकालिकेन मथुरानाथेन चिन्तामणिदीधित्यो रहस्यं प्रणीतम् । दीधितेष्टीके जागदीशीगादाधर्यौ जगदीशगदाधराभ्यां प्रणीते ये नव्यन्यायशास्त्रं जीवयामासतुः । अनयोः कालः सप्तदशं शतकम् । इत्थं दृश्यते यद् द्वादशशतकान् सप्तदशशतकपर्यन्तं नव्यन्यायशास्त्रस्य स्वर्णयुगमासीत् ।

ज्ञानान्मुक्तिरिति सर्ववादिसिद्धं परन्तु शुद्धं ज्ञानं कथं प्राप्यते इदमेव वस्तु मीमांसितुं न्यायशास्त्रं प्रवृत्तम्। तत्र—प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां यथार्थज्ञानान्निःश्रेयसाधिगम इति तत्सिद्धान्तः।

परमाणुकारणतावादोऽस्य विशिष्य ध्यानमाकर्षति दार्शनिकानाम्।

न्यायमते—सुखदुःखात्मकमनोवृत्त्योर्नाशे जाते मनः साम्यावस्थां प्रतिपद्यते, तदा तत्र न दुःखं नापि सुख तिष्ठति, सैव मुक्तिः।

ईश्वरोऽनुमानगम्यः। जीवन्मुक्तिरपरनिःश्रेयसशब्देन विदेहमुक्तिश्च परनिःश्रेयसशब्देन प्रतिपाद्यते।

## साङ्ख्यदर्शनम्

सांख्यदर्शनस्याद्य आचार्यः कपिलः उपनिषत्कालिकः ऋषिः। तत्प्रणीतं साख्यदर्शनं न प्राप्यते। तन्नाम्नैव प्रसिद्धं साङ्ख्यसूत्रं पञ्चमशतके केनचिदन्येन विदुषा निर्माय प्रचारितम्। कपिलस्य शिष्य आसुरिस्तस्य शिष्यः पञ्चशिखः। एषां ग्रन्था नोपलभ्यन्ते। ईश्वरकृष्णपर्यन्तं सांख्यशास्त्रीयपरम्परा लुप्तप्रायैव। ईश्वरकृष्णेन कारिकां प्रणीय शास्त्रमिदं पुनः सजीवतां गमितम्। अयं ग्रन्थो विक्रमप्रथमशतके निर्मितः। प्रसिद्धस्यास्य ग्रन्थस्य चीनभाषानुवादं षष्ठशतके परमार्थनामकविदुषा समपाद्यत। सोऽयमनुवादः सम्प्रत्यपि प्राप्यते। चीनभाषानुवादोऽयं 'सुवर्णसप्तति' नाम्नोच्यते। अस्य कारिकामयस्य साङ्ख्यशास्त्रादिमग्रन्थस्य बहूनि व्याख्यानानि जातानि, यथा—१. माठरस्य माठरवृत्तिः, २. गौडपादाचार्यस्य भाष्यम्, ३. अज्ञातकर्तृका युक्तिदीपिका, ४. वाचस्पतिमिश्रस्य सांख्यतत्त्वकौमुदी, ५. शङ्करस्य जयमङ्गला च।

कस्यचन विन्ध्यवासिन आचार्यस्य साङ्ख्यशास्त्राचार्यत्वेन कुमारिलो मतमुल्लिखितवान्। षोडशशतकोद्भवो विज्ञानभिक्षुस्तु सांख्यप्रवचनभाष्यं प्रणीय शास्त्रमिदं प्रतिष्ठापयाञ्चकार।

अतिप्राचीनस्यास्य दर्शनस्य सिद्धान्ताः कठ-छान्दोग्य-श्वेताश्वतरोपनिषत्सु प्राप्यन्ते। सांख्यस्योल्लेखार्हाः सिद्धान्ताः—

१. प्रकृतिः पुरुषश्चेति द्वे मूलतत्त्वे। अनयोरेव सम्बन्धाज्जगदुत्पद्यते। प्रकृतिर्जडा, पुरुषश्चेतनः, पुरुषसम्बन्धात्प्रकृतौ क्रिया। २. सत्कार्यवादोऽत्र समर्थितः।

पुरा साङ्ख्यमीश्वरवादि आसीत् साम्प्रतिकं तु निरीश्वरवाद्येव। प्रकृतिपुरुषाभ्यामेव जगदुत्पत्तौ समर्थयितुं शक्यायां वृथेश्वरकल्पनेति तदाशयः।

बुद्धप्रचारितमतस्योपरि साङ्ख्यदर्शनस्य महान् प्रभावो दृश्यते—दुःखस्य सत्ता, वैदिकक्रियाकलापस्यानभ्युपायतया गौणभावः, ईश्वरेऽनास्था, जगतः परिणामशीलता इत्यादयः सिद्धान्ता बौद्धैः साङ्ख्यदर्शनत एव गृहीताः। प्राची-

नस्यास्य दर्शनस्य सिद्धान्ता भगवता बुद्धेन स्वीयतया प्रचारिताः स्युरिति नाश्चर्यम् । अहिंसावादे तु बौद्धैः समं जैना अपि साङ्ख्यदर्शनस्याधमर्णाः ।

अत्र मते पञ्चविंशतिस्तत्त्वानि—१. मूलप्रकृतिः, २. महान्, ३. अहङ्कारः, शब्दस्पर्शरूपरसगन्धतन्मात्राणि पञ्चेत्यष्टौ, एकादशेन्द्रियाणि, ८+११=१९ पञ्चमहाभूतानि इति १९+५=२४, पञ्चविंशतितमः पुरुषश्च ।

## योगदर्शनम्

योगः प्राचीन इत्यत्र नास्ति कस्यापि वैमत्यम् । योगक्रिया नानासिद्धीनां जननीत्यत्रापि नास्ति विवादः । योगद्वारैव प्रागृषयः प्रतिभानैर्मल्यद्वाराऽतीतानागतव्यवहितानामपि प्रत्यक्षे प्रभवन्ति स्म । 'मोहञ्जोदरो' नामकस्थाने जाते शोधकार्येऽनेका योगक्रियाप्रतिकृतय प्राप्ता याभिरस्य शास्त्रस्य प्राचीनता समर्थ्यते । अद्वयतारकामृतनादाद्युपनिषत्सु योगस्य विस्तृतं विवेचनं प्राप्यते । प्राणविद्यानाम्ना श्रुतिष्वपि योगस्य प्रशंसा कृता । जैनानाम् 'अङ्गेषु' बौद्धानाम् 'त्रिपिटके' च योगस्य भूयसी चर्चा विद्यते । नाथपथावलम्बिनस्तु हठयोगस्य तादृशं प्रचारमकृषत, यत् ते योगिन इति संज्ञयैव ख्याताः ।

विक्रमसंवत्प्रारम्भतः शतकद्वयपूर्वं पतञ्जलिना योगरहस्यप्रकाशनार्थं योगसूत्राणी रचितानि । योगदर्शनमिदं पादचतुष्टयात्मकम् । प्रथमे पादे योगस्वरूपस्य विस्तृतं निरूपणम् । द्वितीयपादे क्रियायोगः तत्साधनानि यमादीनि च । तृतीयेऽन्तरङ्गं साधनजातं ध्यानधारणासमाधिरूपं संयमपदव्यपदेश्यम् । चतुर्थे च पादे जन्मौषधिमन्त्रतपःसमाधिजसिद्धिपञ्चकं, तत्सम्बद्धं कैवल्यरूपं परमप्रयोजनं च निरूपितम् । अत्र साङ्ख्याभिमतानि पञ्चविंशतिस्तत्त्वानि ईश्वरश्च षड्विंश इति षड्विंशतिस्तत्त्वानि । स चायमीश्वरः—,क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेषः' । अत्रदर्शने—संसारक्लेशैस्तप्यमानस्य पुरुषस्य आदरनैरन्तर्यदीर्घकालानुबन्धियमनियमाद्यष्टाङ्गयोगानुष्ठानेन परमेश्वरप्रणिधानेन च जातायां सत्त्वपुरुषान्यथाख्यातौ पञ्चक्लेशाः समूलं विनाश्यन्ते, आशया हन्यन्ते च । ततश्च पुरुषस्य कैवल्येनावस्थानम् एतदेव मोक्षस्वरूपम् ।

'हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः' इनि याज्ञवल्क्यदिशा हिरण्यगर्भ एव योगशास्त्रस्य प्रवर्त्तकः पतञ्जलिस्तु केवलं योगमनुशिष्टवान् ।

तृतीयशतकोत्पन्नः पुराणकर्त्तुर्व्यासाद्भिन्नः कश्चन व्यासो योगसूत्राणां भाष्यं निर्माय शास्त्रं प्रवर्त्तयामास । तदनन्तरं नवमशतकोत्पन्नो वाचस्पतिस्तत्त्ववैशारदीं नाम योगसूत्रभाष्यव्याख्यां निर्मितवान् । सोऽयं भाष्यग्रन्थः; भोजवृत्तिः, भावागणेशवृत्तिः, मणिप्रभा, योगचन्द्रिका, लघ्वी, बृहतीति षड्वृत्तयश्चेति योगदर्शनस्य ग्रन्थाः, कतिचन टीका अपि ।

## मीमांसादर्शनम्

मीमांसायाश्चर्चा वेदस्य संहितायामुपनिषदि ब्राह्मणग्रन्थेषु च प्राप्यते। सोऽयं वेदे प्रयुज्यमानो मीमांसाशब्दो विचारार्थः। कौषीतकिब्राह्मणे 'उदिते होतव्यमनुदिते होतव्यमिति मीमांसन्ते' एवंविध उल्लेखः। समीक्षापद्धतिरियं विचारनाम्नाऽपि प्रसिद्धा। न्यायशब्दोऽप्यत्रार्थे प्रयुज्यते जैमिनीयन्यायमाला-न्यायप्रकाशादौ।

किं मीमांसायाः प्रयोजनमित्यस्योत्तरमाह कुमारिलः श्लोकवार्त्तिके— 'धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम्' इति। बादरायणेन कर्मफल-दातेश्वरो मन्यते, परन्तु जैमिनिना मीमांसायां कर्मण एव फलदातृत्वं-स्वजन्यापूर्वद्वारा प्रदर्शितम्। यज्ञाः समाप्ताः फलं च कालान्तरभावि, तत्कथं यागाः फलं दद्युरतोऽपूर्वो नाम कोऽप्यतिशयः सञ्जायते कर्मभ्य इति स एव फल जनयतीति मीमांसाशास्त्राशयः। अत एव मीमांसका निरीश्वरवादिनो घुष्यन्ते।

शब्दनित्यता, बौद्धकृताक्षेपखण्डनम्, ईश्वरानङ्गीकार इति शास्त्रस्यास्य शिष्ट्यम्।

अतिप्राचीनमिदं दर्शनम्। जैमिनिना ७०० ई० पू० समये मीमांसासूत्राणि प्रणीतानि। व्याकरणमहाभाष्ये काशकृत्स्नरचिताया मीमांसाया उल्लेखः कृतो दृश्यते। आचार्ययोरुपवर्षभवदासयोर्वृत्तिग्रन्थाभ्यां सहैव काशकृत्स्नेरपि मीमांसा कालकुक्षौ तथा लीना यथाऽऽसां मतविशेषोऽपि नावाप्यते। तृतीयशतकोत्पन्नः शबरस्वामी द्वादशाध्यायविभक्तानि मीमांसासूत्राणि स्वभाष्येण योजयित्वा शास्त्रमिदं प्रवर्त्तयामास।

शाबरभाष्यस्य कुमारिलप्रभाकरमुरारिनामकास्त्रयो व्याख्यातारः त्रीणि मतानि प्रवर्त्तयामासुः। कुमारिलप्रवर्त्तितं मतं भट्टमतम्, प्रभाकरप्रवर्त्तितं मतं गुरुमतम्, तृतीयं च मुरारिप्रवर्त्तितं मिश्रमतं मुरारिमतं वा ख्यातम्।

(क) भाट्टमतप्रवर्त्तकः कुमारिलः सप्तमशतकोद्भवः। अनेन बौद्धाक्षेपेभ्यो मीमांसाशास्त्रस्य रक्षा कृता। अस्य मीमांसासूत्रप्रथमाध्यायप्रथमपादव्याख्या श्लोकवार्तिकनाम्ना प्रथमाध्यायद्वितीयपादात्तृतीयाध्यायपर्यन्तस्य व्याख्या च तन्त्रवार्त्तिकनाम्ना प्रसिद्धा।

कुमारिलात् परतो जातः मण्डनमिश्रो विधिविवेकभावनाविवेकविभ्रमविवे-कादीन् ग्रन्थान् जग्रन्थ। विधिविवेकस्य टीका वाचस्पतिमिश्रेण न्यायकणिका-नाम्ना कृता।

अनन्तरभाविनो भट्टमतपोषका आचार्याः—

१. पार्थसारथिमिश्रो द्वादशशतके मिथिलायां जनुरग्रहीत्। तेन शास्त्र-दीपिकानामात्युत्कृष्टो ग्रन्थः कृतः। अनेन तर्करत्नन्यायरत्नाकरनामकौ व्याख्या-ग्रन्थावपि प्रणीतौ।

२. माधवाचार्यः सायणाचार्यस्याग्रजः न्यायमालाविस्तरं नाम मीमांसाधिकरणग्रन्थं निर्ममौ। षोडशं शतकं प्रायोऽस्य कालः।

३. विश्वेश्वरभट्टो गागाभट्टापरनामा, यः शिवाजीमहोदयस्य राज्याभिषेकं कारितवान्, भाट्टचिन्तामणिनामकं मीमांसासूत्रव्याख्यात्मकं ग्रन्थं च विरचितवान्।

४. सप्तदशशतकोत्पन्नः खण्डदेवः भाट्टदीपिकां रचितवान्।

५. अप्पय्यदीक्षितस्य 'विधिरसायनम्' 'उपक्रमपराक्रमः' इमौ ग्रन्थौ प्रसिद्ध्यतः।

६. आपदेवेन न्यायप्रकाशनामकं प्रकरणं प्रणीतम्।

(ख) गुरुमतस्थापकः प्रभाकरः प्रसिद्ध्या कुमारिलस्य शिष्यः प्रतिभाप्रकर्षप्रसन्नेन गुरुणा गुरुरित्युपाधिना सत्कृतस्तन्नाम्नैवाप्रथत। आधुनिकानुसन्धानेन त्वस्य कुमारिलपूर्ववर्त्तिता सिद्ध्यति। प्रभाकरेण 'बृहती' नामकेन भाष्यव्याख्याग्रन्थेन स्वसिद्धान्तः प्रचारितः। एतन्मतस्य पुष्टिः शालिकनाथेन कृता येन बृहत्याष्टीका 'ऋजुविमला' स्वतन्त्रश्च ग्रन्थः 'प्रकरणपञ्जिका' लिखितौ। अस्य समयो दशमं शतकम्।

(ग) मुरारिमतस्य पोषकः कोऽपि ग्रन्थो नावाप्यते। केवलं ग्रन्थेषु तन्मतस्योल्लेख एव तत्सद्भावं प्रकटयति। गङ्गेशोपाध्यायेन न्यायतत्त्वचिन्तामणौ मुरारिमतमुल्लिखितमतोऽयं द्वादशशतके ततः पूर्वं वा जातो मन्तुं शक्यते। 'मुरारेस्तृतीयः पन्थाः' इति मिथिलायां प्रसिद्ध्यति, तेन मन्येऽयं मैथिल आसीत्।

## वेदान्तदर्शनम्

वेदान्तो वेदस्य अन्तः अवसानभागः इति विग्रहेण उपनिषद उच्यन्ते। उपनिषद एव प्राचीनैर्वेदान्तशब्देनोक्ताः। उपनिषदोऽनेकाः, तासु क्वचिदापाततो विरोधोऽपि प्रतिभासते। तस्यैव विरोधस्य दूरीकरणाय व्यासेन ब्रह्मसूत्राणि रचितानि। एतानि सूत्राणि पाणिनेरपि प्राचीनानि, यतः पाणिनिस्तानि—'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' इत्यत्र सूत्रे भिक्षुसूत्राणि इति पदेन सस्मार। 'ब्रह्मसूत्रपदैश्चैव' इति गीतायां ब्रह्मसूत्रपदेन तान्येव वेदान्तसूत्राणि स्मृतानीति श्रीधरस्वामी। तदेवं तानि सूत्राणि ६०० ई० पू० समयतः पूर्वमेव तत्रैव वा समये निर्मितानि। एषामेव ब्रह्मसूत्राणां व्याख्याभेदेन बहवो वेदान्तस्य शाखाः प्रचलिताः।

१. शङ्कराचार्यस्य अद्वैतमतप्रतिपादकं भाष्यं ७०० ख्रीष्टाब्दे सम्पन्नम्
२. भास्करस्य भेदाभेदमतप्रस्थानकं भाष्यं १००० ख्रीष्टाब्दे जातम्
३. रामानुजस्य विशिष्टाद्वैतोपपादकं भाष्यं ११४० ख्रीष्टाब्दे सम्पन्नम्
४. मध्वाचार्यस्य द्वैतमतप्रवर्त्तकं पूर्णप्रज्ञभाष्य १२३८ ख्रीष्टाब्दे सञ्जातम्
५. निम्बार्कस्य द्वैताद्वैतसमर्थकं वेदान्तपारिजातभाष्यं १२५० ख्रीष्टाब्दे जातम्

६. श्रीकण्ठस्य शैवविशिष्टाद्वैतभाष्यम् १२७० ख्रीष्टाब्दे प्रादुर्भूतम्
७. श्रीपतेः वीरशैवविशिष्टाद्वैतभाष्यं १४०० ख्रीष्टाब्दे निर्मितम्
८. वल्लभाचार्यस्य शुद्धाद्वैतप्रकाशकम् अणुभाष्यम् १५०० ख्रीष्टाब्दे जातम्
९. विज्ञनभिक्षोः अविभागाद्वैतवादि विज्ञानामृतभाष्यम् १६०० ख्रीष्टाब्दे उत्पन्नम् ।
१०. बलदेवस्य अचिन्त्यभेदाभेदबोधकं गोविन्दभाष्यम् १७२५ ख्रीष्टाब्दे सञ्जातम् ।

तदित्थं वेदान्तसूत्राणि स्वस्वमतसमर्थनायाचार्यैर्व्याख्यातानि । स्वमतपोषणायोपनिषदो गीतां भागवतञ्चापि तथैव व्याख्यातवन्तस्ते ते आचार्याः । रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषामाचार्याणां सिद्धान्तान् व्याख्यातुं तदनुयायिनोऽपि प्रावर्त्तन्त, तेनायं वेदान्तोऽतिविस्तृतः समजनि । एषु प्रागुल्लिखितेषु भाष्येषु श्रीकण्ठश्रीपत्योर्भाष्ये शैवमतं पोषयतः । विज्ञानभिक्षोर्भाष्यं सांख्यपक्षपाति । बलदेववल्लभाचार्यनिम्बार्कमध्वरामानुजाचार्याणां भाष्याणि तानि तानि वैष्णवमतानि प्रवर्त्तयन्ति । भास्करस्य भाष्यं सम्प्रदायासम्पृक्तम् । शङ्करस्यापि तथैव । सोऽयं वेदान्तद्रुमोऽतिविततशाखो नितान्तदुरारोहशिखरश्च सञ्जातः ।

इमे सर्वेऽपि वेदान्ता निम्नलिखितविषयेषु मतैक्यं धारयन्ति—

(क) अनादिरनुवर्त्तमानोऽयं संसारोऽपास्य एव ।
(ख) ज्ञानापेक्षया कर्मणो गौणत्वम्, कर्मणां चित्तशुद्धिजननद्वारा ज्ञाने सहायकत्वमात्रम्, व्यवहारे कर्मापेक्षा ।
(ग) ब्रह्मादीन्द्रियातीतवस्तुनिरूपणे वेदाः प्रधानतया प्रमाणानि, तदनुमोदिता एव तर्कास्तत्र प्रसरभाजः ।
(घ) उपनिषदो गीता ब्रह्मसूत्राणि चेति प्रस्थानत्रयी मतसाधनायावलम्बनम् ।
(ङ) ब्रह्मव्यापकं नित्यञ्चेतनञ्च ।
(च) ब्रह्मैव जगज्जन्मस्थितिप्रलयकारणं नान्यदचेतनं प्रकृत्यादि ।

इयति साम्ये सत्यपि वेदान्तेष्ववान्तरसिद्धान्ता भिद्यन्ते । तेषामेवावान्तरसिद्धान्तानां पोषणायाचार्याः परस्परं विप्रतिपद्यमाना दृश्यन्ते ।

शङ्करमते मायावादः प्रधानम् । वैष्णववेदान्ता मायाया भक्तिविरुद्धत्वान्मायावादस्य विरोधिनः सञ्जाताः ।

सोऽयं मायावादः संहितास्वपि बीजभावेनावस्थितः, शङ्करभगवत्पादस्य परमगुरुणा गौडपादाचार्येण माण्डूक्यकारिकायां निर्धारितस्वरूपतां प्रापितः शङ्करेण च प्रपञ्चितः । शङ्करमते ब्रह्म सत्यं जगन्मायाकल्पितमत एव चानिर्वचनीयम् । सत्ता त्रिविधा—पारमार्थिकी, व्यावहारिकी, प्रातिभासिकी च । परमार्थसत्त्वं ब्रह्मण एव जगतः सत्त्वं व्यावहारिकम् । शुक्तिरजतादेश्च सत्त्वं प्रातिभासिकम् । ब्रह्मणो द्वयी विधा, निर्गुणं सगुणञ्च । तत् मायाशबलं ब्रह्म

सगुणं तदेवेश्वरः, निर्गुणं ब्रह्म तु माययाऽदृष्टपूर्वम्। शङ्करमते ज्ञानादेव मुक्तिः कर्माणि चित्तशुद्धावुपयोगीनि। वैष्णववेदान्तास्तु—ईश्वर एव सर्वगुणशाली, स एव ब्रह्मापि। जीवो जगच्च तस्यैव प्रकारौ। जीवजगद्रूपप्रकारद्वयविशिष्ट ईश्वर एक एवेति विशिष्टाद्वैतमतम्। निम्बार्कमते—जीवेश्वरौ व्यवहारकाले भिन्नौ, अत एवेदं द्वैताद्वैतमतमुच्यते। माध्वमते जीवेश्वरयोरैक्यं कदापि नोपपद्यते। यत्रान्यमतानि अवस्थाभेदेनैक्यं स्वीकुर्वन्ति जीवेश्वरयोस्तत्र माध्वाः सदा भेदवादिनः। माध्वा ईश्वरं जगतो निमित्तकारणमभ्युपगच्छन्ति नोपादानकारणम्। अत एवेदं द्वैतमतम्।

वल्लभाचार्या मायावादं प्रतिषेधन्तोऽपि अद्वैतं स्वीकुर्वन्ति अतस्तदीयं मतं मायामिश्रितत्वरहिततया शुद्धाद्वैतमतमुच्यते।

चैतन्यसम्प्रदायो माध्वसम्प्रदायस्यैवाङ्गभूतः, परन्त्वनयोर्मतयोर्दर्शनयोर्महान् भेदः। चैतन्यमते इश्वरजीवयोर्भेदोऽभेदश्चेत्युभयं विद्यते परन्तदचिन्त्यम्। अत एवायं वादोऽचिन्त्यभेदाभेदवादनाम्ना व्यपदिश्यते।

सर्वेषामेव वैष्णवदर्शनानां निम्नलिखिता समता—

१. भक्तिरेव मोक्षसाधनम्
२. अनन्तगुण ईश्वर एव ब्रह्म
३. चेतनजीवजडजगतोः सत्यता तथैव यथेश्वरस्य
४. जीवेश्वरभेदः सनातनः
५. जीवोऽणुरनन्तसंख्यश्च
६. विष्णुरेवेश्वरः अत एव तदवतारपूजां वैष्णवदार्शनिकाः प्रचारितवन्तः।

रामानुजाचार्यः प्राचीनमाध्वसम्प्रदायश्च लक्ष्मीनारायणोपासनां पोषयतः। निम्बार्कवल्लभचैतन्यसम्प्रदायाः राधाकृष्णोपासनासमर्थकाः।

शङ्कराचार्यस्य परमगुरवो गौडपादाचार्याः माण्डूक्यकारिकानामके ग्रन्थे यद्बीजमवाप्सुस्तदेव शाङ्करभाष्यनाम्ना व्यकसत्, ७०० खीष्टाब्दे शङ्कराचार्येण तद्भाष्यं प्रणीतम्। अत्र मते सुरेश्वराचार्यस्य वार्त्तिकग्रन्थः, पद्मपादाचार्यस्य पञ्चपादिका, प्रकाशात्मयतिप्रणीतो विवरणग्रन्थः पञ्चपादिकाव्याख्यात्मकः, सर्वज्ञात्ममुनेः सङ्क्षेपशारीरकम्, श्रीहर्षस्य खण्डनखाद्यञ्चेत्यादयो बहवो ग्रन्थाः प्रसिद्धाः। नव्यन्यायभाषायां लिखिता अद्वैतसिद्ध्यादयो ग्रन्था अपि शास्त्रस्यास्य तत्त्वं सूक्ष्मतां नयन्ति।

वैष्णवदर्शनेषु रामानुजदर्शने रामानुजप्रणीतं श्रीभाष्यम्, सुदर्शनस्य श्रीभाष्यटीका श्रुतप्रकाशिका, वेङ्कटनाथस्य तत्त्वटीकातत्त्वमुक्ताकलापौ, गीतातात्पर्यार्थचन्द्रिका चेत्यादयो ग्रन्थाः प्राचीनाः, शतदूषणीप्रभृतयश्च नवीनपद्धत्या रचिता ग्रन्थाः।

निम्बार्काचार्यमते तदीयं पारिजातभाष्यम्, श्रीनिवासाचार्यस्य वेदान्तकौस्तुभनाम्नी तट्टीका, केशवभट्टस्य कौस्तुभप्रभानाम्नी तट्टीका च प्रसिद्धाः।

पुरुषोत्तमाचार्यकृतः श्रुत्यन्तसुरद्रुमः, देवाचार्यस्य सिद्धान्तजाह्नवी चात्र दर्शने प्रौढतमौ ग्रन्थौ ।

माध्वमते—मध्वाचार्येण स्वयं प्रस्थानत्रयीभाष्यं लिखितं, तद्व्याख्या जयतीर्थेन कृता । व्यासतीर्थस्य न्यायामृतमप्यत्र दर्शने नितान्तमौलिको ग्रन्थः ।

वल्लभमते वल्लभाचार्यस्याणुभाष्यं, भागवतस्य सुबोधिनी, विट्ठलनाथस्य विद्वन्मण्डनम्, कृष्णचन्द्रस्य भावप्रकाशिका, गिरिरधस्य शुद्धाद्वैतमार्त्तण्डादयो ग्रन्थाः प्रथिताः ।

चैतन्यसम्प्रदाये बलदेवविद्याभूषणस्य गोविन्दभाष्यम्, श्रीरूपगोस्वामिनः लघुभागवतामृतम्, उज्ज्वलनीलमणिः, भक्तिरसामृतसिन्धुश्च, सनातनगोस्वामिनः बृहद्भागवतामृतवैष्णवतोषिणीहरिभक्तिविलासाः, जीवगोस्वामिनः षट्सन्दर्भः, इति ग्रन्था: स्तम्भभूताः ।

तदेवं सङ्क्षिप्य वर्णितो वेदान्तसमुदयः । भारतीयं दर्शनं वेदान्तपर्यवसायि, यतोऽत्र सर्वत्र दर्शनेषु क्रमविकास इव प्रतीयते । प्रथमं कणादस्यारम्भवादः तदनन्तरं गौतमस्य परमाणुवादः, तत्परतोऽपि सांख्यस्य परिणामवादः, सर्वान्ते वैदिको विवर्त्तवादः । सोऽयं विकासो वेदान्तपर्यवसायितां बोधयति दर्शनानाम् ।



# उपसंहारः

संस्कृतसाहित्यस्य प्रारम्भतः सम्प्रति यावज्जातस्य विकासस्यात्र सङ्क्षिप्य चर्चा कृता । पाठकाः शक्नुवन्ति भावयितुं यद्या धारा वैदिकसाहित्यहिमवतो निर्गता प्रायेण ५०० ई० पू० समये, सा प्रवहन्तीवायाता द्वादशं शतकं यावत् ।

एवं हि दृश्यते नदीष्वपि, कुतोऽपि पर्वतादवतरन्ती काचन नदी यदा तुङ्गादद्रिशिखरादवनीमवरोहति तृषितानाप्याययितुञ्च पुर उपसर्त्तुमिच्छति, तदा गण्डशैलासममहीप्रभृतिप्रभवप्रतिबन्धेन रुद्धप्रसरेव भूत्वा भूयो वेगेन प्रवहति, पुनश्च क्वचन प्रदेशे केनापि महीरुहा उन्नतभूखण्डेन वा कियन्तं कालं यावन्निरुध्यते, परं पूरोत्सेधे जाते कुतोऽपि मार्गान्तराद् भूयः सा पुरस्सरति, एवमग्रेऽपि । तथैव वेदहिमवत्तो निर्गताया अस्याः संस्कृतसाहित्यस्य पावनधारायाः प्रवाहेऽपि पश्यामः ५०० ई० पू० समये या काव्यधारा निर्गता सा संवत्सरशतद्वयं यावदवरुद्धप्रसरेव स्थित्वा महता वेगेन कालिदासाश्वघोषादिकाव्यधाराभावेन जगन्ति प्लावयितुं प्रवृत्ता । ततः केनापि कारणेन निरुद्धप्रसरा सा धारा माघभारविबाणसुबन्धुभवभूतिप्रभृतिकवितारूपेण षष्ठशतकादष्टमं शतकं यावदविच्छिन्नधारं वहति स्म । पुनरपि मन्दीभूतवेगाऽऽ

विततस्वरूपाया रीतिरूपतटवेष्टितायाश्च तस्या धाराया वेगः स्तैमित्यमिव यावद्याति तावदेव श्रीहर्षस्य कविता तां धारां द्विगुणवेगतामनयत्। ततः पुनरपि तस्या वेगः स्थिरीभूत इव जातः। यथा कनखलादाविर्भूताया गङ्गाया वेग उपपाटलिपुत्रं मन्दायते, कामं तरङ्गा अधिकतां भजन्तां, तथैवास्याः कविताधाराया वेगो मन्दतां गतः। अत्रावसरे जाता महती काव्यसृष्टिः प्लावितं समधिकं क्षेत्रं परमुग्रा गतिरवरुद्धेव। ततः पुनरेकदा षोडशशतकसमीपेऽस्यां धारायां वेग इवायातो यदा पण्डितराजजगन्नाथनीलकण्ठदीक्षितादयो दाक्षिणात्याः स्वकाव्यानि प्रकटयामासुः। सोऽयं प्रवाहः शिथिलतां गतोऽपि तत्रैव समाप्त इति नाशङ्कनीयम्। तदनन्तरमपि समये समये काव्यान्यसृज्यन्त।

यवनराजगणकाले षोडशशतकादष्टादशशतकं यावदपि बहवः कवयः संस्कृतसरस्वत्याः सेवायां सावधानतां प्रकटीकृतवन्तः। तेषु जगन्नाथस्य विषये प्रागेव लिखितम्। तदन्येऽपि सन्ति बहवः उल्लेखयोग्याः यथा

१. भानुमिश्रः भानुदत्तमिश्रो वा (षोडशशतकम्)—अयं मिथिलास्थः कविराजो रसमञ्जरीरसतरङ्गिणीनामकौ नायिकाभेदग्रन्थौ, गीतगौरीशं नाम गीतिकाव्यञ्च प्रणीय सरस्वत्या आराधनां कृतवान्। एतत्सन्ततिः सम्प्रत्यपि मिथिलायां जीवति। इदमीयमेकमेव पद्यमस्य कविताशैलीं गमयितुं पर्याप्तं भविष्यति—

> 'आत्मीयं चरणं दधाति पुरतो निम्नोन्नतायां भुवि
> स्वीयेनैव करेण कर्षति तरोः पुष्पं श्रमाशङ्कया।
> तल्पे किञ्च मृगत्वचा विरचिते निद्राति भागैर्निजै-
> रन्तःप्रेमभरालसा प्रियतमामङ्गे दधानो हरः॥'

सप्तदशशतके सङ्गृहीतेषु सुभाषितग्रन्थेषु भानुदत्तमिश्रस्य सार्धशतश्लोकाः प्राप्यन्ते येन तदीयकाव्यलोकप्रियता प्रतीता भवति।

२. अकबरीय-कालिदासो गोविन्दभट्टः–१५५२-१५९२ ई० समये वर्त्तमानस्य रीवांनरेशस्य रामचन्द्रस्य प्रशंसायां लिखितं गोविन्दभट्टस्य 'रामचन्द्रयशःप्रशस्ति' नामकं काव्यमपूर्णमेव प्राप्तं भवति। इदमपूर्णमपि काव्यमस्य कवेर्महाकवित्वं गमयितुमलम्। अकबरस्याश्रये स्थितिरप्यस्य कवेर्महत्त्वं सूचयति। अनेन स्फुटपद्यान्यपि बहूनि प्रणीतानि।

३. पुण्डरीकविट्ठलः (१५७६ ई०)—अनेन रागमञ्जरीरागमालानामकौ ग्रन्थौ खानदेशाधिपस्य नवाब-बुरहानशाहस्याश्रये स्थित्वा लिखितौ।

४. हरनारायणमिश्रः वंशीधरमिश्रश्च—इमौ 'शाहजहाँ' नामकस्य यवनसम्राजः समये प्रसिद्धौ तदाश्रितौ च कवी आस्ताम्। अनयोः कृतयस्तु नोपलभ्यन्ते।

औरङ्गजेबनाम्नः प्रसिद्धस्य यवनसम्राजो मातुलस्य सेनापतेश्च शाइस्ताखांमहोदयस्य प्रसन्नतायै चतुर्भुजकविः रसकल्पद्रुमन्नाम ग्रन्थं प्रणीतवान्। अस्य ग्रन्थस्य प्रणयनं १६४५-१६८९ ई० जातम्।

## उपसंहारः

औरङ्गजेबस्य पुत्रे महम्मदशाहे शासनाधिरूढे सति लक्ष्मीपतिर्नाम कविर्लिपिमालिकां नाम चम्पूग्रथं प्रणीतवान्, यत्र मुहम्मदशाहस्य राज्यारोहणप्रारम्भिकघटनावल्यः साधु वर्णिताः । अत्र ग्रन्थे ऐतिहासिकसामग्री अपि प्रचुरमात्रायां लभ्यते ।

राधावल्लभसम्प्रदायाचायण हितहरिवंशेन राधासुधानिधिनामकगीतिकाव्यस्य प्रणयनमत्रैव काले कृतम् ।

दक्षिणभारतेऽप्यस्मिन् शतके साहित्यसृष्टिर्जाता । तंजोरनामकस्थानस्य राज्ञः शाहजीप्रथमस्य शासनकाले १६८४–१७११ ई० समये रामभद्रदीक्षितचोक्कनाथप्रभृतयः कवयः काव्यानि जग्रन्थुः । तस्यैव शतकस्य प्रारम्भे वेङ्कटकृष्णदीक्षितेन नटेशविजयं रामचन्द्रविजयञ्चेति काव्यद्वयम्, महादेवकविना अद्भुतदर्पणः शुकसन्देशञ्चेति काव्यद्वयम्, नल्लादीक्षितेन सुभद्रापरिणयशृङ्गारसर्वस्वे नाम नाटकभाणग्रन्थौ, यज्ञनारायणदीक्षितेन साहित्यरत्नाकरः, उद्दण्डकविना मल्लिकामारुतम्, शिङ्गभूपालेन रसार्णवसुधाकरः कृष्णरायराजेन जाम्बवतीकल्याणम्, शरभोजिना राघवचरितम्, वामनभट्टेन शृङ्गारभूषणम्, भूमिनाथेन धर्मविजयचम्पूः च प्राणायिषत ।

छत्रपतिशिवाजीमहोदयस्य राजत्वकाले हरिकविना शम्भुराजचरितं नाम काव्यं १६८५ खोष्टाब्दे प्रणीतम् ।

तदनन्तरं भारते साम्राज्यपरिवर्त्तनमजायत, वैदेशिकं शासनम् प्रारभत, ईष्टइण्डियाकम्पनी स्वं शासनं प्रचारयामास । तत्रापि काले बाणेश्वरभट्टाचार्येण विवादार्णवसेतुनामकं पुस्तकं प्रणीतं येन अंग्रेजन्यायाधीशाः शासने उपकृता अभूवन् । अस्मिन्नेव समये विश्वेश्वरेण पर्वतीयेनार्यासप्तशत्यपरा प्रणीता ।

इतः परतो विक्टोरिया नामकशासिकायाः काले कविताक्षेत्रस्यापेक्षया व्यवस्थितशास्त्राध्ययनाध्यापनक्षेत्रे महती उन्नतिरजायत कलकत्ता-वाराणसी-लाहौरप्रभृतिस्थानेषु संस्कृतमहाविद्यालयाः स्थापिता येषु शास्त्रीयमध्ययनं विधिवद् व्यधीयत ।

अस्मिन् समये उत्तरभारते बहवो विद्वांसः काव्यशास्त्रप्रणेतारोऽभवन्, येषु दुःखभञ्जनशुक्ल-गुमानीपन्तप्रभृतयो मुख्याः ।

तदनन्तरं विंशशतकस्यारम्भकाले बहवः कवयस्तानि तानि काव्यानि प्रणीतवन्तो येषु बच्चाझाशर्मणः सुलोचनामाधवम्, हर्षनाथशर्मणो राधानयनद्विशतीखण्डकाव्यम्, वङ्गीयस्य पञ्चाननस्यामरमङ्गलं नाम नाटकम्, झोपाह्वस्य जीवनाथस्य प्रभुनारायणचरितम्, चन्द्रशेखरस्य राज्ञीचरितप्रकाशकाव्यम्, गङ्गाधरशास्त्रिणोऽलिविलासि संलापकाव्यम् इत्यादिकानि काव्यानि प्रथन्ते ।

तदनन्तरभवेषु कविषु जयपुरीयो मथुरानाथशास्त्री, मैथिलो बदरीनाथझा, वङ्गीयो हरिदाससिद्धान्तवागीशः, महाराष्ट्रीया क्षमारावमहोदया च प्रसिद्धाः कवयः ।

सेयं संस्कृतकाव्यधाराऽविच्छिन्ना चिरायानुवृत्ताऽग्रेपि सततं शतधारतामुपैतु । शमिति ।

यथा वसन्तः पुष्पाणि विकासयति सर्वतः ।
सञ्चित्य तानि कुरुते मालाकारः स्रजं शुभाम् ॥
तथैव पण्डितैरन्यैर्भाषासु विविधास्वपि ।
ग्रथितं वृत्तमादाय ग्रन्थोऽयं रचितो मया ॥
यच्च क्वचिद् वस्तु नूत्नं न्यासि तत् सूत्रमात्मनः ।
मालाकारस्य मन्येऽहं किमितोऽधिकमुच्यताम् ॥

———

यो जातो धरणीसुरान्वयसरोहंसात् प्रसर्पद्यशो-
ज्योत्स्नाद्योतितदिङ्मुखान्मधुरिपुध्यानैकबद्धाशयात् ।
मिश्राख्यान्मधुसूदनाज्जयमणौ सीमन्तिनीनां मणौ
तस्य श्रीयुतरामचन्द्रसुधियो ग्रन्थः प्रसिद्ध्यादयम् ॥ १ ॥
षट्क्षोण्यम्बरबाहुसम्मितशरद्याशातिथौ मार्गगे
चन्द्रे पुष्यति सोमसूनुदिवसे श्रीशारदानुग्रहात् ।
सम्राड्धर्मसमाजसंस्कृतमहाविद्यालये पूर्णता-
मानीतोऽयमुमामहेश्वरपदाम्भोजेषु विश्राम्यतु ॥ २ ॥
'विद्वांसो वसुधातले परवचःश्लाघासु वाचंय्यमा'
उक्त्वैतद्विमुखीभवामि न मनागालोचनावर्त्मनः ।
ते हि स्वर्णपरोक्षणैकनिकषा निष्पक्षपातां दृशं
प्रक्षिप्यात्मगुणोचितादरपदं कुर्युर्ममेमां कृतिम् ॥ ३ ॥
छिद्रान्वेषणमात्रसज्जधिषणानप्यत्र दोषान् बहून्
ग्रन्थे दर्शयतो न मत्सरितया निन्दामि किन्त्वर्थये ।
निर्दोषेण पथा प्रशस्तरचनां निर्माय काञ्चित् कृतिं
लोकेभ्यः समुपाहरन्तु भविता भूयो यशोऽनेन यः ॥ ४ ॥
मान्यान् यानहमाद्रिये नतशिरास्ते ते सखायश्च मे
येषामाग्रहतो विदन्नपि निजां शक्तिं प्रवृत्तोऽभवम् ।
ग्रन्थेऽस्मिन्नहि तैरियं मम कृतिः कार्यान्यथा दृक्पदं
सर्वानिन्दितकीर्त्तिलाभसुभगं भाग्यं कुतोऽस्मादृशाम् ॥ ५ ॥

❀

इति मुजफ्फरपुरमण्डलान्तःपातिपकडीग्रामवासिना धर्मसमाज-
संस्कृतमहाविद्यालयप्राध्यापकश्रीरामचन्द्रमिश्रशर्मणा
प्रणीतः संस्कृतसाहित्येतिहासः समाप्तः ।

———

## नवीनतम चौखम्बा प्रकाश[illegible]

( शताधिक नवीन प्रकाशन के सविवरण सूचीपत्र नि

हिन्दी खण्डनखण्डखाद्य—( [illegible]रीसहित ) व्या० [illegible]
हिन्दी न्यायदर्शन—( वात्स्यायनभाष्यसहित ) व्या०—[illegible]
हिन्दी वैशेषिकदर्शन—( उपस्कार सहित ) व्या०—[illegible]
हिन्दी सिद्धान्तकौमुदी—व्या०—प्रो० बालकृष्ण पंचो[illegible]
हिन्दी गाथासप्तशती—व्या०—जगन्नाथ पाठक । बृहत्[illegible]
हिन्दी धन्वन्तरिजीवित—( [illegible] सहित ) व्या०—राधे[illegible]
हिन्दी त्रिकाण्ड [illegible]—व्या०—पन्नालाल जैन
हिन्दी वेतालपंचविंशति—व्या०—दामोदर झा । कथासार [illegible]
हिन्दी राजनीतिरत्नाकर—चण्डेश्वर कृत । व्या०—वाचस्पति[illegible]
अमरकोष[illegible]—[illegible] 'मणिप्रभा' हिन्दी व्याख्या सहित 35—00
काशिकावृत्तिः—'प्रकाश' हिन्दी व्याख्यासहित । प्र० ब्रह्मदत्तजिज्ञासु:
द्वि० भाग यन्त्रस्थ 1—4 अध्याय प्रथम भाग 1[illegible]—00
प्रबन्धरत्नाकरः—डॉ० रमेशचन्द्र शुक्ल । सर्वोच्च निबन्ध ग्रन्थ 16—50
नवीन अनुवादचन्द्रिका—डॉ० रमाकान्तत्रिपाठी । सरलतमसंस्करण 3—00
अभिज्ञानशाकुन्तल : एक अध्ययन—श्री काशीनाथ द्विवेदी 4—00
हिन्दी युधिष्ठिर विजय—व्या०—ब्रजेशचन्द्र श्रीवास्तव 12—50
ललितमाधवं नाटकम्—रूपगोस्वामि कृतं । हिन्दीव्याख्या सहित 15—00
काश्मीर शैवदर्शन और कामायनी—डॉ० भँवरलाल जोशी 20—00
संस्कृत नाट्यसिद्धान्त—डॉ० रमाकान्त त्रिपाठी 10—00
संस्कृत महाकाव्य की परम्परा—डॉ० केशवराव मुसलगांवकर 25—00
संस्कृत साहित्य में नीतिकथा का उद्गम एवं विकास—डॉ० कवठेकर 20—00
कवियों की लोकदृष्टि—पं० शिवशंकर त्रिपाठी 10—00
न्यायपरिचय—( म० म० फणिभूषण तर्कवागीश ) हिन्दी रूपान्तर 10—00
बौद्धन्याय—( [illegible] ) हिन्दी रूपान्तर । प्र० भाग 30—00
आपस्तम्बधर्मसूत्रम्—(उज्ज्वलावृत्तिसहित) 'प्रकाश' हिन्दी व्याख्या 20—00
धर्मसिन्धुः—सटीक 'धर्मदीपिका' हिन्दी व्याख्या सहित 25—00
शुक्रनीतिः—हिन्दी व्याख्या सहित । प्र० पण्डितराज राजेश्वरशास्त्री 12—50
याज्ञवल्क्यस्मृतिः—( मिताक्षरासहित ) 'प्रकाश' हिन्दी व्याख्या 20—00

प्राप्तिस्थानम्—चौखम्बा विद्याभवन, चौक, वाराणसी–1